# तर्कसंग्रहः




मूलसहितः, टीकात्रयोपेतः


गङ्गा-टीका-रचयिता

पं० शिवदत्त मिश्र गौड़ः, न्यायाचार्यः

न्याय-विभागे प्रधानाध्यापकः

गवर्नमेन्ट संस्कृत कालेज, काशी





प्रथमं संस्करणम् — मूल्यं द्वादशाणकम् — १९९१

पं० रघुनन्दन प्रसाद शुक्ल

संस्कृत पुस्तकालय

कचौड़ीगली, बनारस सिटी ।

॥ श्रीः ॥

१ निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥

२ द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तपदार्थाः ।

३ तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।

४ रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्काराश्चतुर्विंशति गुणाः ।

५ उत्क्षेपणाऽपक्षेपणाऽऽकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ।

६ परमपरं चेति द्विविधं सामान्यम् ।

७ नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।

---

१ मया-अन्नंभट्टेन—तर्कसंग्रहः क्रियते । किं कृत्वा हृदि विश्वेशं निधाय नितरां धारयित्वा । पुनः किं कृत्वा गुरोः वन्दनम् विधाय कृत्वेत्यर्थः । कस्मै प्रयोजनाय बालानां सुखबोधाय । सुखेन बोधः सुखबोधः तस्मै इत्यन्वयः ।

२ अभिधेयत्वं ज्ञेयत्वं प्रमेयत्वं वा पदार्थसामान्यलक्षणम् ।

३ द्रव्यत्वजातिमत्वं गुणवत्वं वा द्रव्यस्य लक्षणम् ।

४ गुणत्वजातिमत्वं गुणस्य लक्षणम् ।

५ कर्मत्वजातिमत्वं कर्मणो लक्षणम् ।

६ नित्यत्वे सति अनेकसमवेतत्वं जातेर्लक्षणम् ।

७ निःसामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं विशेषस्य लक्षणम् ।

१ समवायस्त्वेक एव।

२ अभावश्चतुर्विधः । प्रागभाव-प्रध्वंसाभावोऽत्यन्ताभावोऽ-न्योन्याभावश्चेति ।

३ तत्र गन्धवती पृथिवी। सा द्विविधा। नित्याऽनित्या च। नित्या परमाणुरूपा । अनित्या कार्यरूपा । पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं, घ्राणं नासाग्रवर्त्ति। विषयो मृत्पाषाणादिः।

४ शीतस्पर्शवत्य आपः । ता द्विविधाः, नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। पुनस्त्रिविधाः। शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रस-ग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः।

५ उष्णस्पर्शवत्तेजः। तद् द्विविधम्। नित्यमनित्यं च। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधम्। शरीरे-न्द्रियविषयभेदात्। शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्त्ति। विषयश्चतुर्विधः। भौमदिव्योदर्याकरजभेदात्। भौमं वन्ह्यादिकं. अविन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्य्यम्। आकरजं सुवर्णादि।

६ रूपरहितस्पर्शवान् वायुः। स द्विविधः। नित्योऽनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। पुनस्त्रिविधः।

---

१ नित्यत्वे सति संबन्धिभिन्नत्वे सति संबन्धत्वं समवायस्य लक्षणम्।

२ भावभिन्नत्वं अभावस्य लक्षणम्।

३ गन्धवत्वं पृथिव्याः लक्षणम्।

४ शीतस्पर्शवत्वं अपां लक्षणम्।

५ उष्णस्पर्शवत्वं तेजसो लक्षणम्।

६ रूपरहितत्वे सति स्पर्शवत्वं वायोर्लक्षणम्।

शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्त्ति। विषयो वृक्षादिकम्पनहेतुः, शरीरान्तः संचारी वायुः प्राणः। सचैकोऽप्युपाधिभेदात् प्राणापानादि संज्ञां लभते ।

१ शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ।

२ अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ।

३ प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका नित्या विभ्वी च ।

४ ज्ञानाधिकरणमात्मा । स द्विविधः । परमात्मा जीवात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मा एक एव । जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च ।

५ सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ।

६ चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम् । पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले, भास्वरशुक्लं तेजसि ।

७ रसनाग्राह्यो गुणो रसः । स च मधुराऽऽम्ललवणकटुकषाय-

---

१ समवायेन शब्दत्वं आकाशस्य लक्षणम् ।

२ अतीतादिव्यवहारहेतुत्वं कालस्य लक्षणम् ।

३ प्राच्यादिव्यवहारहेतुत्वं दिशो लक्षणम् ।

४ समवायसंबन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणतावत्वमात्मनो लक्षणम् ।

५ सुखाद्युपलब्धिसाधनत्वे सति इन्द्रियत्वं मनसो लक्षणम् ।

६ चक्षुर्मात्रजन्यज्ञानविषयत्वे सति गुणत्वं रूपस्य लक्षणम् ।

७ रसनेन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं रसस्य लक्षणम् ।

तिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः । पृथिव्यां षड्विधः । जले मधुर एव ।

१ घ्राणग्राह्यो गुणो गन्धः । स द्विविधः । सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ।

२ त्वगिन्द्रियमात्रमात्रग्राह्यो गुणः स्पर्शः । स त्रिविधः । शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्राऽपाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ।

३ एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकन्तु सर्वत्राऽनित्यमेव ।

४ मानव्यवहारासाधारणंकारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम् । अणु महत् दीर्घं ह्रस्वं चेति ।

५ पृथग्व्यवहाराऽसाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ।

६ संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ।

७ संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ।

---

१ घ्राणेन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं गन्धस्य लक्षणम् ।

२ त्वगिन्द्रियमात्रजन्यज्ञानविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणम् ।

३ एकत्वादिव्यवहारहेतुत्वं संख्यायाः लक्षणम् ।

४ मानव्यवहारासाधारणकारणत्वं परिमाणस्य लक्षणम् ।

५ पृथग्व्यवहारासाधारणकारणत्वं पृथक्त्वस्य लक्षणम् ।

६ संयुक्तव्यवहारासाधारणकारणत्वं संयोगस्य लक्षणम् ।

७ संयोगनाशकत्वे सति गुणत्वं विभागस्य लक्षणम् ।

१ परापरव्यवहाराऽसाधारणकारणे परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते द्विविधे । दिक्कृते कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ।

२ आद्यपतनाऽसमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ।

३ आद्यस्यन्दनाऽसमवायिकारणं द्रवत्वम् । पृथिवीजलतेजोवृत्ति । तद् द्विविधम् । सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ।

४ चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ।

५ श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधः । ध्वन्यात्मको वर्णात्मकश्चेति । ध्वन्यात्मको भेर्यादौ । वर्णात्मकश्च संस्कृतभाषादिरूपः ।

६ सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा, स्मृतिरनुभवश्च ।

७ संस्कारमात्रजन्यं ज्ञानं स्मृतिः ।

---

१ परव्यवहारासाधारणकारणत्वं परत्वस्य लक्षणम् । एवं अपरव्यवहारासाधारणकारणत्वमपरत्वम् ।

२ आद्यपतनाऽसमवायिकारणत्वं गुरुत्वस्य लक्षणम् ।

३ आद्यस्यन्दनाऽसमवायिकारणत्वं द्रवत्वस्य लक्षणम् ।

४ चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् ।

५ श्रोत्रेन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं शब्दस्य लक्षणम् ।

६ सर्वव्यवहारहेतुत्वे सति गुणत्वं बुद्धेर्लक्षणम् ।

७ संस्कारमात्रजन्यत्वे सति ज्ञानत्वं स्मृतेर्लक्षणम् ।

१ तद्भिन्नं ज्ञानमनुभवः। स द्विविधः। यथार्थोऽयथार्थश्च।
२ तद्वति तत्प्रकारकोऽनुभवो यथार्थः। सैव प्रमेत्युच्यते।
३ तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः। सैवाऽप्रमेत्युच्यते।

यथार्थानुभवश्चतुर्विधः। प्रत्यक्षानुमित्युपमितिशाब्दभेदात्।
तत्करणमपि चतुर्विधम्। प्रत्यक्षानुमानोपमानशब्दभेदात्।

४ असाधारणं कारणं करणम्।
५ कार्यनियतपूर्ववृत्ति कारणम्।
६ कार्यं प्रागभावप्रतियोगि।

कारणं त्रिविधम्। समवाय्यसमवायिनिमित्तभेदात्।

७ यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य। पटश्च स्वगतरूपादेः।

---

१ तदभिन्नत्वे सति ज्ञानत्वं अनुभवस्य लक्षणम्।
२ तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणम्।
३ तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं अयथार्थानुभवस्य लक्षणम्।
४ व्यापारवत्वे सति कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावत्वं करणस्य लक्षणम्।
५ अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वं कारणस्य लक्षणम्।
६ प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्।
७ समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावन्धावच्छिन्नकारणत्वम् समवायिकारणस्य लक्षणम्।

१ कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारण-मसमवायिकारणम्। यथा तन्तुसंयोगः पटस्य। तन्तुरूपं पटगतरूपस्य।

२ तदुभयभिन्नं कारणं निमित्तकारणम्। यथा तुरीवेमादिकं पटस्य। तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम्।

३ तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्।

४ ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्।

५ इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद् द्विविधम्। निर्विकल्पकं सविकल्पकं चेति।

६ निष्प्रकारकं ज्ञानं निर्विकल्पकम्।

७ सप्रकारकं ज्ञानं सविकल्पकम्। यथा डित्थोऽयम्। ब्राह्मणोऽयम्। श्यामोऽयमिति।

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः। संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति।

---

१ कार्येण सह एकस्मिन्नर्थे समवेतत्वे सति कारणत्वं, कारणेन वा सह एकस्मिन्नर्थे समवेतत्वे सति कारणत्वं असमवायिकारणस्य लक्षणम्।

२ समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणम्।

३ प्रत्यक्षज्ञानासाधारणकारणत्वं प्रत्यक्षप्रमाणस्य लक्षणम्।

४ ज्ञानाकरणकत्वे सति ज्ञानत्वं प्रत्यक्षप्रमायाः लक्षणम्।

५ इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमायाः लक्षणम्।

६ प्रकारताशून्यत्वे सति ज्ञानत्वं निर्विकल्पकत्वम्।

७ प्रकारतानिरूपकत्वे सति ज्ञानत्वं सविकल्पकत्वम्।

चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः। घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः। चक्षुःसंयुक्ते घटे रूपस्य समवायात्। रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात्। श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवर्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात्। शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्। अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः। घटाभाववद् भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्। एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्। तत्करणमिन्द्रियं तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।

इति तर्कसंग्रहे प्रत्यक्षपरिच्छेदः॥

१ अनुमितिकरणमनुमानम्।
२ परामर्शजन्यं ज्ञानमनुमितिः।
३ व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः, तज्जन्यं पर्वतो वन्हिमानिति ज्ञानमनुमितिः।
४ यत्र यत्र धूमस्तत्र तत्र वन्हिरिति साहचर्यनियमो व्याप्तिः।

---

१ अनुमितिकरणत्वमनुमानस्य लक्षणम्।
२ परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम्।
३ व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वं परामर्शस्य लक्षणम्।
४ हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तेर्लक्षणम्।

१ व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता। अनुमानं द्विविधम्। स्वार्थं परार्थं च।

२ स्वार्थं स्वानुमितिः हेतुः। तथाहि--स्वयमेव भूयोदर्शनेन यत्र यत्र धूमस्तत्र तत्राऽग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति 'यत्र यत्र धूमस्तत्रतत्राग्निः' इति तदनन्तरं वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात् पर्वतो वन्हिमान् इति ज्ञानमनुमितिरुत्पद्यते तदेव स्वार्थानुमानम्।

यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम्। यथा पर्वतो वन्हिमान् धूमवत्त्वात्। यो यो धूमवान् स सोऽग्निमान् यथा महानसम्। तथा चायम्। तस्मात्तथेति। अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। पर्वतो वन्हिमानिति प्रतिज्ञा। धूमवत्वादिति हेतुः। यो यो धूमवान् स सोऽग्निमानित्युदाहरणम्। तथा चायमित्युपनयः। तस्मात्तथेति निगमनम्।

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्।

---

१ हेतुमत्पक्षविषयकज्ञानत्वं पक्षधर्मतालक्षणम्।

२ स्वार्थानुमितिकरणत्वं स्वार्थानुमानस्य लक्षणम्। एवं परार्थानुमितिहेतुत्वं परार्थानुमानस्य लक्षणम्।

१ लिङ्गं त्रिविधम् । अन्वयव्यतिरेकि, केवलान्वयि, केवल-व्यतिरेकि चेति ।

२ अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि, यथा वन्हौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः । यत्र वन्हिर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः ।

३ अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा घटोऽभिधेयः प्रमेयत्वात् पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति । सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च ।

४ व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्वात् । यदितरेभ्यो न भिद्यते न तद् गन्धवत् । यथा जलम् । न चेयं तथा । तस्मान्न तथेति । अत्र यद् गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ।

५ संदिग्धसाध्यवान् पक्षः । यथा धूमवत्वे हेतौ पर्वतः ।

६ निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ।

---

१ व्याप्त्याश्रयत्वं लिङ्गसामान्यलक्षणम् ।

२ अन्वयसहचारज्ञानज्ञाप्यव्याप्तिमत्वे सति व्यतिरेकसहचारज्ञानज्ञाप्यव्याप्तिमत्वं अन्वयव्यतिरेकिलिङ्गस्य लक्षणम् ।

३ व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्वं केवलान्वयिलक्षणम् ।

४ अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्वं केवलव्यतिरेकिलिङ्गस्य लक्षणम् ।

५ साध्यप्रकारकसंशयविशेष्यत्वं पक्षस्य लक्षणम् ।

६ साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षस्य लक्षणम् ।

१ निश्चितसाध्याभाववान् विपक्षः। यथा तत्रैव महाह्रदः।
२ सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च हेत्वाभासाः।
३ सव्यभिचारोऽनैकान्तिकः। स त्रिविधः। साधारणासाधारणानुपसंहारिभेदात्।
४ तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। यथा पर्वतो वन्हिमान् प्रमेयत्वादिति। प्रमेयत्वस्य वन्ह्यभाववति ह्रदे विद्यमानत्वात्।
५ सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः। यथा शब्दो नित्यः शब्दत्वादिति शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति।
६ अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा सर्वमनित्यं प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति।
७ साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम्।
८ साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः। यथा

---

१ साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षस्य लक्षणम्।
२ अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभाससामान्यलक्षणम्।
३ साधारणाद्यन्यतमत्वं सव्यभिचारस्य लक्षणम्।
४ साध्याभाववद्वृत्तित्वं साधारणत्वम्।
५ साध्यासामानाधिकरण्यं असाधारणत्वम्।
६ अत्यन्ताभावाप्रतियोगिसाध्यकत्वं अनुपसंहारित्वम्।
७ साध्यव्यापकीभूताभावप्रतियोगित्वं विरोधस्य लक्षणम्।
८ स्वसाध्यविरुद्धसाध्याभावव्याप्यहेतुप्रकारतानिरूपितपक्षतावच्छेदकाव-

शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्। शब्दोऽनित्यः कार्यत्वाद् घटवत्।

१ असिद्धस्त्रिविधः। आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति।

२ आश्रयासिद्धो यथा गगनारविन्दं सुरभि अरविन्दत्वात्, सरोजारविन्दवत्। अत्र गगनारविन्दमाश्रयः स च नास्त्येव।

३ स्वरूपासिद्धो यथा। शब्दो गुणश्चाक्षुषत्वात् रूपवत्। अत्र चाक्षुषत्वं शब्दे नास्ति। शब्दस्य श्रावणत्वात्।

सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठाऽत्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। पर्वतो धूमवान् वन्हिमत्वादित्यत्राऽऽर्द्रेन्धनसंयोग उपाधिः। तथाहि—यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता। यत्र वन्हिस्तत्राऽऽर्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनाभावादिति साधनाव्यापकता। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः। सोपाधिकत्वाद् वन्हिमत्वं व्याप्यत्वासिद्धम्।

---

च्छिन्नविशेष्यताशालिनिश्चयकालीनप्रकृतसाध्यव्याप्यहेतुप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयविषयत्वं सत्प्रतिपक्षस्य लक्षणम्।

१ आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धिसामान्यलक्षणम्।

२ पक्षे पक्षतावच्छेदकाभावः आश्रयासिद्धिः।

३ पक्षे हेत्वभावः स्वरूपासिद्धिः।

१ यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा वन्हिरनुष्णो द्रव्यत्वादिति। अत्रानुष्णत्वं साध्यं तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम्।

इति अनुमानपरिच्छेदः।

२ उपमितिकरणमुपमानम्।

३ संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्। तथाहि कश्चिद् गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषाद् गोसदृशो गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति तदन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते।

इत्युपमानपरिच्छेदः।

४ आप्तवाक्यं शब्दः। आप्तस्तु यथार्थवक्ता। वाक्यं पदसमूहः। यथा गामानयेति शक्तं पदम्। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः।

आकांक्षा—योग्यता—सन्निधिश्च वाक्यार्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकांक्षादि रहितं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीति न प्रमाणम्। आकांक्षाविरहात्। वह्निना सिञ्चतीति न प्रमाणम्। योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं सांनिध्याभावात्।

---

१ पक्षे साध्याभावो बाधः।

२ उपमितिकरणत्वमुपमानस्य लक्षणम्।

३ शक्तिप्रकारकज्ञानत्वमुपमितेर्लक्षणम्।

४ आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम्।

वाक्यं द्विविधम्—वैदिकं लौकिकं च।

१ वैदिकमीश्वमीश्वरोक्तत्वात्सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्।

वाक्यार्थज्ञानं शाब्दज्ञानम्। तत् करणं तु शब्दः।

इति शब्दपरिच्छेदः।

अयथार्थानुभवस्त्रिविधः—संशय—विपर्यय—तर्कभेदात्।

२ एकस्मिन्धर्मिणि विरुद्ध—नानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति।

३ मिथ्याज्ञानं विपर्ययः। यथा शुक्तौ "इदं रजतम्" इति।

४ व्याप्यारोपेण व्यापकारोपस्तर्कः। यथा यदि वन्हिर्न स्यात्तर्हि धूमोऽपि न स्यादिति।

स्मृतिरपि द्विविधा—यथार्था अयथार्था च।

५ प्रमाजन्या यथार्था।

६ अप्रमाजन्या अयथार्था।

७ सर्वेषामनुकूलतया वेदनीयं सुखम्।

८ प्रतिकूलतया वेदनीयं दुःखम्।

९ इच्छा कामः।

---

१ ईश्वरोक्तत्वं वैदिकवाक्यस्य लक्षणम्।

२ एकधर्मिकविरुद्धभावाभावोभयप्रकारकज्ञानत्वं संशयस्य लक्षणम्।

३ तदभाववति तत्प्रकारकज्ञानत्वं विपर्ययस्य लक्षणम्।

४ व्याप्यविषयकाहार्यज्ञानजन्यव्यापकविषयकाहार्यज्ञानत्वं तर्कस्य लक्षणम्।

५ तद्वति तत्प्रकारकस्मृतित्वं यथार्थस्मृतेर्लक्षणम्।

६ तदभाववति तत्प्रकारकस्मृतित्वं अयथार्थस्मृतेर्लक्षणम्।

७ सुखत्वजातिमत्वं सुखस्य लक्षणम्।

८ दुःखत्वजातिमत्वं दुःखस्य लक्षणम्।

९ इच्छात्वजातिमत्वं इच्छायाः लक्षणम्।

१ क्रोधो द्वेषः।
२ कृतिः प्रयत्नः।
३ विहितकर्मजन्यो धर्मः।
४ निषिद्धकर्मजन्यस्त्वधर्मः।
बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः। बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च। नित्या ईश्वरस्य। अनित्या जीवस्य।
५ संस्कारस्त्रिविधः—वेगो भावना स्थितिस्थापकश्चेति।
६ वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः।
७ अनुभवजन्या स्मृतिहेतुर्भावना, आत्ममात्रवृत्तिः।
८ अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितस्थापकः, कटादि-पृथिवीवृत्तिः। इति गुणाः।
९ चलनात्मकं कर्म।
१० ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्।

---

१ द्वेषत्वजातिमत्त्वं द्वेषस्य लक्षणम्।
२ प्रयत्नत्वजातिमत्त्वं प्रयत्नस्य लक्षणम्।
३ विहितकर्मजन्यत्वं धर्मस्य लक्षणम्।
४ निषिद्धकर्मजन्यत्वं अधर्मस्य लक्षणम्।
५ संस्कारत्वजातिमत्त्वं संस्कारस्य लक्षणम्।
६ वेगत्वजातिमत्त्वं वेगस्य लक्षणम्।
७ अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनायाः लक्षणम्।
८ वेगभिन्नत्वे सति भावनाभिन्नत्वे सति संस्कारत्वं स्थितिस्थापकस्य लक्षणम्।
९ कर्मत्वजातिमत्त्वं कर्मणो लक्षणम्।
१० ऊर्ध्वदेशसंयोगाऽसमवायिकारणत्वं उत्क्षेपणस्य लक्षणम्।

१ अधोदेशसंयोगहेतुरपक्षेपणम् ।
२ शरीरस्य संनिकृष्टसंयोगहेतुराकुञ्चनम् ।
३ विप्रकृष्टसंयोगहेतुः प्रसारणम् ।
४ अन्यत्सर्वं गमनम् ॥
५ नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादीति ।
६ नित्यद्रव्यवृत्तयो व्यावर्त्तका विशेषाः ।
७ नित्यसम्बन्धः समवायः ।
८ अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्ये एकमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ।
९ अनादिः सान्तः प्रागभावः । उत्पत्तेः पूर्वं कार्यस्य ।
१० सादिरनन्तः प्रध्वंसः । उत्पत्त्यनन्तरं कार्यस्य ।

---

१ अधोदेशसंयोगाऽसमवायिकारणत्वं अपक्षेपणस्य लक्षणम् ।
२ अवयवानामनारम्भकसंयोगाऽसमवायिकारणत्वं आकुञ्चनस्य लक्षणम् ।
३ विप्रकृष्टसंयोगासमवायिकारणत्वं प्रसारणस्य लक्षणम् ।
१९ उत्क्षेपणादिचतुष्टयभिन्नत्वे सति कर्मत्वजातिमत्वं गमनस्य लक्षणम् ।
५ नित्यत्वे सत्यनेकसमवेतत्वं जातेर्लक्षणम् ।
६ स्वतोव्यावर्त्तकत्वं विशेषस्य लक्षणम् ।
७ नित्यत्वे सति संबन्धिभिन्नत्वे सति संबन्धत्वं समवायस्य लक्षणम् ।
८ पृथगाश्रयाश्रितत्वाभावोऽयुतसिद्धत्वम् ।
९ प्रागभावाप्रतियोगित्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य लक्षणम् ।
१० प्रागभावप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं प्रध्वंसस्य लक्षणम् ।

१ त्रैकालिकः संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । यथा भूतले घटो नास्तीति ।

२ तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा घटः पटो नेति ।

सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम् ।

कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥

---

१ नित्यत्वे सति तादात्म्यसंबन्धानवच्छिन्नप्रतियोगिताकत्वं अत्यन्ताभावस्य लक्षणम् ।

२ तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वं अन्योन्याभावस्य लक्षणम् ।



॥ श्रीगणेशाय नमः ॥

न्याय-बोधिनी, दीपिका, गङ्गा टीकाभिः समलंकृतः

# तर्क-संग्रहः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥१॥

अखिलाऽऽगमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

न्या०—चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मंगलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति । निधायेति ।

विश्वेश्वरं साम्बमूर्त्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ।

दी०—चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं ग्रन्थादौ प्रतिजानीते । निधायेति ।

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ।

गं० — विश्वस्य-प्रपञ्चस्य-ईश्वरं-सृष्ट्यादिकर्त्तारमित्यर्थः। अम्बया सहिता मूर्त्तिर्यस्येति साम्बमूर्त्तिः तम्। गिरां-निखिलविद्यानां-गुरुं-उपदेष्टारम्। गिरं गुरुमिति पाठे तु वाग्देवीं विद्यागुरुंचेत्यर्थः। प्रणिपत्य-प्रणम्येत्यर्थः। प्रनिपूर्वक पत्लृधातोः प्रणामोऽर्थः। स च स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलो व्यापारः, स्वापकर्षबोधानुकूलव्यापारो वा। ल्यबर्थं उत्तरकालीनत्वम्। शिशुभ्यो हितां बोधनसमर्थामित्यर्थः। टीकां—व्याख्यां। तर्कसंग्रहाख्यग्रंथस्य-दीपिकां-तर्क-संग्रहप्रतिपाद्यार्थप्रकाशिकामित्यर्थः। द्वितीयार्थोविषयत्वम्। कुर्वे इत्यत्र कृञ्धात्वर्थः कृतिः, आख्यातार्थं आश्रयत्वम्। तथा च अम्बाविशिष्टमूर्त्ति-विशिष्टाऽभिन्न विश्वेश्वरविशेष्यक गुरुविशेष्यक सरस्वतीविशेष्यक स्वावधि-कोत्कर्षप्रकारकज्ञानोत्तरकालीनशिशुहितत्वादिविशेषणविशिष्टटीकाविषयिणी या कृतिस्तदाश्रयोऽहमिति बोधः।

चिकीर्षितस्य। कर्त्तुमिच्छाविषयीभूतस्य। कृतिसाध्यत्वप्रकारकेच्छाविशेष्यीभूतस्येति यावत्। ग्रन्थस्येत्यस्य समाप्तावन्वयः। मंगलस्य निष्फलत्वशंकाप्रयुक्ताऽनाचरणीयत्वशंकानिरासायाऽऽह। निर्विघ्नपरिसमाप्त्यर्थ-मिति। निर्विघ्नपरिसमाप्तिः विघ्नध्वंसपूर्वकसमाप्तिः, अर्थः—फलं-यस्य तत्-तथा-भूतं मंगलमित्यर्थः। तथा च समाप्तिं प्रति विघ्नध्वंसद्वारा मंगलस्य हेतुत्वलाभा-न्नोक्तशंकावकाशः। विघ्नध्वंसस्य द्वारत्वकथनेन त्रिक्षणावस्थायिनो मङ्गलस्य कथं कालान्तरभाविसमाप्तिसाधनत्वमितिशंका निरस्ता। ननु मङ्गले समाप्ति-साधनत्वस्य दुर्ग्रहतया इष्टसाधनताज्ञानं विना प्रवृत्त्यनुपपत्त्या च मंगला-चरणे ग्रन्थकर्त्तुः प्रवृत्त्यनुपपत्तिरित्याशंकां निराकर्त्तुमाह। शिष्टेति। शिष्टा-चारेणाऽनुमिता या श्रुतिः तया बोधिता कर्त्तव्यता यस्येति व्युत्पत्त्या तादृश-कर्त्तव्यतावदित्यर्थलाभः। कर्त्तव्यत्वं च बलवदनिष्टाननुबन्धित्वे सति इष्ट-साधनत्वे सति कृतिसाध्यत्वम्। इष्टं च प्रकृते समाप्तिः। इदानीञ्च मंगलस्य स्वरूपमाह। इष्टेति। इष्टदेवतोद्देश्यकनमस्काररूपमित्यर्थः। "आशीर्नम-स्क्रिया वस्तुनिर्देशोवापि तन्मुखम्" इत्यभियुक्तोक्तेः। स च नमस्कारस्त्रिविधः कायिको वाचिको मानसिकश्चेति। आद्यस्तु उरसा शिरसा दृष्ट्या इत्यष्टाङ्ग-

सहितः प्रणामः। द्वितीयः, विश्वनाथाय नमः इतिशब्दात्मकः। अन्यस्तु त्वदवधिकापकर्षाश्रयोऽहं, मदवधिकोत्कर्षाश्रयस्त्वमित्याकारकज्ञानविशेषरूप इति ध्येयम्। निबन्धनस्य प्रयोजनमाह। शिष्यशिक्षायै इति। शिष्याणां शिक्षा कर्त्तव्यत्वेन ज्ञानम् तदर्थमित्यर्थः। निबिध्नन्निति। निबन्धनं कुर्वन्नित्यर्थः। तादृशमंगलप्रतिपादकवाक्यमुच्चरन्निति यावत्। चिकीर्षितमिति। कर्त्तुमिच्छाविषयीभूतमित्यर्थः। प्रतिजानीते। शिष्यावधानायेत्यादिः। प्रतिज्ञानुकूलकृतिमान् ग्रन्थकार इत्यर्थः।

दी०—ननु मंगलस्य समाप्तिसाधनत्वं नास्ति, मंगलेकृतेऽपि कादम्बर्यादौ निर्विघ्नपरिसमाप्त्यदर्शनात्, मंगलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनात्, अन्वय-व्यतिरेक-व्यभिचारादिति चेन्न। कादम्बर्यादौ विघ्नबाहुल्यात्समाप्त्यभावः। किरणावल्यादौ तु ग्रन्थाद्बहिरेव मंगलं कृतमतो न व्यभिचारः।

गं०—ननु निर्विघ्नपरिसमाप्त्यर्थमिति ग्रन्थेन मंगलस्य समाप्तिसाधनत्वं प्रतिपादितम्, तन्न संभवतीत्याशंकते। नन्वित्यादिना। तथा च मंगलं समाप्तिसाधनत्वाभाववत् अन्वयव्यभिचाराद्व्यतिरेकव्यभिचाराच्चेत्यनुमानं फलितम्। अन्वयसहचारश्च यत्सत्वे यत्सत्वम्, कारणसत्वे कार्यसत्वमिति यावत्। यदभावे यदभावो व्यतिरेकसहचारः, कारणाभावे कार्याभाव इति यावत्। यत्सत्वे यदभावोऽन्वयव्यभिचारः, कारणसत्वे कार्याभाव इति यावद्[1]। यदभावे यत्सत्वं व्यतिरेकव्यभिचारः, कारणाभावे

---

टि० १ कारणसमानाधिकरणाभावप्रतियोगिकार्यकत्वादित्यर्थः। समाप्तिं प्रति अन्यथासिद्धत्वादिति यावत्। एवं व्यतिरेकव्यभिचारादित्यस्य कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्वादित्यर्थः। एवं च न साध्यहेत्वोर्वैयधिकरण्यम्। व्यतिरेकव्यभिचारनिश्चयश्च साक्षात्कारणत्वग्रहविरोधी। कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणाऽत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्वस्यैव कारणतारूपत्वादिति।

कार्यसत्त्वमिति यावत् । अन्वयव्यभिचारं दर्शयति । मंगले कृतेऽपीति । व्यतिरेकव्यभिचारं दर्शयति । मंगलाभावेऽपीति । अन्वयव्यभिचार व्यतिरेकव्यभिचारौ परिहरति । समाप्त्यभाव इति अतो न व्यभिचार इत्यनेनान्वयः । तथा च प्रतिबन्धकसंसर्गाभावकूटस्याऽपि कार्यसामान्यं प्रति कारणत्वेन कादंबर्यादावपि मंगलेन यत्किंचिद्विघ्नध्वंससत्त्वेऽपि इतरविघ्नसंसर्गाभावविरहान्न समाप्तिः । न चैवं कारणसत्त्वेऽपि कार्यानुत्पादादन्वयव्यभिचार इति वाच्यम् । नहि कारणसत्त्वे कार्यानुत्पादोऽन्वयव्यभिचारः, तथा सति दण्डादेरपि घटकारणत्वानुपपत्तेः, किन्तु स्व-स्वव्याप्येतरयावत्कारणसत्त्वे स्वसत्त्वे कार्यानुत्पाद एव । न च प्रकृते तथा । स्व-स्वव्याप्येतरविघ्नान्तरसंसर्गाभावस्यासत्त्वादिति भावः । ग्रंथाद्बहिरेवेति । ग्रन्थावच्छेदकशरीरातिरिक्तशरीरावच्छेदेनेत्यर्थः । जन्मान्तरावच्छेदेनेति यावत् । एवं च नास्तिकः जन्मान्तरीयमंगलवान् समाप्तिमत्त्वादित्यनुमानस्य प्रमाणत्वान्न व्यतिरेकव्यभिचार इति भावः ।

दी०—ननु मंगलस्य कर्त्तव्यत्वे किं प्रमाणमिति चेन्न । शिष्टाचारानुमितश्रुतेरेवप्रमाणत्वात् । "समाप्तिकामोमंगलमाचरे" दितिश्रुतेः । तथा हि । मंगलं वेदबोधितकर्त्तव्यताकं अलौकिकाविगीतशिष्टाचार

---

अथ ययोः सामानाधिकरण्यं तयोरेव कार्यकारणभाव इति व्युत्पत्तिः । समाप्तिश्च चरमवर्णध्वंसरूपा, साचाऽऽकाशनिष्ठा ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वनियमात् । "वर्णे चरमत्वं च स्वघटितग्रन्थघटकवर्णप्रागभावाऽसमानकालीनत्वम्" । मंगलं च समवायेन आत्मनिष्ठम्, एवं च भिन्नाधिकरणनिष्ठयोः कथं कार्यकारणभाव इति चेन्न । स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्वसंबन्धेन समाप्तिं प्रति मंगलस्य कारणत्वात् । स्वं समाप्तिः । समवायः स्वजन्यविघ्नध्वंसो वा कारणतावच्छेदकसंबन्धः । स्वं मंगलम् । नवीनमते मंगलस्य विघ्नध्वंस एव फलम् । तन्मते स्वरूपसंबन्धेन विघ्नध्वंसं प्रति समवायेन मंगलं कारणमिति ध्येयम् ।

विषयत्वात् दर्शादिवत् । भोजनादौ व्यभिचारवारणायअलौकिकेति । रात्रिश्राद्धादौ व्यभिचारवारणायाऽविगीतेति । शिष्टपदं स्पष्टार्थम् । "न कुर्यान्निष्फलं कर्म" इति जलताडनादेरपि निषिद्धत्वादिति ।

गं०—ननु मंगलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादित्यनुमानेन समाप्तिकारणत्वं साधनीयम्, तत्रसमाप्त्यन्याफलकत्वे वादिनामविवाद एव । मंगलं सफलं अविगीतशिष्टाचारविषयत्वादित्यनुमानेन विशेष्यासिद्धिनिरासः । सफलत्वं च बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वम् । एवं च मंगले समाप्तिसाधनत्वसिद्धावपि निर्विघ्न परिसमाप्त्यर्थं ग्रन्थादौ मंगलमेव कर्त्तव्यमिति नियमे मानाभावः, प्रायश्चित्तादिनापि विघ्ननाशसंभवात् ततः, समाप्त्युत्पत्तेश्चेत्याशयेन शंकते । नन्वित्यादिना । मंगलस्येति । ग्रन्थारम्भे इत्यादिः । कर्त्तव्यत्वे । नियमेन कर्त्तव्यत्वे इत्यर्थः । प्रायश्चित्तादेः अकर्त्तव्यत्वे इति यावत् । किं प्रमाणमिति । प्रमाणाभाव इत्यर्थः । समाधत्ते नेति । शिष्टाचारानुमितश्रुतेरेवेति । एवकारोऽप्यर्थकः । तेन मंगलं कर्तव्यं समाप्तिफलकत्वादित्यनुमानरूपप्रमाणान्तरसत्वेऽपि न क्षतिः । अन्ये तु स्वबोधितकर्तव्यताकत्वसंबन्धेन श्रुतेरेव साध्यता । अग्रिमग्रन्थस्यऽत्रैव तात्पर्यम् । एवं च श्रुतेरनुमितत्वोपपत्तेरित्याहुः । शिष्टाचारलिंगकश्रुत्यनुमितिप्रकारमाह । तथाहीत्यादिना । वेदबोधितकर्तव्यताकमिति । वेदेन बोधिता कर्तव्यता यस्येतिविग्रहः । अत्र च श्रुतेः साध्यतावच्छेदककोटिप्रविष्टत्वेन अनुमानतः सिद्धये श्रुतिबोधितत्वं कर्तव्यताविशेषणम् । कर्तव्यत्वं च बलवदनिष्टाननुबन्धित्वे सति कृतिसाध्यत्वे सति इष्टसाधनत्वम् । परदारगमन चन्द्रानयन जलताडनादौ कर्तव्यत्वव्यवहाराभावात् । इष्टं च प्रकृते समाप्तिरेव । संभवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वादुपस्थितत्वाच्च । अलौकिकत्वे सति अविगीतत्वे सति शिष्टाचारविषयत्वादित्यर्थः । भोजनादाविति । आदिना मालिन्यनिवर्तकस्नानादेः परिग्रहः । तत्रेष्टसाधनतासत्वेऽपि तस्य वेदबोधितत्वा-

भावाद्[1] व्यभिचार इति भावः। अलौकिकत्वं च लोकानवगतेष्टसाधनताकत्वम्। लोकश्च वेदोपजीविप्रमाणातिरिक्तं प्रमाणम्। वेदोपजीविप्रमाणानि च ज्योतिष्टोमादीनि स्वर्गसाधनानि तत्वेन श्रुतिबोधितत्वादित्यनुमानम्, स्मृत्यादयश्च। केचित्तु अलौकिकत्वं फलनिष्ठकार्यतानिरूपितव्यापारसंबन्धानवच्छिन्नकारणताश्रयीभूतं यद्यत्तदन्यत्वम्। एवं च भोजनादेः साक्षादेव तृप्तिजनकत्वेन तदन्यत्वरूपाऽलौकिकत्वाभावान्न व्यभिचार इत्याहुः। रात्रिश्राद्धादाविति। शत्रुनाशमुद्दिश्य कृतरात्रिश्रद्धादावित्यर्थः। आदिना शत्रुनाशकमन्त्रजपादेः परिग्रहः। अविगीतत्वं च बलवदनिष्टाननुबन्धित्वम्। एवं च रात्रिश्राद्धादेः निरुक्ताऽलौकिकत्वेऽपि नरकसाधनत्वेन बलवदनिष्टाननुबन्धित्वरूपाऽविगीतत्वाभावान्न व्यभिचार इति भावः। अलौकिकाविगीताऽऽचारविषयत्वस्यैव हेतुताऽस्तु, अशिष्टाचारविषये तादृश हेतोरसत्वेन व्यभिचाराऽसंभवादित्याशंकामिष्टापत्या परिहरति। शिष्टपदमिति। शिष्टत्वं च फलसाधनतांशे भ्रान्तिरहितत्वम्। ननु शिष्टपदानुपादाने निरर्थकाजलताड़नादेरपि निरुक्तहेतुमत्वात्तत्र साध्याभावेन व्यभिचार इत्याशंकां तत्र हेतुघटकाऽविगीतत्वविशेषणाऽसत्वप्रतिपादनेन परिहरति। न कुर्यादिति। तथा च तादृशजलताड़नादेः निषिद्धत्वात् विगीतत्वेन तत्राऽविगीतत्वघटितहेत्वभावादेव व्यभिचारवारणे शिष्टपदं व्यर्थमेवेति भावः। विषयपदसमभिव्याहारादाचारः कृतिरूपोबोध्यः। कृतिविषयता च विधेयतारूपाबोध्या। तेन स्वर्गादिफले न व्यभिचार इति दिक्।

---

टि० १ यद्यपि "मुनिभिश्चिन्तनं प्रोक्तं लोकानां मर्त्यवासिनाम्। आहाराश्च तमस्विन्यां सार्धप्रहरयामतः" इत्यादिना तत्रेष्टसाधनताया वेदबोधितत्वसंभवाद् व्यभिचारो दुर्घटः, तथापि भोजनस्य रागप्राप्तत्वेन तत्रोत्पत्तिविध्यसंभवेपि पञ्च पञ्चनखाभक्ष्या इत्यत्रेव परिसंख्याविधिरेवाभ्युपेयः। परिसंख्याविधेश्च इतरनिषेधप्रयोजकत्वेन एकस्मिन् दिवसे एव वारद्वयातिरिक्तं भोजनं न कुर्यादिति निषेध एव पर्यवसानात् तत्रेष्ट साधनत्वस्य वेदबोधितत्वं न संभवतीति व्यभिचार इति ध्येयम्।

दी०—तर्क्यन्ते प्रतिपाद्यन्ते इति तर्काः, द्रव्यादिपदार्थाः तेषां संग्रहः संक्षेपेण स्वरूपकथनं क्रियत इत्यर्थः। कस्मै प्रयोजनायेत्यत आह। सुखबोधायेति। सुखेनाऽनायासेन यो बोधः पदार्थज्ञानं तस्मै इत्यर्थः। ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वोयं ग्रन्थःक्रियत इत्यत आह। बालानामिति। तेषामतिविस्तृतत्वाद्बालानां बोधो न जायते इत्यर्थः। ग्रहणधारणपटुर्बालः, नतु स्तनन्धयः। किं कृत्वा क्रियत इत्यत आह। निधायेति। विश्वेशं जगन्नियन्तारं। हृदिनिधाय-नितरां स्थापयित्वा। सदा तद्ध्यानपरोभूत्वेत्यर्थः। गुरूणां विद्यागुरूणां। वन्दनं-नमस्कारं। विधाय कृत्वेत्यर्थः।

गं०—तर्कपदस्याऽऽरोपार्थकत्वभ्रमं वारयितुं द्रव्यादिसाधारणतर्कत्वं निर्वक्ति। तर्क्यन्त इति। उपादानरूपसंग्रहस्याऽसंभवादाह। संक्षेपेणेति। अथवा सुखं-दुःखध्वंसः मोक्ष इति यावत्। सुखायबोधः सुखबोधः। प्रयोजकत्वं चतुर्थ्यर्थः। तथा च मोक्षप्रयोजकीभूत 'पदार्थविषयक" तत्वज्ञानसंपादनाय अयं ग्रन्थः क्रियते इति भावः। एतावता द्रव्यादिपदार्था विषयाः। पदार्थ-तत्वावधारणं प्रयोजनम्। संबन्धश्च प्रतिपाद्यप्रतिपादकभावः। पदार्थतत्वा-वधारणकामोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावत्प्रवृत्त्यङ्गं सूचितम्।

## द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्तपदार्थाः

न्या०—पदार्थान्विभजते–द्रव्येति। अत्र सप्तग्रहणं पदार्थत्वं द्रव्यादि सप्तान्यतमत्वव्याप्यमिति व्याप्तिलाभाय।

दी०—पदार्थान्विभजते। द्रव्येति। पदस्याऽर्थः पदार्थ इति व्यु-त्पत्त्याऽभिधेयत्वं पदार्थसामान्यलक्षणम्। नन्वत्र विभागादेव सप्तत्वे लब्धे सप्तग्रहणं किमर्थमिति चेन्न। अधिकसंख्याव्यवच्छेदार्थ-त्वात्। नन्वतिरिक्तः पदार्थः प्रमितो नवा। नाऽद्यः। प्रमितस्य

निषेधाऽयोगात्। नान्त्यः, प्रतियोगिप्रमितिं विना निषेधानुपपत्ते-रिति चेन्न। पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थत्वात्। ननु सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वम्, एवं च सप्तभिन्न-स्याऽप्रसिद्धत्वात्कथं सप्तान्यतमत्वव्याप्तिनिश्चय इति चेन्न। द्रव्यादि सप्तान्यतमत्वं नाम द्रव्यादिभेदसप्तकाभाववत्वम्, अतो दोषविर-हात्। एवमग्रेऽपि द्रष्टव्यम्।

गं०—पदार्थान्विभजते इति। वि पूर्वकभजधातोः अवान्तरधर्मप्रकार-कज्ञानानुकूलव्यापारोऽर्थः। आख्यातार्थः कृतिः। द्वितीयार्थो विशेष्यकत्वम्। तथा च पदार्थविशेष्यकपदार्थत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूल-कृतिमान् मूलकारः।

ननु सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुतया लक्षणात्मकसाधारणधर्मप्रकारकज्ञानाभावात्कियन्तः पदार्था इति जिज्ञासानुत्पत्त्या विभागकरणमनुचितम्, इत्याशंकां लक्षणप्रदर्शनेन परि-हरति। पदस्येति। व्युत्पत्त्येति। ईदृशव्युत्पत्त्या पदसंबन्ध्यभिधाविष-यत्वस्य लाभेऽपि पदसंबन्धित्वांशस्याऽव्यावर्तकत्वादाह। अभिधेयत्वमिति। लक्षणं लभ्यते इति शेषः। "अर्थोभिधेय" इति कोशेनार्थपदस्याभिधेय-त्वावच्छिन्ने शक्तिप्रतिपादनादित्यर्थः। इदमुपलक्षणम्। ऋगतौ इत्यनुशा-सनाद्गत्यर्थको धातुः। तस्य गुणे कृते अरिति धातुनिष्पत्तिः। ततो विष-यार्थक थप्रत्यये अर्थ इति शब्दो निष्पन्नः। तथा च गत्यर्थकधातूनां ज्ञाना-र्थकत्वनियमेन ज्ञेयत्व-ज्ञानविषयत्वमपिपदार्थसामान्यलक्षणम्।

सप्तपदस्य प्रयोजनं वक्तुमाक्षिपति। नन्वित्यादिना। विभागादेवेति। परस्परमसंकीर्णव्याप्यधर्माणामेवविभाजकतया द्रव्यगुणादीनां परस्परभेदे सिद्धे तेषां सप्तत्वस्याऽर्थतो लाभादितिभावः। सप्तग्रहणं किमर्थमिति। मूलस्थसप्तपदं निष्प्रयोजनकमिति यावत्। सप्तत्वोपस्थितेः बहुवचनेन संभ-वादिति भावः। अधिकसंख्येति। व्यथ सत्किंचिद्ज्ञापयतीति न्यायेन अष्टौ-

पदार्थां न सन्तीति ज्ञापयेति यावत् । तथा च यथा ब्राह्मण मानयेत्यादि-वाक्यघटकैकवचनान्तब्राह्मणपदेन एकत्वविशिष्टब्राह्मणस्याऽऽनयननिरूपितकर्मत्वेनोपस्थितावपि द्वितीयं नाऽऽनयेत्यर्थाऽलाभः । एकं ब्राह्मणमानयेत्यादौ संख्यावाचकैकादिपदानामितरनिषेधार्थकत्वाद् द्वितीयं नाऽऽनयेत्यर्थलाभः । तथा च द्रव्येत्यादिद्वन्द्वसमभिव्याहृतबहुवचनेन ससत्वरूपबहुत्वसंख्योपस्थितावपि अष्टत्वसंख्यापर्याप्त्यधिकरणसमुदायस्य निषेधाऽलाभात्तदर्थंसप्तपदमावश्यकमिति भावः ।

ननु सप्तपदेनाऽपि निरुक्तार्थलाभोन संभवति, अप्रसिद्धत्वादित्याशंकते। नन्विति । अतिरिक्तः पदार्थ इति । अष्टमपदार्थ इत्यर्थः । प्रमितो नवेति । प्रमाविषयत्ववान् तदभाववान्वेत्यर्थः । तथा च पदार्थविभाजकधर्मः द्रव्यत्वाद्यभावत्वान्तान्यतमाधिकरणावृत्तिर्नवेति विप्रतिपत्तिः गगनादावेव कोटिप्रसिद्धिः । प्रमितस्येति । विद्यमानस्येत्यर्थः । प्रतियोगिप्रमितिं विनेति । प्रतियोगिनो ज्ञानं विनेत्यर्थः। अलीकप्रतियोगिकाभावानंगीकारादिति। परिहरति । नेति । व्यवच्छेदार्थकत्वादिति । व्यवच्छेदो निश्चयः स एवार्थो यस्य, तस्य भावस्तस्मादित्यर्थः । तथा च द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः द्रव्याद्यभावान्ताऽन्यतमत्ववन्तः पदार्थत्वादित्यत्र पदार्थत्वविशेष्यकद्रव्याद्यन्यतमत्वनिरूपितव्याप्तिप्रकारकनिश्चयार्थकं सप्तग्रहणमिति भावः । ननु असति वाधके अवच्छेदावच्छेदेन विशिष्टबुद्धौ उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासत इति व्युत्पत्त्या प्रकृत उद्देश्यतावच्छेदकीभूतपदार्थत्वव्यापकत्वं द्रव्याद्यन्यतमत्वे भासते चेत्तदा तादृशान्यतमत्वव्याप्यत्वमुद्देश्यतावच्छेदकीभूतपदार्थत्वे भासत एव, एवं च विभागवाक्यादेव निरुक्तनिश्चयसंभवात् सप्तपदं व्यर्थमिति चेन्न । समानविभक्तिकस्थले उद्देश्यविधेयभावस्यविवक्षाधीनतया अन्यतममुद्दिश्य पदार्थत्वमपि विधातुं शक्यते तथा च द्रव्याद्यन्यतमत्वं पदार्थत्वव्याप्यमित्यपि व्याप्तिनिश्चयः स्यात्तद्व्यावृत्त्यर्थमेव सप्तग्रहणमित्याशयात् । नच तद्व्यावृत्तिर्व्यर्थेति वाच्यम्। तथा सति अतिरिक्तशक्त्यादिपदार्थसत्वेऽपि

तादृशनिश्चयोपपत्त्या द्रव्यादय एव पदार्था इति लाभो न स्यात् । तल्लाभायैव सप्तग्रहणमित्यन्यत्र विस्तरः ।

नन्विति । सप्तभिन्नभिन्नत्वमिति । "द्रव्यादि प्रत्येकवृत्तिधर्मावच्छिन्नभेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वमिति यावत् । द्रव्यादिभेदसप्तकाभाववत्त्वमिति । तथा च द्रव्यादिभेदानां प्रत्येकं प्रसिद्धानां सप्तानां कुत्राप्यसत्त्वेन तादृशभेदसप्तकत्वावच्छिन्नाभावस्य सर्वत्र सत्त्वान्न दोष इति भावः ।

सप्तत्वंचाऽत्रापेक्षाबुद्धिविशेषविषयत्वरूपम् । संख्यारूपत्वे गुणादिषु तद्वत्त्वाऽसंभवादितिध्येयम् ।

न्या०—ननु शक्तिपदार्थस्याऽष्टमस्य सत्त्वा[1]त्कथं सप्तैवेति ।

---

टि० १ शक्तौ विप्रतिपत्तिः, वन्हिः दाहानुकूलादिष्टाऽतीन्द्रियधर्मसमवायी नवेत्याकारिका । एवं च वन्हिर्दाहानुकूलाऽदृष्टातीन्द्रियधर्मसमवायी दाहजनकत्वाददृष्टवदात्मवदिति प्राचामनुमानमपि तत्सिद्धौ मानम् । अत्र परेषामयमाशयः दाहं प्रति मण्यभावस्य प्रतिबन्धकाऽभावविधयैव कारणत्वं वाच्यम् , प्रतिबन्धकत्वं च कार्यानुकूल धर्मविघटकत्वम् , एवं च मणेः प्रतिबन्धकत्वाऽनुपपत्तिः, दाहात्मककार्याऽनुकूलस्यदृष्टवन्ह्यादेर्विघटकत्वाभावात् , अतो वन्हौ कश्चिदतीन्द्रियधर्मः शक्त्याख्यः स्वीकार्यः, सोऽपि दाहानुकूलीभूतः, अनुकूलत्वं च जनकजनकतावच्छेदकसाधारणम् , तेनाऽदृष्टस्य कार्यमात्रं प्रति साक्षाज्जनकत्वेऽपि न दृष्टान्ताऽसिद्धिः । एवं च दाहं प्रति शक्तिमद्वन्हित्वेन कारणतया मणेश्च दाहात्मककार्यानुकूलशक्त्याख्यधर्मविघटकतया प्रतिबन्धकत्वोपपत्तिः, तथाचाऽवश्यं शक्तिः स्वीकार्येति ।

सिद्धान्तिनामयमाशयः । प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वम् बाधनिश्चयेऽव्याप्तेः तस्य साक्षादेवाऽनुमितिप्रतिबन्धकत्वात् । किन्तु कार्यकार्यानुकूलधर्माऽन्यतरविघटकत्वमेव तत् । "वक्ष्यतिचाऽनुमितिपदमजहल्लक्षणयानुमितितत्कारणान्यतरपरमिति" । एवं च मणेः साक्षाद्दाहविघटकतया प्रतिबन्धकत्वोपपत्तौ शक्तिस्वीकारोऽनर्थक इति । अधिकमग्रे वक्ष्यते ।

तथाहि । मण्यादिसंयुक्तेन्धनादौ सत्यपि वह्निसंयोगे दाहो न जायते, तच्छून्ये तु जायते, अतो मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूलाशक्तिरुत्पद्यत इति कल्प्यते । तस्माच्छक्तिरतिरिक्तः पदार्थ इतिचेद् । मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैवनिर्वाहे मणिसमवधानाऽसमवधानाभ्यामनन्तशक्ति-तद्ध्वंस-तत्प्रागभावकल्पनाया अन्याय्यत्वात्, तस्मात्सप्तैव पदार्था इति सिद्धम् ।

गां०—प्रभाकरः शंकते । नन्विति । अष्टमस्य । सप्तपदार्थातिरिक्तस्येत्यर्थः । अतिरिक्तपदार्थतामेव व्यवस्थापयति । तथाहीत्यादिना । दाहः । पूर्वरूपपरावृत्तिः, रूपान्तरोत्पत्तिर्वा । तच्छून्ये । मणिशून्ये । कल्प्यत इति । एवं च दाहत्वावच्छिन्नकार्यतानिरूपितकारणता अतीन्द्रियधर्मावच्छेद्या अयोग्यवृत्तिकारणतात्वादित्यनुमानेन तत्सिद्धिरितिभावः । ननु अनया युक्त्या न शक्तिसिद्धिः, वन्ध्यास्त्रीप्रयोगादौ दृष्टसाद्गुण्येऽपि अदृष्ट विलंबात्फलविलंबवद्वाति वदत्रापि तद्विलंबाद्विलंब इति चेद् । नहिदृष्टसामग्रीसंपत्तौ अदृष्टविलंबात्कार्यविलंबोदृष्टः । वन्ध्यास्त्रीसंप्रयोगादिस्थले विजातीयसंयोगरूपदृष्टहेत्वभावेन फलानुत्पादः, इतरथाऽदृष्टविलंबादेव कार्यविलंबे दृष्टकार्यकारणकथाविलीयेत, तस्मात्संभवति दृष्टसाद्गुण्ये तथा कल्पनाया न्याय्यत्वात्तत्सिद्धिरिति । अतिरिक्तः पदार्थ इति । नन्वेवं शक्तिसिद्धावपि तस्या अतिरिक्तत्वाऽसिद्धिरितिचेन्न । कॢप्तपदार्थानन्तर्भूतत्वात् अतिरिक्तसिद्धिः । तथाहि । शक्तिर्नद्रव्यात्मिका गुणादिवृत्तित्वात् । अतएव न गुणात्मिका कर्मात्मिका वा । नच सामान्याद्यन्यतमरूपा उत्पत्तिमत्वे सति विनाशित्वादिति । यद्यपि मणिसमवधानकाले दाहजनकवन्हेरेव नाशाभ्युपगमात् न दाहोत्पादः, अतिरिक्तशक्तेस्तत् कल्पनातः कॢप्ते, तत्कल्पनाया एव न्याय्यत्वादितिन्यायेन सुकरमेव समाधानम्, तथापि वस्तुतोनाशकल्पनागौरवेणैतदपहाय निष्कृष्टं समाधानमाह । मणेः प्रतिबन्धकत्वेनेति । निर्वाहे ।

सामंजस्ये। नचोत्तेजकसत्वे कथं दाहः, तत्र मण्यभावरूपकारणविरहादितिवाच्यम्। उत्तेजकाभावविशिष्टमण्यभावस्य[१] हेतुत्वात्।

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव।**

न्या०—द्रव्याणि विभजते। पृथिवीति। ननु अन्धकारस्य दशमद्रव्यस्य सत्वात्कथं नवैवेति। तथाहि नीलं तमश्चलतीति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च तमसो द्रव्यत्वं सिद्धम्। न च उक्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम्। तमसो रूपवत्वात् आकाशादिपञ्चकस्य वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः। तमसो निर्गन्धत्वात् पृथिव्या गन्धवत्वान्न पृथिव्यामन्तर्भावः, तमसो निःस्पर्शत्वाज्जलतेजसोः शीतोष्णस्पर्शवत्वान्न तयोरन्तर्भावः। तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेन्न। तमसस्तेजोऽभावरूपत्वेनैवोपपत्तौ अतिरिक्तकल्पनायां मानाभावात्। नच विनिगमनाविरहात्तेजएवाऽन्धकाराऽभावस्वरूपमिति वाच्यम्। तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयत्वस्य तत्र बाधात्, द्रव्यान्तरकल्पने गौरवात्। तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि नीलप्रतीतिस्तुभ्रान्तिरेव, एवं कर्मवत्ताप्रतीतिरपि, दीपापसरणक्रियाया एव तत्रभानात्।

---

१ उत्तेजकाभावविशिष्टो यो मणिस्तदभावः कारणमित्यर्थः। उत्तेजकत्वं च प्रतिबन्धकसत्वे कार्यंजनकत्वम्। तथा च विशिष्टाभावः विशेषणाभावप्रयुक्तः, विशेष्याभावप्रयुक्तः, उभयाभावप्रयुक्तश्च। एवं च यत्र उत्तेजकप्रतिबन्धकयोर्द्वयोः समवधानम्, तत्र विशेषणाभावप्रयुक्तोविशिष्टाभावः, यत्र द्वयोरसमवधानं तत्र विशेष्याभावप्रयुक्तो विशिष्टाभावः यत्र केवलमुत्तेजकं तत्रोभयाभावप्रयुक्तो विशिष्टाभावः। यत्र केवलं प्रतिबन्धकं तत्र न विशिष्टाभावः, विशेषणविशेष्योभयस्यैव सत्वादिति ध्येयम्।

अथ मण्युत्तेजकाभावयोर्विशेष्यविशेषणभावे कामचार इति चेद्। तथापि शक्तिहेतुत्वेऽस्य दुर्वारत्वात्। वस्तुतो मण्युत्तरदाहे उत्तेजकस्य मण्यनुत्तरदाहे मण्यभावस्य हेतुत्वम्। हेतुहेतुमद्भावद्वयेऽपि अवच्छेदकलाघवादिति।

दी०—द्रव्याणि विभजते। तत्रेति। तत्र-द्रव्यादिमध्ये। द्रव्याणि नवैवेत्यन्वयः। कानितानीत्यत आह। पृथिवीत्यादि। ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नवैव द्रव्याणि। तथाहि। "तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति"। नीलं तमश्चलतीत्यबाधितप्रतीतिबलान्नीलरूपाधारतया क्रियाधारतया च द्रव्यत्वं तावत्सिद्धम्। तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावो रूपवत्त्वात्। अतएव न वायौ, स्पर्शाभावात्, सदागतिमत्त्वाभावाच्च। नापि तेजसि भास्वररूपाभावादुष्णस्पर्शाभावाच्च। नापि जले शीतस्पर्शाभावान्नीलरूपाश्रयत्वाच्च। नापि पृथिव्यां गन्धवत्वाऽभावात्स्पर्शरहितत्वाच्च। तस्मात्तमसो दशमद्रव्यत्वमिति चेन्न। तमसस्तेजोऽभावरूपत्वात्। तथाहि। तमो हि न रूपिद्रव्यं आलोकाऽसहकृतचक्षुर्ग्राह्यत्वात् आलोकाभाववत्। रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात्। तस्मात्प्रौढप्रकाशकतेजः सामान्याभाव एव तमः। तत्र नीलं तमश्चलतीति प्रत्ययो भ्रमः। अतो नव द्रव्याणीति सिद्धम्।

---

टि० १ तद्धर्मावान्तरधर्मप्रकारेण धर्मिप्रतिपादनं विपूर्वकभजधातोरर्थः। तद्धर्मपदेनविभाज्यतावच्छेदकद्रव्यत्वादिरेव ग्राह्यः। तद्धर्मावान्तरत्वं च तद्धर्मव्याप्यत्वम्, तच्च न्यूनवृत्तित्वरूपं ग्राह्यम्। तेन द्रव्यत्वव्याप्यत्वेऽपि द्रव्यत्वस्य न क्षतिः। व्याप्यत्वमपि साक्षात्, तच्च तद्धर्मव्याप्यत्वे सति तद्धर्मव्याप्याऽव्याप्यत्वम्। तेन घटत्वादिकमादाय न विभागाऽनुपपत्तिः। विशेष्यदलघटकीभूते तद्धर्मव्याप्ये पृथिवीत्वादिविशिष्टान्यत्वमपि विशेषणीयम्। वै०स्वाश्रयवृत्तित्व स्वानाश्रयवृत्तित्वोभयसंबन्धेन। तेन पृथिवीजलान्यतरत्वमादाय न पृथिवीत्वेऽपिसाक्षाद्व्याप्यत्वानुपपत्तिरित्यन्यत्रविस्तरः।

गं०—द्रव्याणि विभजत इति। द्रव्यत्वावच्छिन्नविशेष्यकाऽवान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान्मूलकार इति बोधः। तत्रेति सप्तम्यर्थोघटकत्वं तत्पदं पदार्थसमुदायपरम्। तथा च सप्तपदार्थसमुदयघटकप्रथमोद्दिष्टद्रव्याणि नवैवेत्यर्थः। पृथिव्यादिनवैवेत्यधिकसंख्याव्यवच्छेदमसहमानः प्रत्यवतिष्ठते। नन्विति। अन्धकारे विप्रतिपत्तिस्तु अन्धकारत्वं भावबृत्ति नवेत्याकारिका बोध्या। तमसो द्रव्यान्तरत्वमुपपादयसि। तथाहीत्यादिना। तमसि वक्ष्यमाणद्रव्यत्वसाधकहेतोः स्वरूपाऽसिद्धत्वशंकापरिहारायाऽऽदौ तादृशहेतोः प्रत्यक्षसिद्धत्वमाह। नीलं तम इत्यादिना। द्रव्यत्वं तावत्सिद्धमिति। तावदिति वाक्यालंकारे। तथा च तमोद्रव्यं नीलरूपवत्त्वात् क्रियावत्त्वाच्च नीलघटवदित्यनुमानात्तमसि द्रव्यत्वसिद्धिरिति भावः। अत्र नीलरूपवत्वस्यहेतुत्वे नीलद्रव्याणामेव दृष्टान्तता। क्रियाया हेतुत्वे मूर्त्तमात्रस्य दृष्टान्ततेति दृष्टान्तसौलभ्याय द्वितीयहेत्वनुसरणमितिध्येयम्। तत्र। पृथिव्यादिपु मध्ये।नाऽऽकाशादि पंचकेऽन्तर्भाव इति। तमः आकाशत्वादिमनस्त्वान्तान्यतमशून्यमिति यावत्। रूपवत्वादिति।[१] घटवदितिशेषः। अत्र रूपवत्वं समवायेन बोध्यम्, तेन कालादौ न व्यभिचारः। इदानीमप्यव्यवहितपूर्वोपस्थितिक्रमेण वाय्वनन्तर्भूतत्वं साधयति। अत एवेति। रूपवत्वादेवेत्यर्थः।नवायाविति। वायौ नान्तर्भवतीत्यर्थः। स्पर्शाभावादिति। तमो वायुभिन्नं स्पर्शाभावादित्यनुमानं फलितम्। नच वायौ आद्यक्षणाऽवच्छेदेन निरुक्तहेतोः सत्वाद्व्यभिचार इति वाच्यम्। स्पर्शाभावइत्यस्य स्पर्शः अभावो यस्येति व्युत्पत्त्या स्पर्शभेदार्थकत्वेन तस्य वायाव-

---

टि० १ अत्र तमसि एकेनैव हेतुना आकाशादिपंचकभेदसाधनं सुलभम्, अतः प्रथमं तत्साधने एव बालानामिच्छासंभवतीति तदिच्छानुरोधेन पश्चान्निर्दिष्टानामप्याकाशादीनां पञ्चानां भेद आदौ साधितः। एतेनोद्देशक्रमानुसारं पृथिव्याद्यनन्तर्भूतत्वसाधनानन्तरमेव आकाशाद्यनन्तर्भूतत्वस्यसाधनीयतया प्रथमं तत्साधने बीजाभाव इति दूषणमपास्तम्।

भावेन व्यभिचारविरहात्। सदा[1] गतिमत्त्वाभावाच्चेति। सदागतिमत्त्वसमानाधिकरणपृथिव्यवृत्तिजातिशून्यत्वादिति यावत्।

शं० — नापि तेजसीति। तेजस्यपि नान्तर्भूतमित्यर्थः। एवं च तमः तेजोभिन्नं भास्वररूपाभावात् घटवदित्यनुमानं बोध्यम्। भास्वरत्वं तेजोरूपमात्रवृत्तिशुक्लत्वव्याप्यजातिविशेषः। एवं च प्रतियोगितावच्छेदककोटौ रूपत्वस्य न प्रवेशः; प्रयोजनाभावात्। तथा च समवायसंबन्धावच्छिन्नभास्वरत्वावच्छिन्नप्रतियोगिताकाभावादिति हेतुः फलितः। ननु आद्यक्षणावच्छिन्ने तेजसि व्यभिचार इति चेन्न। निरुक्ताभावे प्रतियोगिवैयधिकरण्यनिवेशात्तस्य च भास्वररूपाभावस्य स्वप्रतियोग्यधिकरणाऽऽद्यक्षणावच्छिन्नतेजोवृत्तित्वान्न व्यभिचारः। समव्यासहेतुमाह। उष्णस्पर्शाभावाच्चेति। अत्रापि पूर्ववदुष्णाभावादित्येव हेतुर्बोध्यः। उष्णः अभावोयस्येति व्युपत्या उष्णवद्भिन्नत्वादित्यर्थोबोध्यः, तेन आद्यक्षणावच्छेदेन तेजसि न व्यभिचारः। न चैव मुत्पन्नविनष्टतेजसि व्यभिचार इति वाच्यम्। उष्णसमानाधिकरणपृथिव्यवृत्तिजातिशून्यत्वस्य विवक्षितत्वादिति नापि जल इति। तमो न जलमित्यर्थः। शीतस्पर्शाभावादिति। अयं हेतुः पूर्ववत्परिष्करणीयः। शीतवद्वृत्तिपृथिव्यवृत्तिजातित्वावच्छिन्नाभावत्वरूपगुरुधर्मावच्छिन्नस्य हेतुत्वाऽपेक्षया लघुधर्मावच्छिन्नस्य भावस्यैव हेतुतामाह। नीलरूपाश्रयत्वाच्चेति। न पृथिव्यामिति। तम इति पदमनुवर्त्तते. तथा च पृथिवीभिन्नम्। तत्र हेतुमाह गन्धाभावादिति। गन्धवद्भिन्नत्वादित्यर्थो बोध्यः। तेनाऽऽद्यक्षणावच्छिन्ने घटे न व्यभिचारः। न चैवमुत्पन्नविनष्टघटे व्यभिचारइति वाच्यम्। गन्धसमानाधिकरणजलावृत्तिजातिशून्य-

---

१ रूपवत्त्वादित्यस्यहेतुत्वेऽपि पृथिव्यादित्रयाणामेव दृष्टान्तता, स्पर्शाभावादित्यस्य हेतुत्व आकाशादिपञ्चानामेव दृष्टान्ततेति दृष्टान्तसौलभ्याय रूपवत्त्वहेतोः परित्यागः, एवं सदागतिमत्त्वाभावस्य हेतुत्वे वायुभिन्नाष्टद्रव्याणामेवदृष्टान्तता संभवतीति अनेकदृष्टान्तलाभाय एतादृशहेत्वनुसरणम्।

त्वस्य विवक्षितत्वादिति । एतावता प्रत्येकहेतुना पृथिव्यादिचतुर्णां प्रत्येका-
नन्तर्भूतत्वं तमसि प्रसाध्य साधनसौलभ्याय एकहेतुनाऽऽकाशादिपञ्चका-
नन्तर्भूतत्वसाधनवदेकहेतुनाऽपि पृथिव्यादिचतुष्टयानन्तर्भूतत्वं साधयति।
स्पर्शरहितत्वाच्चेति । एतस्य पूर्वोक्त एवार्थः । मीमांसकमतमुपसंहरति।
तस्मादिति । उक्तरीत्या तमसः पृथिव्यादिमनोन्ताऽन्यतमभिन्नत्वसिद्धे-
रित्यर्थः । दशमद्रव्यमिति । तथा च तमोऽतिरिक्तं द्रव्यं क्लृप्तद्रव्यभिन्नत्वे
सति द्रव्यत्वादितिभावः । अन्धकारस्य क्रियावत्वे रूपवत्वे सत्येव तेन
हेतुना तस्य द्रव्यत्वं साधनीयम्, तदेव च तत्राऽसिद्धमित्यभिप्रायेण समा-
धत्ते । नेति । तर्हि क्वान्तर्भाव इत्यत आह । तेजोऽभावरूपत्वादिति।
उद्भूताऽनभिभूतरूपवत्प्रकृष्टमहत्ववत्तेजःसामान्याभावरूपत्वादित्यर्थः । चक्षु-
रादितेजः सत्वेपि तमः प्रतीतेः उद्भूतेति रूपविशेषणम् । सुवर्णादि तेजः
सत्वेपि तमः प्रतीतेः अनभिभूतेति सुवर्णादिभिन्नार्थकम्, तेनाऽनुद्भूतत्व-
स्याऽनुगतस्य दुर्वचत्वेऽपि न क्षतिः । परमाणुद्व्यणुकवारणाय महत्ववदिति।
त्रसरेणुवारणाय प्रकृष्टेति । न चैतादृशतेजःसामान्याभावस्य तमस्त्वे
आलोकसमवधानेऽपि घटवृत्तिरूपादौ अन्धकारप्रतीत्यापत्तिः, संयोगसंबन्धेन
तादृशतेजः सामान्याभावस्य रूपे सत्वादिति वाच्यम् । संयोग-संयुक्तसम-
वाय-संयुक्तसमवेतसमवायान्यतमसंबन्धेन तादृशतेजःसामान्याभावस्य
विवक्षितत्वात् । ननु रूपवत्वादिना तमसो द्रव्यत्वस्य साधितत्वेन कथं
तेजोऽभावरूपतेत्याशंकां तमसि रूपाभावसाधनेन परिहरति । तथाहीत्या-
दिना । तमो न रूपिद्रव्यमिति । तमो न रूपवदित्यर्थः । इदमुपलक्षणम्
क्रियावदित्यपि बोध्यम् । आलोकासहकृतेति । आलोकाऽसहकृतं यच्च-
क्षुस्तद्ग्राह्यत्वादित्यर्थः । अन्धकारस्यघटादिप्रत्यक्षवारणाय द्रव्यवृत्ति-
लौकिकविषयतासंबन्धेन महदुद्भूतरूपवद्द्रव्यचाक्षुषं प्रति संयोगसंब-
न्धेनोद्भूतानभिभूतरूपवन्महातेजस्त्वेन कारणत्वात् । अन्धकारेतरद्रव्यवृत्ति-
लौकिकविषयत्वस्य कार्यतावच्छेदकसंबन्धत्वे गौरवात् । तथा च तमः
पद वाच्यं न रूपवद् क्रियावद्वा आलोकाऽजन्यमानुष्यलौकिकचाक्षुष-

विषयत्वात् तेजोभाववदित्यनुमानं फलितम् । घटादौ व्यभिचारवारणायाऽऽ-लोकाऽजन्येति चाक्षुषविशेषणम् । आलोकाजन्यज्ञानविषयत्वमात्रोक्तौ केवल स्पार्शनप्रत्यक्षविषये घटादौ व्यभिचारः स्यादतश्चाक्षुषेति । विडालादि चाक्षुषविषये घटादौ व्यभिचारवारणाय मानुषत्वं चाक्षुषविशेषणम् । अत्र तम इति चाक्षुषे चाक्षुषोपनीतभानात्मकप्रत्यक्षविषयीभूताऽधिकरणादौ व्यभिचारवारणाय लौकिकेति । नच तथापि आलोके व्यभिचारः, तेजोविषयक-प्रत्यक्षे तेजोन्तराऽनपेक्षेति सिद्धान्तादिति वाच्यम् । तेजोऽवृत्तित्वस्य लौकिक-विषयतायां विशेषणीयत्वात् । तथा चाऽऽलोकत्वावच्छिन्नकारणतानिरूपि-तकार्यताशून्यचक्षुष्ट्वावच्छिन्नकारणतानिरूपितकार्यताशालिप्रत्यक्षनिरूपितते-जोऽवृत्तिलौकिकविषयताशालित्वं हेतुरिति दिक् । निरुक्तहेतौ अप्रयो-जकत्वशंकानिवर्तकमनुकूलतर्कमाह । **रूपीति** । प्रमापदं स्पष्टार्थम् । उपसंहरति । **तस्मादिति** । रूपशून्यत्वात् क्रियाशून्यत्वाच्चेत्यर्थः । त्रसरे-णुवारणाय प्रौढेति । नन्वेवं नीलं तमश्चलतीति प्रतीतेः का गतिरित्यत आह । **तत्रेति** । तमसीत्यर्थः । सप्तम्यर्थो विशेष्यत्वम्, तस्य प्रत्ययेऽन्वयः । एवं च तमोविशेष्यको नीलं तम इति प्रत्ययः, चलति तम इति प्रत्ययश्चेति फलितार्थः । **भ्रम इति** । भ्रम एवेत्यर्थः । नीलं नभ इति प्रतीतिवदिति ।

**दी० — द्रव्यत्वजातिमत्त्वं, गुणवत्त्वं वा द्रव्यसामान्यलक्षणम् ।**

गं०—द्रव्यसामान्यलक्षणमनुक्त्वा विभागकरणमनुचितम् इत्याशंकां परिजिहीर्षुः स्वयं तल्लक्षणमाह । **द्रव्यत्वजातिमत्त्वमिति** । समवायेन जातिमत्त्वं बोध्यम् । तेन गुणादेः कालिकसंबन्धेन द्रव्यत्वजातिमत्त्वेऽपि न क्षतिः । अत्र द्रव्यत्वं जातिरूपमिति द्योतनाय जातिपदम्, न तु तेन रूपेण लक्षणे प्रवेशः, प्रयोजनाभावात् । प्रमेयधूमत्वादिवत्, द्रव्यमितर-भिन्नं द्रव्यत्वजातेरित्यत्र द्रव्यत्वजातित्वस्य स्वसमानाधिकरणप्रकृतसा-ध्यव्याप्यतावच्छेदकद्रव्यत्वत्वघटितत्वेन तस्य व्याप्यतानवच्छेदकतया इत-रभेदानुमापकतानुपपत्तेश्च । न चेष्टापत्तिः । द्रव्यत्वस्य तेन रूपेण लक्षण-त्वानुपपत्तेः । व्यावर्तकस्यैव लक्षणत्वादिति हृदयम् ।

समवायसंबन्धेन द्रव्यगुणकर्माणि द्रव्य एव वर्तन्ते, द्रव्यमपि तादात्म्येन द्रव्य एव वर्तते । एवं च समवायेन कार्यमात्रं प्रति तादात्म्येन द्रव्यं कारणम् । अत्र च कार्यस्य समवायः प्रत्यासत्तिः, कारणस्य तु तादात्म्यं प्रत्यासत्तिः, तथा च समवायसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्ना कारणता किंचिद्धर्मावच्छिन्ना कारणतात्वाद् घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावत् । याया कारणता सासा किंचिद्धर्मावच्छिन्नेति व्याप्तिबलाद् द्रव्यत्वजातिसिद्धिः । ननु कार्यत्वं प्रागभावप्रतियोगित्वम्, तस्य च समवायसंबन्धावच्छिन्नकार्यत्वाभाववति ध्वंसेऽपि सत्वेनाऽतिप्रसक्ततया न कार्यतावच्छेदकत्वम्, कालिकसंबन्धेन घटत्वादिकमादाय विनिगमनाविरहश्चेति चेन्न । समवायसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नद्रव्यनिष्ठा या कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन तत्सिद्धेः । न च तथापि नित्यसंयोगाङ्गीकर्तृनये संयोगत्वस्य नित्यसंयोगसाधारणतया संयोगत्वं न कार्यतावच्छेदकम् । अतएव रूपत्वादिकमपि न तथेति वाच्यम् । समवायसंबन्धावच्छिन्नविभागत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नद्रव्यनिष्ठा या कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन तत्सिद्धेरिति ध्येयम् ।

अथ व्यावर्तकस्यैव लक्षणत्वे द्रव्यत्वमपि द्रव्यलक्षणं न संभवति, सिद्धसाधनात् । तथाहि द्रव्यत्वलिङ्गकद्रव्यमितरभिन्नमित्यनुमितौ "अन्वयव्याप्तिज्ञानस्यैवहेतुत्वपक्षे" द्रव्यत्वमितरभेदसमानाधिकरणमितिव्याप्तिज्ञानं कारणं वाच्यम्, हेतुः साध्यसमानाधिकरण इति ज्ञानस्यैव व्याप्तिज्ञानत्वात्, एवं च तादृशव्याप्तिज्ञानस्य तुल्यवित्तिवेद्यतया द्रव्यत्वसमानाधिकरणः इतरभेद इति ज्ञानात्मकत्वेन तादृशज्ञानस्य साध्यसिद्धिरूपत्वेनाऽनन्तरमनुमित्यसंभवात् । न च हेतुः साध्यसमानाधिकरण इति व्याप्तिग्रहस्य हेतुमान् साध्यवानित्यनुमितितो भिन्नाकारत्वात्, समानाकारकसिद्धेरेवाऽनुमितिप्रतिबन्धकत्वात्, अवच्छेदावच्छेदेनानुमितौ सामानाधिकरण्यावगाहि-

सिद्धेरप्रतिबन्धकत्वाच्च व्यावर्त्तकत्वमव्याहतमेवेति वाच्यम्। पक्षतावच्छेद-कहेत्वोरैक्ये उद्देश्यतावच्छेदकविधेययोरैक्येनोपनयवाक्याच्छाब्दबोधानुप-पत्तेरेव दोषत्वात्। न च नवीनमते विधेयांशेऽधिकावगाहिनः शाब्दबोधस्यो-पगमेन पक्षतावच्छेदकहेत्वोरैक्येपि साध्यव्याप्यहेतुमान्पक्ष इत्याकारकस्यो-पनयवाक्यजन्यशाब्दबोधस्य नानुपपत्तिरिति वाच्यम्। प्राचीनैरुदाहरण-वाक्यादेव व्याप्तिलाभादुपनयेनाऽपि तत्प्रतिपादने पौनरुक्त्यमिति। पक्षे हेतु-मत्तामात्रमेवोपनयेन बोधनीयम्, तथा चाऽयमित्युपनयवाक्यस्य हेतुमान्पक्ष इत्येवार्थं इत्यंगीकारात्तन्मतानुसारेणैव दोषादिति चेत्तदा लक्षणान्तरमाह। गुणवत्त्वं वेति। एवं च सामान्यधर्मकथनेन न न्यूनतेति भावः।

दी०—लक्ष्यैकदेशाऽवृत्तित्वम्, अव्याप्तिः। यथा गोः कपिलत्वम्। अलक्ष्यवृत्तित्वमतिव्याप्तिः। यथा गोः शृङ्गित्वम्। लक्ष्यमात्राऽवर्त्त-नम् असंभवः। यथा गोरेकशफवत्वम्। एतद्दूषणत्रयरहितो धर्मो लक्षणम्। यथा गोः सास्नादिमत्वम्। स एवाऽसाधारणधर्म इत्यु-च्यते। लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम्।

गं०—दूषणत्रयरहितधर्मस्यैव लक्षणत्वस्य वक्ष्यमाणतया तद्ज्ञानं विशेषणीभूतदूषणत्रयरहितत्वज्ञानं विना न संभवति, दूषणत्रयरहितत्वज्ञानं तु विशिष्य दूषणत्रयज्ञानाधीनम्, अभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशि-ष्टज्ञानस्य तन्त्रत्वादित्याशयेन दूषणत्रयं दर्शयति। लक्ष्यैकदेशाऽवृत्तित्व-मिति। लक्ष्यस्य एकदेशः लक्ष्यैकदेशः तत्राऽवृत्तित्वम्। लक्ष्यतावच्छेदक-त्वेनाऽभिमतधर्मसमानाधिकरणाऽभावप्रतियोगित्वमिति यावत्। तथा च लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वे सति लक्ष्यतावच्छे-दकसामानाधिकरण्यमव्याप्तेर्लक्षणम्। सल्लक्षणे गन्धादावतिव्याप्तिवारणाय सत्यन्तम्। असंभवरूपदोषलक्ष्यैकशफवत्वादावतिव्याप्तिवारणाय विशेष्य-दलम्। अस्याश्चभागाऽसिद्धावन्तर्भावः इति ध्येयम्।

अलक्ष्यवृत्तित्वमिति। लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वमित्यर्थः।

लक्ष्यतावच्छेदकसामानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगि-ताकभेदसामानाधिकरण्यमिति यावत् । असंभवदोपलक्ष्यैकशफवत्वादौ अतिव्याप्तिवारणाय सत्यन्तम् । अव्याप्तिरूपदोपलक्ष्यकपिलत्वे अतिव्याप्तिवार-णाय विशेष्यदलम् । **गोः शृङ्गित्वमिति** । गां लक्ष्यीकृत्य इतरभेदानुमाप-कत्वेन तात्पर्यविषयशृङ्गवत्वमित्यर्थः । अस्याश्च व्यभिचारेऽन्तर्भाव इति ॥

असंभवलक्षणमाह । **लक्ष्यमात्राऽवर्त्तनमिति** । लक्ष्यतावच्छेदक-व्यापकीभूताभावप्रतियोगित्वमिति । लक्ष्यं दर्शयति । **गोरेकशफवत्व-मिति** । अस्य च स्वरूपाऽसिद्धावन्तर्भावः । न च शते पञ्चाशदितिन्यायेन । एकशफवत्वमपि गवि संभवतीति वाच्यम् । द्विशफशून्यत्वस्य तदर्थत्वात् । गोरङ्घ्रेर्द्विशफवत्वात् । नचैवमश्वेप्यसंभवः, अश्वस्य चतुश्शफवत्वादिति वाच्यम् । शफद्वयशून्याङ्घ्रिकत्वस्य तदर्थत्वात् । गोरङ्घ्रेर्द्विशफवत्वात् । न च भग्नैकशफाङ्घ्रिकायां गव्यतिव्याप्तिरिति वाच्यम् । शफद्वयवद-ङ्घ्रिकाऽवृत्तिस्ववृत्तिजातिमत्वस्य विवक्षितत्वात् ।

लक्षणस्वरूपं निरूपयति । **एतद्दूषणेत्यादिना** । उक्तदूषणत्रयरहितो धर्म इत्यर्थः । ननु दूषणत्रयरहितधर्म इत्यनेन त्रित्वावच्छिन्नाभावो लभ्यते, तच्चाऽयुक्तम् । एकदूषणदूषितस्यापि त्रित्वावच्छिन्नाभावविशिष्टतया सल्लक्ष-णत्वापत्तेरिति चेन्न । तत्तद्दूषणाभावकूटवत्वस्यैव विवक्षितत्वादिति ।

ननु **असाधारणधर्मो हि लक्षणं सत्प्रकीर्तितम्** इति वचनेन असाधारणधर्मत्वस्यैव लक्षणत्वप्रतिपादनात्तदुपेक्ष्यदोपरहितत्वस्य सल्लक्षण-लक्षणत्वे वीजाभाव इत्यत आह । **स एवेति** । तादृश दूषणत्रय-रहितधर्म एवेत्यर्थः । एवकारेण दूषणविशिष्टस्य असाधारणत्वव्यवच्छेदः । **उच्यते** । पण्डितैरिति शेपः ।

अत्र सल्लक्षणलक्षणे धर्मत्वनिवेशे प्रयोजनाभावात्, असाधारणत्वमात्र-मेव लक्षणं वाच्यम् । तदपि न संभवति । न साधारणं असाधारणं तस्य भाव इति व्युत्पत्या तस्य केवलान्वयिभिन्नत्वरूपत्वेन कपिलत्वादिरूपाऽसल्ल-क्षणसाधारणत्वादत आह । **लक्ष्यतावच्छेदकसमनियतत्वमिति** । अस-

धारणत्वमिति। असाधारणत्वशब्दार्थ इत्यर्थः। तथा चाऽसाधारणत्वपदं न योगिकम्, किन्तु पारिभाषिकमिति भावः। लक्ष्यतावच्छेदकसमनियतत्वं च लक्षणे, लक्ष्यतावच्छेदकव्याप्यत्वे सति लक्ष्यतावच्छेदकव्यापकत्वम्। लक्ष्यतावच्छेदकव्याप्यत्व च लक्ष्यतावच्छेदकाभाववदवृत्तित्वम्। लक्ष्यतावच्छेदकव्यापकत्वं च लक्ष्यवृत्यभावाऽप्रतियोगित्वम्। स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकलक्ष्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमिति परमार्थः। तेन पदार्थत्वादेर्लक्ष्यतावच्छेदककस्थले लक्ष्यतावच्छेदकाऽभावाऽप्रसिद्धावपि न क्षतिः। न वा लक्ष्यतावच्छेदकस्य द्विधाभानमिति ध्येयम्।

दी०—व्यावर्त्तकस्यैव लक्षणत्वे व्यावृत्तौ अभिधेयत्वादौ चाऽतिव्याप्तिवारणाय तद्भिन्नत्वं धर्मविशेषणं देयम्। व्यवहारस्याऽपि लक्षणप्रयोजनत्वे तु न देयम्। व्यावृत्तेरपि व्यवहारसाधनत्वात्।

ननु गुणवत्वं न द्रव्यलक्षणम्, आद्यक्षणाऽवच्छिन्नघटे, उत्पन्नविनष्टघटेचाऽव्याप्तेरिति चेन्न। गुणसमानाधिकरणसत्ताभिन्नजातिमत्वस्य विवक्षितत्वात्। नन्वेयमपि एकं रूपं रसात्पृथक् इति व्यवहाराद्रूपादावतिव्याप्तिरिति चेन्न। एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात्।

ननु "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इति वचनेन सावधारणप्रथमान्तव्यावृत्तिशब्देन व्यावृत्तिरेव लक्षणस्य प्रयोजनम्। व्यवहारोवेत्यत्र व्यवहारपदस्य व्यावृत्तिसहितव्यवहारे लाक्षणिकतया व्यावृत्तिसहितव्यवहारः लक्षणस्य प्रयोजनमिति विकल्पार्थकवाशब्दसमभिव्याहाराद्वैकल्पिकार्थो लभ्यते। अत्र व्यावृत्तिमात्रस्य लक्षणप्रयोजनत्वपक्षे गौरवं दर्शयितुमादौ व्यावृत्तिप्रयोजनकधर्ममात्रं लक्ष्यीकृत्य लक्षणमुपपादयति व्यावर्त्तकस्यैवेति। तथा च व्यावृत्तेरेव लक्षणप्रयोजनत्वपक्षे व्यावर्त्तकमेव लक्षणम्, व्यावृत्तिश्च इतरभेदानुमितिः, तथा च तादृशानुमितिविषयीभूत-

पृथिवीतरभेदस्यापि पृथिवीत्वसमनियततया तत्र लक्षणलक्षणस्याऽति-व्याप्तिः, पृथिवीतरभेदस्य च सिद्धसाधनापत्त्या पृथिवीतरभेदाऽसाधकत्वेन तल्लक्षणाऽलक्ष्यत्वादिति भावः ।

ननु सिद्धिसत्त्वेऽपि सिषाधयिषयाऽनुमितिदर्शनात् स्वसाधकत्वम-व्याहतमेवेति व्यावृत्तेः लक्ष्यत्वान्नातिव्याप्तिरित्यत आह । **अभिधेयत्वादौ-चेति । न देयमिति ।** तद्भिन्नत्वविशेषणं न देयमित्यर्थः । अत्र हेतुमाह । **व्यावृत्तेरपीति ।** अपिना व्यावर्त्तकगन्धादेः परिग्रहः । व्यवहारसाधन-त्वादिति । व्यवहारानुमापकत्वादित्यर्थः । तथा च व्यावृत्तेरिव व्यवहारस्यापि लक्षणप्रयोजनत्वे घटः पृथिवीति व्यवहर्त्तव्यः इतरभेदवत्वात्, एवं घटः पदार्थ इति व्यवहर्त्तव्यः अभिधेयत्वात्पटवदित्यनुमानात् "सिद्धसाधनाभा-वेन" व्यवहारविधेयकानुमित्युत्पत्त्या व्यावृत्तेः केवलान्वयिधर्मस्य च व्यवहार-साधकत्वं बोध्यम् । एवं च तद्भिन्नत्वनिवेशे प्रयोजनाभावात् अस्मिन्कल्पे लाघवमव्याहतमिति भावः ।

नन्विति । **गुणवत्वमिति ।** समवायेनेत्यादिः तेन कर्मादौ नाति-व्याप्तिः, **न द्रव्यलक्षणम् ।** न द्रव्यनिष्ठेतरभेदानुमापकमित्यर्थः । आद्यक्ष-णावच्छिन्नघटे इति । अव्याप्तेरिति योजना । **अव्याप्तेरिति ।** गुणस्याऽस-त्वादित्यर्थः ननु आद्यक्षणावच्छिन्नघटस्य द्वितीयक्षणाद्यवच्छिन्नघटाऽभिन्नतया द्वितीयक्षणावच्छेदेन घटस्यगुणवत्वान्नाव्याप्तिः, नहीदंकालघटितं येनोत्पत्ति-क्षणावच्छेदेन घटे गुणवत्वलक्षणाऽव्याप्तिः स्यात् । न च गुणस्यलक्ष्य-तावच्छेदकद्रव्यत्वसमानाधिकरणाभावप्रतियोगित्वेन अप्रतियोगित्वघटित-लक्ष्यतावच्छेदकसमनियतत्वाभावान्न तस्य लक्षणत्वं संभवतीति वाच्यम् । उत्पत्तिक्षणावच्छेदेन द्रव्ये गुणाभावसत्वेऽपि प्रतियोगिवैयधिकरण्यघटित-लक्ष्यतावच्छेदकव्यापकत्वस्याक्षततयाऽव्याप्तेरभावादत आह । **उत्पन्नविन-ष्टेति ।** विनाशसामग्रीसमवहितावयवजन्ये इत्यर्थः । तथा च तादृशघटे गुणाधिकरणत्वस्याप्यभावेनाऽव्याप्तिरिति भावः **गुणसमानाधिकरणेति ।** इदं च गुणत्वजातिमादाय गुणादावतिव्याप्तिवारणाय । अत्राधिकरणत्वं वृत्तित्वं

समवायेन बोध्यम्। तेन कालिकसंबन्धेनाऽधिकरणत्वं वृत्तित्वं चादाय नातिव्याप्तितादवस्थ्यम्। सत्ताजातिमादाय तद्दोषवारणाय जातौ सत्ताभिन्नत्वनिवेशः। जातिपदं समवायेन धर्मवत्त्वलाभार्थम्, तेन कालिकेन तादृशधर्मवत्त्वमादाय नातिप्रसंगः। **एवमपीति**। उक्तविवक्षया अव्याप्तिवारणेऽपि। **इति व्यवहारादिति**। इत्याकारकप्रामाणिकव्यवहारादित्यर्थः। **रूपादाविति**। एकत्वादिगुणसिद्धाविति शेषः। **अतिव्याप्तिः**। जातिघटितलक्षणस्याऽप्यतिव्याप्तिरित्यर्थः। **एकार्थसमवायादेवेति**। समवायघटितसामानाधिकरण्यसंबन्धेन आश्रयगतैकत्वस्वीकारादेवेत्यर्थः। **तादृशव्यवहारोपपत्ताविति**। एकमित्यादिव्यवहारस्य प्रामाण्यनिर्वाहे इत्यर्थः। **गुणे गुणाऽनङ्गीकारादिति**। गुणस्य समवायेन गुणवृत्तित्वानभ्युपगमादित्यर्थः। तथा च तादृशव्यवहारस्य तदुल्लिखितप्रत्ययस्य च तादृशसामानाधिकरण्येनैव गुणे गुणव्यवस्थापकत्वात्। तत्र साक्षात्संबन्धेन गुणसाधकप्रमाणान्तराऽभावाच्च गुणे समवायेनगुणसत्त्वाऽसिद्धा नोक्तलक्षणस्याऽतिव्याप्तिरिति भावः।

वस्तुतस्तु **एकार्थसमवायादेवेति** वाक्यघटकैवकारस्याऽप्यर्थकतयाऽनुक्तसमुच्चायकेन तद्व्यक्तित्वरूपपारिभाषिकैकत्वमेव गृह्यते, एवं चाऽपेक्षाबुद्धिविशेषविषयत्वादिकमादाय द्वे रूपे इत्यादिव्यवहाराद्युपपत्तिः, अतएव चतुर्विंशतिगुणा इत्यादिकमपि समाहितम्। तथा च तद्व्यक्तित्वरूपतादृशैकत्वादिकमादाय एकं रूपमित्यादि व्यवहाराद्युपपत्तिरिति न कश्चिद्दोष इति।

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्काराश्चतुर्विंशतिगुणाः।**

दी०—गुणान्विभजते। रूपेति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः गुणत्वजातिमान्वा। ननु लघुत्वकठिनत्वमृदुत्वादीनां विद्यमानत्वात् कथं चतुर्विंशतिगुणा इति चेन्न। लघुत्वस्य गुरुत्वाभावरूपत्वाद् मृदुत्वकठिनत्वयोः अवयवसंयोगविशेषत्वात्।

शं०—गुणान्विभजते इति। गुणत्वावच्छिन्नविशेष्यकाऽवान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृत्याश्रयो मूलकार इति बोधः। अत्र गुणसामान्यलक्षणमनुक्त्वा विभागाऽसंभवात् न्यूनताभंगाय इदं लक्षणमाह। द्रव्यकर्मभिन्नत्वे सतीति। द्रव्यभिन्नत्वेसति कर्मभिन्नत्वे सतीत्यर्थः। यथाश्रुते द्रव्यकर्मोभयत्वावच्छिन्नभेदस्य द्रव्येऽपि सत्त्वादतिव्याप्त्यापत्तेः। सामान्यवानिति। सामान्याधिकरणमित्यर्थः। केचित्तु द्रव्यकर्मभिन्नत्वे सतीति द्रव्यकर्माऽसंभवेतत्वविशिष्ट इत्यर्थः। एवं च द्रव्याऽसमवेतत्वकर्मासमवेतत्वैतदुभयविशिष्ट सामान्यवत्वं लक्षणं फलितमिति व्याचक्रुः। गुण इति लक्ष्यनिर्देशः। लाघवादाह। गुणत्वजातिमान्वेति। जातिपदं समवायेन गुणत्ववत्तालाभार्थम्।

ननु गुणत्वजातौ किं मानम्, रूपादिषु संस्कारान्तरेषु पामराणां गुणत्वग्रहादिति चेन्न। निर्गुणे क्रियासामान्यानुपपत्या द्रव्यारम्भानुगुणक्रियानुत्पत्त्या वा क्रियां प्रति द्रव्यारम्भानुगुणक्रियां प्रति वा गुणत्वेन हेतुत्वावश्यकतया कारणतावच्छेदकतया गुणत्वजातिसिद्धिः। अनुमित्याकारस्तु समवायसंबन्धावच्छिन्नक्रियात्वावच्छिन्नद्रव्यारम्भानुगुणक्रियात्वावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात्, या या कारणता सा सा किंचिद्धर्मावच्छिन्ना पटनिष्ठकार्यतानिरूपिततन्तुसंयोगनिष्ठकारणतावदिति। एवं च द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किंचिद्धर्मावच्छिन्ना निरवच्छिन्नकारणताया असंभवादिति विश्वनाथोक्तिरपि संगच्छते।

अत्र बहूनां गुणविभाजकधर्माणां सत्त्वात्क चतुर्विंशतिगुणा इत्याक्षिपति। नन्विति। लघुत्वस्येति। न च गुरुत्वमेव लघुत्वाभावरूपं किं स्यते इति वाच्यम्। पतनाऽसमवायिकारणतया गुरुत्वस्याऽवश्यकत्वात्। अवयवसंयोगविशेषत्वादिति। दृढतराऽवयवसंयोगः काठिन्यम्। शिथिलावयवसंयोगो मृदुत्वम्। इदमुपलक्षणम्। वक्रत्वस्यावयवसंयोगविशेषरूपत्वात्, आलस्यस्य कृत्यभावरूपत्वादित्यपि बोध्यम्।

उत्क्षेपणाऽपक्षेपणाऽऽकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ।

दी०—कर्म विभजते । उत्क्षेपणेति । संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणं कर्म, कर्मत्वजातिमद्वा । भ्रमणादीनामपि गमनेऽन्तर्भावान्न पञ्चत्वविरोधः ।

शं०—कर्म विभजते इति । कर्मविशेष्यकाऽवान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृत्याश्रयो मूलकार इति बोधः । न्यूनतापरिहाराय स्वयं कर्मलक्षणमाह । संयोगभिन्नत्वे सतीति । कायपुस्तकसंयोगाऽसमवायिकारणे हस्तपुस्तकसंयोगेऽतिव्याप्तिवारणाय संयोगभिन्नत्वे सतीति । संयोगसमवायिकारणद्रव्येऽतिव्याप्तिवारणाय असमवायीति । लघुलक्षणमाह । कर्मत्वजातिमदिति । जातिग्रहणस्य प्रयोजनं पूर्ववद् । कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । ननु कर्मविभाजकधर्माणां बहूनां सत्त्वात्कथं पञ्चैव कर्माणीत्याशंकां परिहरति । भ्रमणादीनामपीति । एवकारार्थकोऽपिशब्दः, अन्तर्भावादित्युत्तरं योजनीयः । आदिना रेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनादीनां परिग्रहः गमनेऽन्तर्भावादिति । गमनत्वाश्रयादेवेत्यर्थः । तथा च परस्परवैयधिकरण्यानामेव विभाजकता वाच्या, अन्यथा घटत्वादीनामपि द्रव्यविभाजकतापत्तेः । ननूत्क्षेपणत्वादीनामपि गमनत्वाश्रयत्वादुत्क्षेपणत्वादीनामपि गमनत्ववैयधिकरण्याभावात्तेषामपि कर्मविभाजकत्वानुपपत्तिरिति चेन्न । स्वतन्त्राणां सूत्रकाराणां तादृशनियमाङ्गीकारस्याऽनावश्यकत्वात् । एवं च तेषां नियोगपर्यनुयोगानर्हतया गमनत्वसामानाधिकरण्यापन्नोत्क्षेपणत्वादिना कृतस्य कर्मविभागस्याऽदोषत्वात् ।

परमपरं चेति द्विविधं सामान्यम् ।

दी०—सामान्यं विभजते परमिति । परमधिकदेशवृत्ति । अपरं न्यूनदेशवृत्ति । सामान्यादिचतुष्टये जातिर्नास्ति ।

गं०—सामान्यं विभजते इति। सामान्यविशेष्यकाऽवान्तरधर्मप्रकारकज्ञानाकूलव्यापारानुकूलकृतिमान्मूलकार इत्यन्वयबोधः। नित्यत्वे सति अनेकसमवेतत्वं जातेर्लक्षणम्। ननु सामान्यस्याऽमूर्ततया दैशिककालिकपरत्वाऽपरत्वानाश्रयत्वात्परमपरंचेति विभागकरणमनुपपन्नमित्याशंकां पारिभाषिकपरत्वादिनिर्वचनेन परिहरति। **परमधिकदेशवृत्तीति**। व्यापकमित्यर्थः। तत्वं च स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, स्वाधिकरणवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा। स्वं व्याप्यम्। **अपरं न्यूनदेशवृत्तीति**। व्याप्यमित्यर्थः। तत्वं च स्वाभाववदवृत्तित्वम्। न्यूनवृत्तित्वं च स्वभिन्नत्वे सति स्वाभाववदवृत्तित्वम्, स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। स्वं व्यापकत्वेनाऽभिमतम्।

ननु गगनत्वादौ सामान्यलक्षणाऽव्याप्तिः, अनेकसमवेतत्वाभावादिति चेन्न। गगनत्वादिकं न जातिः, बाधकसत्वात्, जातिबाधकाश्च "**व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः। रूपहानिरसंबन्धो जातिबाधकसंग्रहः**" कारिकोक्ता वेदितव्याः। **व्यक्तेरभेदः**—स्वाश्रयव्यक्तेरैक्यम्, स्वनिष्ठजातित्वे बाधकम्। यथा गगनत्वस्य जातित्वे **तुल्यत्वम्** स्वभिन्नजातिसमनियतत्वम्, स्वनिष्ठजातित्वे बाधकम्। यथा घटत्वकलशत्वयोः। **संकरः**, परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः। भूतत्वमूर्त्तत्वयोर्जातित्वे बाधकः। स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसंबन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव इति नियम एव सांकर्यस्य जातिबाधकत्वे मानम्। **अनवस्था**। यथा जातीनां जातिमत्वे।

**रूपहानिः**—स्वतोव्यावर्त्तकत्वरूपलक्षणस्य हानिः। विशेषस्य जातिमत्वे बाधिका। **असंबन्धः**। प्रतियोगिता अनुयोगितान्यतरसंबन्धेन समवायाऽभावः—समवायाऽभावयोर्जातिमत्वे बाधक इति।

सामान्यत्वादिकं न जातिः किन्तूपाधिरेवेत्याह। सामान्यादि चतुष्टये इति।

## नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।

दी०—विशेषं विभजते । नित्येति । पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपंचकं नित्यद्रव्याणि ।

गं०—मूले अनन्ता एवेति । आश्रयव्यक्तिभेदेन भिन्ना इत्यर्थः । एकमात्रसमवेतत्वे सति समवेतत्वम्, निःसामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं वा विशेषलक्षणम् ।

## समवायस्त्वेक एव

दी०—समवायस्य भेदो नास्तीत्याह । समवायस्त्विति ।

गं०—**समवायस्येत्यस्य** समवाये इत्यादिः । अन्यथा घटादौ समवायभेदसत्वादसंगत्यापत्तेः । न चैवमपि घटसमवायोभयभेदसत्त्वादसंगतिर्दुर्वारैव, समवायत्वावच्छिन्नप्रतियोगिताकभेदोनास्तीत्यर्थकत्वे तु समवायस्यैकत्वाभावेऽपि समवाये समवायत्वावच्छिन्नप्रतियोगिताकभेदाऽसत्वात् **समवायस्त्वेकएवेति** ग्रन्थस्याऽवतरणविरोध इति वाच्यम् । व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदः समवाये नास्तीत्यर्थकत्वात् । मूले **समवायस्त्वेक** एवेति। एवकारस्तु समवायनिष्ठभेदप्रतियोगितानवच्छेदकरूपैकत्वस्य एकपदार्थैकदेशे एकत्वे लाभाय । समवायस्य नानात्वे तु समवायनिष्ठं एकत्वं समवायान्तरनिष्ठभेदप्रतियोगितावच्छेदकमेव स्यादिति, समवायस्य एकत्वादेव समवाये व्यासज्यवृत्तिधर्मानवच्छिन्नसमवायनिष्ठप्रतियोगिताकभेदो नास्तीत्यर्थः । तन्निष्ठमेकत्वं समवायनिष्ठभेदप्रतियोगितानवच्छेदकमेवेति भावः । नित्यत्वेसति[1] संबन्धिभिन्नत्वेसति[2] संबन्धत्वम्[3] समवायस्य लक्षणम् । न च समवायस्यैकत्वे स्पर्शसमवायवति वायौ

---

टि० १ संयोगेऽतिव्याप्तिवारणाय ।

२ नित्याऽभावादिरूपस्वरूपसंबन्धेऽतिव्याप्तिवारणाय ।

३ संबन्धत्वं च सांसर्गिकविषयतावत्वम् ।

रूपवत्ताप्रतीतिः प्रमा स्यात्, सबन्धसत्तायाः सबन्धिसत्ताप्रयोजकत्वादिति वाच्यम्। अप्रयोजकत्वात्। परन्तु संबन्धिसंबन्धोभयसत्त्वे प्रतीतिसत्त्वमिति व्युत्पत्तिः, एवं च वायौ रूपसमवायसत्त्वेऽपि रूपाभावेन तथा प्रतीतेरभावादिति। गुणक्रियादिविशिष्टबुद्धिः[1] विशेष्यविशेषणसंबन्धविषया विशिष्टबुद्धित्वात् दण्डीपुरुष इति विशिष्टबुद्धिवदित्यनुमानेन समवायसिद्धिर्बोध्या।

**अभावश्चतुर्विधः। प्रागभाव-प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति।**

दी०—अभावं विभजते। अभाव इति।

गं०—अभावं विभजते इति। अभावविशेष्यकाऽभावत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इत्यन्वयबोधः। मूले **अभावश्चतुर्विध** इति। चतस्रोविधा यस्येति व्युत्पत्त्या चतुःप्रकारवानित्यर्थः। भावभिन्नत्वमभावस्य लक्षणम्। भावत्वं च समवाय—एकार्थसमवायान्यतरसंबन्धेन सत्तावत्वम्, एकार्थसमवायश्च स्वप्रतियोगिकसम-

---

१ सा च गुणवान् घटः, क्रियावान् घटः, जातिमान् घटः इत्याकारिका। अत्र गुणक्रियाजात्यन्यतमप्रकारकज्ञानत्वं पक्षतावच्छेदकम्, एकैकप्रकारकबुद्धित्वस्य पक्षतावच्छेदकत्वे अपरस्य पक्षतावच्छेदककोटिप्रवेशानुपपत्तिः। विशेषणविशेष्ययोः संबन्धः विषयो यस्यां सा इत्यर्थः। संसर्गतानिरूपिका इति यावत्। यत्तु विशेषणविशेष्यसंबन्धानां द्वन्द्वः—ते एव विषयाः यस्यामिति बहुव्रीहिबलेन प्रकारतानिरूपकत्व विशेष्यतानिरूपकत्व—संसर्गतानिरूपकत्वानां त्रयाणां प्रत्येकं साध्यत्वलाभः। अन्यथा विशेषणविशेष्ययोरित्यस्याऽनर्थक्यापत्तेरिति। तत्तुच्छम्। प्रकृते वैयर्थ्यस्येष्टत्वात्। संसर्गतानिरूपकत्वमात्रं साध्यम्, तावतैव समवायसिद्धिसंभवात्। निर्विकल्पके व्यभिचारवारणाय हेतौ विशिष्टेति विशेषणम्। किंचिन्निष्ठप्रकारतानिरूपकबुद्धित्वादित्यर्थकम्। बुद्धिपदं तु पक्षे हेतुसत्त्वबोधनायैवेति ध्येयम्।

वायप्रतियोगित्व स्वप्रतियोगिकसमवायतादात्म्यान्यतररूपः, स्वं सत्ता। अत्र ग्रन्थान्तरे संसर्गाभावत्वाऽन्योन्याभावत्वाभ्यामादौ विभागः, अनन्तरं संसर्गाभावस्य प्रागभावत्वादिधर्मैः त्रेधा विभागः कृतः, तथापि प्रागभावत्वादिना विभागस्याऽवश्यकत्वे किमन्तर्गडुना संसर्गाभावत्वेन विभजनेनेत्याशयेन मूलकृता तथा विभागो न कृत इति ध्येयम्।

**तत्र गन्धवती पृथिवी। सा द्विविधा नित्याऽनित्या च नित्या परमाणुरूपा। अनित्या कार्यरूपा।**

न्या०—गन्धवतीति, गन्धवत्वं पृथिव्या लक्षणम्। लक्ष्या पृथिवी, पृथिवीत्वं लक्ष्यतावच्छेदकम्। पृथिवीत्वावच्छिन्ना लक्ष्यता, यद्धर्मावच्छिन्नं लक्ष्यं सधर्मो लक्ष्यतावच्छेदकः। यो धर्मो यस्या व्यवच्छेदकः सा तद्धर्मावच्छिन्ना तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं, लक्ष्यता पृथिवीत्वावच्छिन्ना। एवं शीतस्पर्शवत्वादिलक्षणेषु जलादीनां लक्ष्यता, जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम्।

दी०—तत्रोद्देशक्रमानुसारेण प्रथमं पृथिव्या लक्षणमाह गन्धवतीति। नाम्ना पदार्थसंकीर्तनमुद्देशः। उद्देशक्रमे च सर्वत्रेच्छैव नियामिका। ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः। न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम्। अवयवगन्धस्यैव तत्र भानसम्भवेन चित्रगन्धानङ्गीकारात्, किञ्चोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न। गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात्। ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न। अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्रभानाङ्गीकारात्, ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां तत्रातिव्याप्तिरिति चेन्न।

शं०—मूले। तत्रेति। द्रव्यादिपुमध्ये। सप्तम्यास्त्वल्। घटकत्वं सप्तम्यर्थः। तथा च द्रव्यादिपदार्थसमुदायघटकीभूतद्रव्यघटकीभूता पृथिवी गन्धवतीत्यर्थः। **पृथिवीत्वं लक्ष्यतावच्छेदकमिति।** अवच्छेदकत्वं चाऽन्यूनाऽनतिरिक्तवृत्तित्वम्। एवं च पृथिवीत्वं लक्ष्यताऽन्यूनानतिरिक्त-वृत्तीति यावत्। **यद्धर्मावच्छिन्नं लक्ष्यमिति।** यद्धर्मविशिष्टमित्यर्थः। **एवमिति।** लक्ष्यं जलम्। जलत्वं लक्ष्यतावच्छेदकम्। "यो धर्मो लक्ष्ये तिष्ठति स धर्मो लक्ष्यतावच्छेदकः। अतो लक्ष्यता जलत्वावच्छिन्ना लक्ष्यतायां हि जलत्वमवच्छेदकम्। अवच्छिन्नत्वं द्विविधम्। अवच्छेदकतानि-रूपकत्वम्, वैशिष्ट्यरूपं च। पृथिवीत्वावच्छिन्ना लक्ष्यतेत्यत्राऽऽद्यम्। पृथिवीत्वावच्छिन्नं लक्ष्यमित्यत्र द्वितीयम्।

तत्र। नवद्रव्येपुमध्ये। **उद्देशक्रमानुसारादिति।** विभागवाक्ये प्रथमोपस्थितत्वरूपलाघवादिति यावत्। **प्रथममिति।** जलादिलक्षणात्प्रा-गित्यर्थः **नाम्नेति।** तृतीयार्थोऽभेदः। **संकीर्त्तने** प्रतिपादकशब्देऽन्वेति। तथा च वस्तुप्रतिपादको नाममात्रमुद्देशः। ननु विभागवाक्ये जलादेरेव प्राङ्नि-र्देशः कुतो न कृत इत्यत आह। उद्देशक्रमे चेति। सर्वत्रोद्देशक्रमे चेति योजना। गन्धवतीति मूलाद् गन्धवत्त्वं पृथिव्यालक्षणं लभ्यते तदनुपपन्न-मित्याक्षिपति। **नन्विति। आरब्धे।** जन्ये **द्रव्ये।** घटादौ। **परस्पर विरोधेनेति।** सुरभिगन्धं प्रति असुरभिगन्धस्य, असुरभिगन्धं प्रति सुरभि-गन्धस्य प्रतिबन्धकत्वेनेत्यर्थः। तयोर्दैशिकाऽव्याप्यवृत्तित्वाभावादित्याशयः। तथा च सुन्दोपसुन्दन्यायेन तत्राऽवयविनि गन्धऽस्वीकारात्। **गन्धप्रती-त्यनुपपत्तिरिति।** घटो गन्धवानिति प्रतीतेः प्रमात्वानुपपत्तिप्रसंग इत्यर्थः। तथा च तादृशप्रमाऽन्यथानुपपत्त्या चित्रगन्धाङ्गीकारस्याऽवश्यकतया नोक्ताऽव्याप्त्यवकाश इति भावः। **अवयवगन्धस्यैवेति।** स्वाश्रयसमवे-तत्वसंबन्धेनेत्यर्थः। समवायघटितसामानाधिकरण्यसंबन्धेनेति यावत्। एवकारेणाऽवयविनि गन्धो व्यवच्छिद्यते। तत्र तादृशघटादावित्यर्थः। **चि-त्रगन्धानंगीकारादिति।** चित्रगन्धस्याऽङ्गीकृत्वादित्यर्थः। तथा च तादृश-

घटादिविशेष्यकप्रमायां समवायघटितसामानाधिकरण्यसंबन्धेन कुसुमाऽवयव-समवेतसुरभिगन्धादेरेव प्रकारत्वसंभवात्, चित्रगन्धस्याऽप्रामाणिकतया तादृशघटादावुक्तलक्षणस्याऽव्याप्तिर्दुर्वारैवेति भावः। ननु नानागन्धवद्द्व्यणुकत्रयारब्धे त्र्यणुके गन्धप्रतीत्यनुपपत्तिः, द्व्यणुकगन्धस्याऽतीन्द्रियत्वेन तद्विषयकत्वेन तादृशप्रत्ययोपपादनाऽसंभवात्। त्रसरेणौ रूपं विहाय सर्वेषां गुणानामयोग्यत्वस्वीकारे नानागन्धवत्त्रसरेण्वारब्धचतुरणुकादिविशेष्यकगन्धप्रतीत्यनुपपत्तिः, तस्माच्चित्ररूपवच्चित्रगन्धाङ्गीकारस्याऽऽवश्यकतया न तत्राऽव्याप्तिरित्याशयेन स्थलान्तरेऽव्याप्तिमाह। **किंचेति। गन्धसमानाधिकरणेत्यादि।** गन्धाधिकरणवृत्तिः या द्रव्यत्वाऽपराजातिः तद्वत्त्वस्येत्यर्थः। अत्र जलत्वादिकमादाय जलादावतिव्याप्तिवारणाय **गन्धसमानाधिकरणेति।** गन्धाधिकरणत्वं तद्वृत्तित्वं च समवायेन विवक्षणीयम्। तेन कालिकेन गन्धाधिकरणजलादौ वर्त्तमानम्, समवायेन गन्धाधिकरणपृथिव्यां कालिकेन वर्त्तमानं च जलत्वादिकमादाय नातिव्याप्तिः। सत्तामादाय तत्रैवातिव्याप्तिवारणाय **द्रव्यत्वापरेति** द्रव्यत्वन्यूनवृत्त्यर्थकम्, तच्च द्रव्यत्वसमानाधिकरणत्वे सति द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्, तेन द्रव्यत्वव्युदासः। जातिमत्ता च समवायेन। तेन कालिकेन। तादृशजातिमत्त्वस्य जलादौ सत्त्वेऽपि न क्षतिः। वस्तुतस्तु गन्धसमानाधिकरणजलाऽसमवेतजातिमत्त्वमेव पृथिव्या लक्षणम्, तेन मूर्तत्वजात्यभ्युपगमपक्षे नोक्ताऽतिप्रसंग इति ध्येयम्। ननु सुरभिजलं, सुरभिःसमीरण इत्याद्यनुभवात् जलादावपि गन्धसिद्ध्या निरुक्तलक्षणं जलादावतिव्याप्तमित्याशयेन शंकते। **नन्विति। पृथिवीगन्धस्यैवेति।** स्वाश्रयसंयुक्तत्वसंबन्धेनेत्यर्थः। **तत्र।** जलादौ। अन्यथा उपाधिसंबन्धशून्यकालेऽपि तत्र तादृशानुभवापत्तेः। **कालस्य।** महाकालस्य। **सर्वाधारतया।** कालिकसंबन्धेनेत्यादिः। **सर्वाधारताप्रयोजकभिन्नसंबन्धेन।** समवायसंबन्धेनेति यावत्।

इदमुपलक्षणम्। पृथिवीत्वजातिमत्त्वमपि पृथिव्यालक्षणम्। न च

पृथिवीत्वजातौ प्रमाणाभाव इति वाच्यम् । गन्धसमवायिकारणतावच्छेदक-तया पृथिवीत्वजातिसिद्धेः । तथाहि । समवायसंबन्धावच्छिन्नगन्धत्वाव-च्छिन्नकार्यतानिरूपततादात्म्यसंबन्धावच्छिन्नकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावदित्यनुमानेन पृथि-वीत्वसिद्धौ तस्य जातिलक्षणाक्रान्तत्वेन बाधकाभावेन च जातित्वमिति ।

**पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरम-स्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्त्ति। विषयो मृत्पाषाणादिः ॥**

दी०—सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन लक्षणस्या-भिमतत्वात् । पृथिवीं विभजते सा द्विविधेति । नित्यत्वं ध्वंसाप्रतियो-गित्वम् । ध्वंसप्रतियोगित्वमनित्यत्वम् प्रकारान्तरेण विभजते । पुन-रिति । आत्मनोभोगायतनं शरीरम् । यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम् । सुखदुःखान्यतरसाक्षात्कारो भोगः । शब्देतरोद्भू-तविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रिय-त्वम् । शरीरेन्द्रियभिन्नोविषयः । एवं च गन्धवच्छरीरं पार्थिव-शरीरम् । गन्धवदिन्द्रियं पार्थिवेन्द्रियम् । गन्धवान् विषयः पार्थिव-विषयः इति तल्लक्षणं बोध्यम् । पार्थिवं शरीरं दर्शयति—शरीर-मिति । इन्द्रियं दर्शयति । इन्द्रियमिति । गन्धग्राहकमिति प्रयोजन-कथनम् । घ्राणमिति संज्ञा । नासाग्रेत्याश्रयोक्तिः । एवमुत्तरत्र ज्ञेयम् । पार्थिवविषयं दर्शयति—मृत्पाषाणेति ।

गं०—प्रकारान्तरेणेति । पृथिवीमित्यनुपज्यते । अत्र नित्यपृथिव्याः शरीरेन्द्रियभिन्नस्वरूपविषयलक्षणाऽऽक्रान्तत्वेन विषयान्तर्गतत्वात्पृथिव्यास्त्रि-विधत्वम् । तथा च पृथिवीसामान्यस्यैवद्वैविध्येन त्रैविध्येनच विभाग इति

भावः । अतएव पुनस्त्रिविधेत्युक्तिः संगच्छते इति ध्येयम् । केचित्तु अनित्य-पृथिव्या एव त्रैविध्यं दर्शयन्ति । शरीरलक्षणमाह । आत्मनइति । आय-तनम् । अवच्छेदकम् । उक्तमेव प्रकाशयति । यदवच्छिन्ने इति । यद्वि-शिष्टे इत्यर्थः । आत्मनीत्यत्र सप्तम्यर्थो निरूपितत्वम्, तस्य जायते इत्यत्र धात्वर्थोत्पत्तौ अन्वयः । भोगो जायत इति । समवायसंबन्धावच्छिन्नोत्प-त्तिमान् भोग इत्यर्थः । तथा च यद्विशिष्टाऽऽत्मनिरूपितसमवायसंबन्धाव-च्छिन्नोत्पत्तिमान् भोग इति फलितार्थः । अत्राऽन्त्यावयवित्वे सतीति विशेष-णीयम् । तेन हस्तपादादीनामवच्छेदकत्वेऽपि न क्षतिः । भोगपदार्थमाह । सुखेति । सुखदुःखान्यतरनिष्ठलौकिकविषयताशालिसाक्षात्कार इत्यर्थः । इदमुपलक्षणम् । चाक्षुषाद्यवच्छेदकत्वम्, सुखाद्यवच्छेदकत्वम्, चेष्टाश्रयत्वं च[1] शरीरलक्षणं बोध्यम् । चेष्टा च हिताऽहितप्राप्तिपरिहारार्था क्रिया । न च शरीरत्वजातिमत्वमित्येव लक्षणं कुतो न कृतमिति वाच्यम् । शरीरत्वं हि न जातिः, पृथिवीत्वादिना सांकर्यादिति ध्येयम् । पृथिवीत्वादिना सांकर्यादिन्द्रिय-

---

१ न च चेष्टाश्रयत्वं हस्तादावतिव्याप्तम्, अव्याप्तं च मृतशरीरादौ, तत्र चेष्टावि-रहादिति वाच्यम् । अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य तदर्थत्वात् । हस्तादावतिव्याप्तिवारणाय अन्त्यावयविमात्रवृत्तीति जातिविशेषणम् । तत्वं च कार्यद्रव्या-नारंभकत्वम् । अत्र द्रव्यत्वे सतीति न निवेशनीयम्, गौरवात् । घटत्वादिजातिव्युदासाय चेष्टावद्वृत्तीति । सत्तादिवारणाय द्रव्यत्वव्याप्येति । चैत्रत्वादिजातिश्चेदृशीति तामादाय लक्षणसमन्वयः । न च चैत्रत्वादिजातीनां शरीरनिष्ठत्वे मानाभावः, चैत्रो जानातीति प्रतीत्या प्रत्युत आत्मनिष्ठत्वकल्पनाया एवोचितत्वात्, य एव चैत्रः कौमारे काश्यां दृष्टः, स एव वार्द्धक्ये मथुरायामधिवसतीति प्रत्ययानुपपत्तेश्च । एतेन चैत्रादिशब्दानां शरीरवाचित्वेऽ-प्यवच्छेदकतया ज्ञानवत्वस्य तत्रापि संभवान्न पूर्वप्रतीतेरनुपपत्तिरिति परास्तमिति वाच्यम् । आत्मवाचित्वे चैत्रत्वस्य जातित्वाऽसंभवात् । चैत्रो रूपवानितिप्रत्ययानुपपत्तिप्रसंगाच्च शरीरवाचित्वमेव । जानातीतिप्रतीतेस्तूक्तैव गतिः । य एव चैत्र इत्यादौ तु तच्छरीरोप-हितात्मनि निरूढलक्षणा । इत्थं च शिवत्व-विष्णुत्वादिजातयोऽपि शरीरनिष्ठा एवेति ध्येयम ।

त्वमपि न जातिरित्याशयवानिन्द्रियसामान्यलक्षणमाह । शब्देतरोद्भूतेति शब्देतरे ये उद्भूतविशेषगुणाः तदनाश्रयत्वे सति ज्ञानकारणीभूतो मनःसंयोगस्तदाश्रयत्वमित्यर्थः । अत्रेत्थं प्रक्रिया । आत्मा मनसा युज्यते, मन न्द्रियेण, ततःप्रत्यक्षम्, आत्ममनःसंयोगः इन्द्रियमनःसंयोगश्च प्रत्यक्षे कार मित्यर्थः । चक्षुपि ये विशेषगुणास्तेऽनुद्भूताः, तथा च शब्देतरोद्भूतविशेषगु नाश्रयत्वस्य ज्ञानकारणीभूतचक्षुर्मनःसंयोगाश्रयत्वस्य च चक्षुपि सत्वाल्ल णसमन्वयः । सत्यन्तदलानुपादाने आत्मनि अतिव्याप्तिः, ज्ञानकारणीभूता त्ममनःसंयोगाश्रयत्वस्य तत्र सत्वात् । सत्यन्तदलोपादाने तु शब्देतरे उद्भूतविशेषगुणा ज्ञानसुखादयस्तदनाश्रयत्वविरहान्नातिव्याप्तिः । श्रोत्रेऽ प्तिवारणाय शब्देतरेति, श्रोत्रस्य आकाशरूपतया, उद्भूतविशेषणगुण शब्दस्य तत्र सत्वेन तदनाश्रयत्वविरहात् । चक्षुरादावव्याप्तिवारण द्भूतेति, तत्र शब्देतरविशेषगुणस्य अनुद्भूतरूपादेः सत्वात् । उद्भू न जातिः शुक्लत्वादिना सांकर्यात्, शुक्लत्वं विहाय उद्भूतत्वं नीलादौ, उद्भू विहाय शुक्लत्वं अनुद्भूतशुक्ले, उभयोः समावेशः उद्भूतशुक्ले इति । न शुक्लत्वव्याप्यं नानैवोद्भूतत्वम्, एवं च शुक्लनीलादिनिष्ठं भिन्नभिन्नमेवोद्भू त्वमतो नोक्तदोप इति वाच्यम् । तथा सति व्यतिरेकव्यभिचारेण चाक्षुपत्व वच्छिन्नं प्रति उद्भूतत्वविशिष्टरूपत्वेन हेतुताभङ्गप्रसंगात्, किन्तु शुक्लत्वा व्याप्यमनुद्भूतत्वं नाना, तदभावकूटश्चोद्भूतत्वमिति स्वीकार्यम्, एव तादृशोद्भूतगुणः संयोगादिरपीति तदनाश्रयत्वाभावादसंभववारण विशेषेति । कालादावतिव्याप्तिवारणाय विशेष्यदलम् । तद्घटकज्ञानकार त्यपि तद्वारणाय । कालादौ रूपाभावाच्चाक्षुपं प्रति चक्षुःसंयुक्त विशेपणतायाः सन्निकर्पतया तद्घटकचक्षुःसंयोगस्यापि हेतुत्वेन त श्रयकालादावतिव्याप्तिवारणाय मनः पदम् । विपयेन्द्रियावयवसंयोग प्रत्यक्षकारणतया तदाश्रयस्य इन्द्रियावयवस्य वारणाय तदिति प्राचीनाः

**शरीरेन्द्रियभिन्न** इति । शरीरभिन्नत्वे सति इन्द्रियभिन्नत्वे स उपभोगसाधनं विषय इत्यर्थः ।

एवं चेति । शरीरादिसामान्यलक्षणेषु ज्ञातेषु चेत्यर्थः । **गन्धवच्छरीरमिति** । गन्धवन्निष्ठनिरुक्तशरीरत्वं पार्थिवशरीरस्य लक्षणमित्यर्थः । **तत्तल्लक्षणं बोध्यमिति** । पृथिवीशरीरलक्षणवत् जलादिशरीरादिलक्षणं ज्ञेयमित्यर्थः । **पृथिवीशरीरं दर्शयतीति** । पृथिवीशरीरस्वरूपं दर्शयतीत्यर्थः । मूले **अस्मदादीनामिति** । अवच्छेदकत्वं षष्ठ्यर्थः । तथा चाऽस्मदादिरूपाऽऽत्मनोऽवच्छेदकीभूतं यच्छरीरं तत्पार्थिवशरीरमित्यर्थः । आत्मा हि शरीरावच्छिन्नः, तदवच्छेदकं शरीरमिति । अस्मच्छब्देन योनिजपरिग्रहः । आदिना अयोनिजस्वेदजोद्भिज्जयोः परिग्रहः । मूले । **गन्धग्राहकमिति** । गन्धस्य ग्राहकं गन्धग्राहकम् । विषयत्वं षष्ठ्यर्थः । ग्रहधातोर्ज्ञानमर्थः । ण्वुल्प्रत्ययस्य जनकत्वमर्थः । तथा च गन्धविषयकज्ञानजनकमित्यर्थः । **नासाग्रवर्त्तीति** । अग्रावच्छेदेन नासावर्त्तीत्यर्थः । न तु नासाग्रमेव घ्राणम् ।

न च घ्राणेन्द्रिये मानाभाव इति वाच्यम् । गन्धसाक्षात्कारो मनोभिन्नेन्द्रियकरणकः मानसेतरसाक्षात्कारत्वात् चाक्षुषवदित्यनुमानस्यैव प्रमाणत्वात् । एवं गन्धपदस्थाने रसादिपदं निक्षिप्य रसनादीन्यग्रे साधनीयानि ।

न च घ्राणेन्द्रियस्य पार्थिवत्वे किं मानमिति वाच्यम् । घ्राणेन्द्रियं पार्थिवं[1] द्रव्यत्वे सति गन्धभिन्नरूपाद्यन्यतमाऽव्यंजकत्वे सति गन्धविषयकलौकिकसाक्षात्कारजनकतावच्छेदकधर्मवत्वात्, कुंकुमगन्धाभिव्यंजकगोघृतवदित्यनुमानस्यैव प्रमाणत्वात् ।

पृथिवीविषयस्य स्वरूपमाह । **विषयो मृत्पाषाणादिरिति** मृच्च पाषाणश्च मृत्पाषाणौ तौ आदी यस्येति विग्रहः । आदिपदेन पृथिवीमात्रपरिग्रहः ।

---

१ पृथिवीजन्यम् । समवायेन पृथिवीत्वं साध्यमिति तु फलितार्थः । तेन पृथिवीजन्यत्वेऽपि न पृथिवीत्वाऽसिद्धिदोषतादवस्थ्यम् । न च पृथिवीजन्यत्वेन पृथिवीत्वाऽनुमानम् । रूपादौ व्यभिचारादिति ध्येयम् ।

अथ पाषाणे गन्धाभावाद् गन्धवत्त्वलक्षणमव्याप्तम् तत्र गन्धस्य गन्धोपलब्धिप्रसंगादिति चेन्न। तत्राऽनुद्भूतगन्धस्वीकारात्। तथा च पाषाणः गन्धवत् पृथिवीत्वाद् घटवदित्यनुमानमेव प्रमाणतया बोध्यम्। ननु पाषाणस्य पृथिवीत्वे एव किं मानमिति चेद्। इत्थम्। पाषाणभस्मनि गन्धः प्रत्यक्षसिद्धः, अतस्तत्र पृथिवीत्वं निर्विवादम्। ततश्च भस्मारंभकपरमाणवः गन्धवन्तः गन्धवद्भस्मोपादानत्वात्। कारणगुणाः कार्यगुणानारभन्ते इति न्यायात्। एवं च तत्रापि गन्धवत्त्वेन पृथिवीत्वमङ्गीकरणीयम्। भस्मारंभकावयवपाषाणारंभकावयवयोरैक्येन "पाषाणपरमाणवः गन्धवन्तः गन्धवद्भस्मोपादानत्वादित्यनुमानबलेन" पाषाणपरमाणुषु गन्धसिद्धौ पृथिवीत्वसिद्धिः। ततः पाषाणभस्म पाषाणोपादानोपादेयं पाषाणध्वंसजन्यत्वात् महापटध्वंसजन्यखण्डपटवदित्यनुमानेन भस्मनि पाषाणोपादानोपादेयत्वसिद्धौ तुल्यान्वेद्यतया "पाषाणं पृथिवी गन्धवद्भस्मोपादानोपादेयत्वादित्यनुमानेन पृथिवीत्वसिद्धिः।

**शीतस्पर्शवत्य आपः, ता द्विविधा, नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः पुनस्त्रिविधा। शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति विषयः सरित्समुद्रादिः।**

दी०—अपांलक्षणमाह—शीतेति। उत्पन्नविनष्टे जलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम्। शीतं शिलातलमित्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः, अन्यत्सर्वं पूर्वरीत्या व्याख्येयम्।

सं०—अपां लक्षण माह। क्रमप्राप्तानामित्यादिः। शीतस्पर्शवं

लक्षणम् । शीतत्वं स्पर्शत्वव्याप्यजातिविशेषः । तदवच्छिन्नवत्वमेव लक्षणम् । न तु स्पर्शत्वस्यापि प्रवेशः, व्यर्थत्वात् , परन्तु शीतत्वं स्पर्शत्वव्याप्यमिति स्फुटीकरणाय स्पर्शपदमुपात्तमिति ध्येयम् । अत्र जलत्वं लक्ष्यतावच्छेदकम्, सा जातिः, जन्यशीतस्पर्शजनकतावच्छेदकतया जन्यजलमात्रवृत्तिजातिसिद्धौ तदवच्छिन्नजनकतावच्छेदकतया परमाणुसाधारणतया सिद्ध्यति । तथा च समवायसम्बन्धावच्छिन्नजन्यशीतस्पर्शत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् , इत्यनुमानेन जन्यजलत्वजातिसिद्धिः, ततः समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन परमाणुसाधारणजलत्वजातिसिद्धिः ।

नन्वेवमपि जन्यशीतस्पर्शजनकतावच्छेदकतया सिद्धाया जन्यजलत्वजातेर्यथा न परमाणुवृत्तित्वं, तथा जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया सिद्धाया अपि जलत्वजातेर्नान्त्यावयविजलवृत्तित्वम् साधकाभावादित्थं च नित्यानित्यसाधारणजलत्वजातौ मानाभाव इति चेन्न । जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया सिद्धजलत्वस्याऽन्त्यावयविजलवृत्तित्वानभ्युपगमे जन्यशीतस्पर्शजनकतावच्छेदकतया सिद्धजात्या सांकर्यवारणाय तत्रापि तद्वृत्तित्वमुपगन्तव्यमिति सिद्धं सर्वजलसाधारणजलत्वमिति दिक् ।

उत्पन्नविनष्टे जले इति । द्वितीयक्षणवृत्तिध्वंसप्रतियोगिजले इत्यर्थः । द्रव्यत्वापरजातीति । द्रव्यत्वव्याप्यजातीत्यर्थः । न च मूर्तत्वजात्यभ्युपगमपक्षे मूर्तत्वजातिमादाय घटादावतिव्याप्तितादवस्थ्यमिति वाच्यम् । द्रव्यत्वव्याप्येत्यस्य पृथिव्यसमवेतार्थकत्वात् । तथा च पृथिव्यवृत्तिशीतस्पर्शसमानाधिकरणजातिमत्वं लक्षणं फलितम् । यथाश्रुतपरिष्कृतलक्षणस्याऽतिव्याप्तिसंपादकभ्रमं निराकरोति । शीतं शिलातलमित्यादाविति । आदिना शीतं सुवर्णं, शीतो वायुरिति प्रतीतिपरिग्रहः । जलरूपोपाधिसंबन्धवशादेवेत्यर्थः । तथा च शीतं शिलातलमिति प्रतीतेः जलरूपोपाधिसंयोगसत्तानियतसत्ताकत्वात् , जलनिष्ठशीतस्य स्वसमवायिसंयोगसंबन्धेन

तादृशप्रतीतिविषयत्वाभ्युपगमेनैवोपपत्तेः तत्र समवायेन शीतस्पर्शसाध
प्रमाणाऽभावान्न तत्राव्याप्तिः । अन्यत्सर्वमिति । नित्यत्वादिस्वरू
जलीयशरीरादीनां लक्षणं चेत्यर्थः। पूर्वरीत्या व्याख्येयमिति । पृथि
ऽवोह्यमित्यर्थः ।

ननु जलशरीरसत्त्वे चक्षुषा कुतो न गृह्यते इत्यत आह । मूले । वा
णलोके इति । तथा च दूरस्थत्वान्नप्रत्यक्षविषय इति भावः । न च त
रीरस्य जलत्वे मानाभाव इति वाच्यम् । जलत्वं शरीरसमवेतं जातित्वे स
परमाणुविशिष्टत्वात्, पृथिवीत्ववद् । वै० स्वसमवेतत्व-स्वसमवेतसमवेत
भयसंबन्धेन, इत्यनुमानस्यैव प्रमाणत्वात् ।

ननु रसनेन्द्रियस्य जलीयत्वे किं मानमिति चेन्न । रसनं जलीयं
त्वे सति रसभिन्नरूपाद्यन्यतमाव्यंजकत्वे सति रसव्यंजकत्वात् सक्तु
भिव्यंजकोदकवदित्यनुमानस्यैव प्रमाणत्वात् ।

**उष्णस्पर्शवत्तेजः । तद् द्विविधम् । नित्यम
नित्यं च । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम्
पुनस्त्रिविधम् । शरीरेन्द्रियविषयभेदात् । शरीरमा
दित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्र
वर्त्ति । विषयश्चतुर्विधः, भौमदिव्योदर्याकरजभे
दात् । भौमं वन्ह्यादिकं अविन्धनं दिव्यं विद्युदादि
भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि।**

दी०—तेजसोलक्षणमाह—उष्णस्पर्शवदिति । 'उष्णंजलं
इति प्रतीतेस्तेजःसम्बन्धानुविधायित्वात् नातिव्याप्तिः । विषयं वि
जते—भौमेति ।

गं०—तेजसो लक्षणमाहेति । क्रमप्राप्तस्येत्यादिः, उष्णस्प

वत्वं[1] तेजसो लक्षणम् । उष्णस्पर्शसमानाधिकरणजलासमवेतजातिमत्वमिति यावत् । तेनोत्पन्नविनष्टतेजसि नाव्याप्तिः । **उष्णं जलमित्यादिप्रतीतेरिति।** आदिना उष्णो वायुः, उष्णमयोगोलकमित्यादिप्रतीतेः परिग्रहः । **तेजः संबन्धानुविधायित्वादिति** । तेजोरूपोपाधिसंयोगसत्तानियतसत्ताकत्वादित्यर्थः **नातिव्याप्तिरिति** । तथा च तादृशप्रतीतेः स्वसमवायिसंयोगसंबन्धेन उपाधिगतोष्णस्पर्शविषयत्वेनैवोपपत्तेः जलादौ समवायेनोष्णस्पर्शसाधकप्रमाणाभावेन न तत्राऽतिव्याप्तिरितिभावः । तेजस्त्वजातिसिद्धिस्तु जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया जन्यतेजस्त्वजातिसिद्धौ तदवच्छिन्नजनकतावच्छेदकतया सिद्ध्यति । प्रकारः पूर्ववत् । चक्षुस्तेजसं द्रव्यत्वे सति स्पर्शाद्यव्यंजकत्वे सति परकीयरूपव्यंजकत्वात्प्रभावदित्यनुमानमेव चक्षुषस्तैजसत्वे मानं बोध्यम् ।

मूले । **भौमेत्यादि** । भूमौ भवं भौमं, दिवि भवं दिव्यं, उदरे भवमौदर्य, आकरे जायते इत्याकरजमिति व्युत्पत्तिर्बोध्या । भौमं दर्शयति । **वन्ह्यादीति** । आदिना प्रदीपादेः परिग्रहः । इदं तु काष्ठतैलादिरूपपार्थिवेन्धनकमिति बोध्यम् । दिव्यं दर्शयति । **अबिन्धनमिति** । दिव्यं विद्युदादि अबिन्धनमिति योजना । आपः इन्धनं उद्दीपकं यस्य, अद्भिः इन्धनं उद्दीपनं यस्येति वा व्युत्पत्तिः । आद्ये करणे ल्युट् , द्वितीये भावे ल्युडिति विशेषः, आदिना उल्कावडवानलपरिग्रहः । औदर्यं दर्शयति । **भुक्तस्येति** । अन्नादेरित्यर्थः । **परिणामः** परिपाकः, रक्तवसामांसमलधातुरूपेण निष्पत्तिः, तत्र **हेतुः**—निमित्तकारणमित्यर्थः । जाठररूपमिति यावत् । **आकरः** खनिः तत्र जातमित्यर्थः । आदिना रजतादिपरिग्रहः ।

**दी०—ननु सुवर्णं पार्थिवम् पीतत्वाद् गुरुत्वात् हरिद्रावत् इति चेत् न । अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन**

---

१ स्वर्णचन्द्रकिरणादौ तु उष्णस्पर्शः पार्थिवादिस्पर्शेनाऽभिभूतः, मण्यादिना वन्ह्यादाविव, तेन न तत्राऽव्याप्तिः ।

जलमध्यस्थघृतादौ द्रवत्वनाशादर्शनेन च असति प्रतिबन्धके पार्थिव-द्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात् । सुवर्णस्य अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिव-त्वानुपपत्तेः, तस्मात् पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्या-न्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः, रूपव-त्तया वाय्वादिष्वनन्तर्भावात्, तैजसत्वसिद्धिः । तस्योष्णस्पर्शभा-स्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः तस्मात् सुवर्णं तैजसमिति सिद्धम् ।

गं०—सुवर्णस्य तैजसत्वं व्यवस्थापयितुं आदावाक्षिपति । नन्वित्या-दिना । पीतत्वादिति । न च हेत्वन्तरानुसरणं व्यर्थमिति वाच्यम् पीतत्वस्य पार्थिवत्वसाधकत्वात्, गुरुत्वस्य तु तेजोभिन्नत्वसाधकत्वात् । न च द्वितीयानुमानं व्यर्थमिति वाच्यम् । परमतनिराकरणपूर्वकस्वसिद्धान्तकथ-स्याऽवश्यकतया पराभिमततेजस्त्वाभावसाधनाय तस्याऽवश्यकत्वादिति सुवर्णं[1] अपार्थिवं असति प्रतिबन्धके अत्यन्ताऽनलसंयोगे सति अनुच्छिद्य-मानद्रवत्वाधिकरणत्वात्, यन्नैवं तन्नैवं यथा पृथिवी इत्यनुमानेन सुवर्णस्य

---

टि० १ अत्यन्ताऽनलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणमित्यर्थः । तेन वाधपक्षाऽप्रसिद्धी । अपार्थिवमिति । तैजसमित्यर्थः । जलमध्यस्थ घृतादौ व्यभिचारवा-रणायाऽसति प्रतिबन्धके इति । अग्निसंयोगाऽसमानाधिकरणद्रवत्ववति घृतादौ व्यभिचार-वारणाय अत्यन्ताऽनलसंयोगे सतीति । उच्छिद्यमानोद्रवो, द्रवत्वं, यस्य स उच्छिद्य-मानद्रवः, न उच्छिद्यमानद्रवः इत्यनुच्छिद्यमानद्रवः तस्य भावस्तत्त्वमिति । अनुच्छि-द्यमानेति । नाशाऽप्रतियोगीत्यर्थः । अत्राऽनुच्छिद्यमानद्रवत्वाधिकरणत्वादित्येवार्थो नतूच्छिद्यमानद्रवत्वानधिकरणत्वादित्यर्थः, गगनादौ व्यभिचारात् । न च पीतिम-गुरुत्वाश्रयस्य पार्थिवभागस्यापि तदानीं अनुच्छिद्यमानद्रवत्वाधिकरणत्वाद्व्यभिचार इति वाच्यम् । पार्थिवभागस्य जलमध्यस्थमसीचूर्णवदद्रुतत्वादिति ध्येयम् ।

पीतिमगुरुत्वाश्रयतोऽतिरिक्तत्वं व्यवस्थापयन्ननुमानेऽ प्रयोजकत्वशंकावारणायाऽनुकूलतर्कं दर्शयति । **अत्यन्तानलेति** । **घृतादाविति** । आदिना जलत्वादिपरिग्रहः । **द्रवत्वनाशदर्शनेन** । द्रवत्वनाशस्याऽनुभवसिद्धत्वेनेत्यर्थः । एतेन पार्थिवद्रवत्वनाशं प्रति विजातीयाग्निसंयोगस्य कारणत्वं सूचितम् । **जलमध्यस्थेति** । विजातीयाग्निसंयोगे सत्यपीति शेषः । **नाशाऽदर्शनेनेति** । एतेन पृथिवीद्रवत्वनाशं प्रति द्रवद्रव्यान्तरस्य सयोगेन प्रतिवन्धकत्वमाविष्कृतम् । **पार्थिवत्वानुपपत्तेरिति** । पीतिमाश्रयनिष्ठद्रवत्वनाशप्रतिवन्धकस्येत्यादिः । पृथिवीस्वरूपत्वासंभवादित्यर्थः । तस्यापि पृथिवीस्वरूपत्वे विजातीयाग्निसंयोगेन तन्निष्ठद्रवत्वस्यापि नाशात्पीतिमाश्रयनिष्ठद्रवत्वनाशप्रतिवन्धकत्वानुपपत्तिरित्याशयः । एवं च अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः, द्रवत्वनाशप्रतिवन्धकविजातीयद्रवद्रव्यसंयुक्तः अत्यन्तानलसंयोगेऽपि अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् जलमध्यस्थघृतवदित्यनुमानं फलितम् । इदमुपलक्षणम् । अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिवन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् जलमध्यस्थपीतपटवदित्यनुमानेनाऽपि तत्सिद्धिर्बोध्या । **जलत्वानुपपत्तेरिति** तथा च पीतरूपाश्रयनिष्ठद्रवत्वनाशप्रतिवन्धकद्रवद्रव्यं जलभिन्नं नैमित्तिकद्रवत्ववत्वाद् घृतवदित्यनुमानाज्जलभिन्नत्वसिद्धिरिति भावः । **रूपवत्त्वेति** । तथा च तादृशद्रव्यं वाय्वादिभिन्नं रूपवत्वादित्यनुमानेन वाय्वादिभिन्नत्वसिद्धिः । न च स्वरूपासिद्धिरिति वाच्यम् । वाय्वादिवत् रूपवद्भिन्नद्रव्यस्याऽप्रतिवन्धकत्वेन तद्वदेतस्यापि प्रतिवन्धकत्वानुपपत्या रूपवत्वस्वीकारादिति । **तैजसत्वसिद्धिरिति** । प्रतिवन्धकद्रवद्रव्यस्येत्यादिः । ननु तस्य तैजसत्वे, तत्र उष्णस्पर्शभास्वररूपयोः कुतो नोपलब्धिरत आह । **तस्येति** । प्रतिवन्धकद्रव्यस्येत्यर्थः । **उपष्टंभकेति** । अभिभावकेत्यर्थः । **प्रतिवन्धादिति** । अभिभूतत्वादित्यर्थः । **अनुपलब्धिरिति** । प्रत्यक्षाऽविषयत्वमित्यर्थः । **तस्मादिति** । प्रतिवन्धकद्रव्यस्य उष्णस्पर्शभास्वररूपवत्वे वाधकाभावादित्यर्थः ।

रूपरहितस्पर्शवान् वायुः। स द्विविधः। नित्यो-ऽनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः पुनस्त्रिविधः। शरीरेन्द्रियविषयभेदात्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्त्ति। विषयो वृक्षादिकम्पनहेतुः। शरीरान्तः संचारी वायुः प्राणः, स चैकोऽप्युपाधिभेदात् प्राणापानादि-संज्ञां लभते।

न्या०—एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति। रूपरहितेति। रूपरहितत्वेसति स्पर्शवत्वं वायोर्लक्षणम्। सति सप्तम्या विशिष्टार्थकतया सामानाधिकरण्यसम्बन्धेन रूपत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टस्पर्शवत्वं वायोर्लक्षणम्। विशेषणांशाऽनुपादाने स्पर्शवत्वमात्रस्यलक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः, तत्रापि स्पर्शवत्वसत्वादतस्तद्वारणाय विशेषणोपादानम्। तावन्मात्रोपादाने आकाशादावतिव्याप्तिः, तत्रापि रूपरहितत्वसत्वादतस्तद्वारणाय विशेष्योपादानम्।

गं०—मूले रूपरहितेति। रूपेण रहितो रूपरहितः। अत्र तृतीयार्थः प्रतियोगित्वम्, रहधातोरभावः, क्तप्रत्ययस्यचाऽऽश्रयत्वमर्थः। तथा च रूपप्रतियोगिकाभावाश्रयत्वे सति स्पर्शवत्वं वायोर्लक्षणमित्यर्थः। तथा च समवायसंबन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगिताकाभाववत्वं फलितम्, तेन संयोगेन रूपाभावं—रूपघटोभयाभावं चादाय पृथिव्यादौ नातिव्याप्तिः। स्पर्शवत्वं च स्पर्शसमानाधिकरणद्रव्यविभाजकजातिमत्वम्, तेनोत्पत्तिक्षणावच्छेदेन वायौ, उत्पन्नविनष्टवायौ च नाव्याप्तिः। रूपासमानाधिकरण

स्पर्शसमानाधिकरणजातिमत्त्वमिति निष्कर्षः । तेन उत्पत्तिक्षणावच्छेदेन घटादौ उत्पन्नविनष्टघटादौ च रूपरहितत्वेऽपि नातिव्याप्तिरिति ध्येयम् ।

त्वगिन्द्रियं वायवीयं स्पर्शभिन्नरूपाद्यन्यतमाऽव्यंजकत्वे सति स्पर्श-व्यंजकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यंजकव्यजनपवनवदित्यनुमानेन त्वगि-न्द्रियस्य वायुत्वसिद्धिर्बोध्या । मूले । **सर्वशरीरवृत्तीति** । शरीरनिरूपित-देशविशेपानवच्छिन्नवृत्तिताश्रयमित्यर्थः । शरीरत्वव्यापकमिति यावत् । **शरी-रान्तः संचारीति** । य एव वृक्षादिकंपनहेतुः स एव शरीरान्तःसंचारी-चेत्प्राणशब्देन व्यवह्रियते इत्यर्थः । **स चैकोपि** । शरीरान्तःसंचारी प्राणश-ब्दवाच्यः लाघवादेकोपि सन्नित्यर्थः । **उपाधिभेदादिति** । हृदादिरूपस्थान-भेदात् क्रियाभेदाच्चेत्यर्थः ।

न्या०—अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम् । यथा गोः-शृङ्गित्वं लक्षणं कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्यविद्यमानत्वात् । अव्याप्तिर्नाम, लक्ष्यैकदेशाऽवृत्तित्वम् । लक्ष्यैकदेशे, लक्ष्यतावच्छेदकाश्रयीभूते क्वचिल्लक्ष्ये लक्षणाऽसत्त्वम-व्याप्तिरित्यर्थः । यथा गोर्नीलरूपवत्वं लक्षणं कृतं चेल्लक्ष्यतावच्छेद-काश्रयीभूतश्वेतगवि अव्याप्तिस्तत्रनीलरूपाभावात् । असम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणाऽसत्त्वम् । यथा गोरेकशफवत्वं लक्षणं कृतं चेत्, गोसामान्यस्य द्विशफवत्वेन एकशफवत्वस्य कुत्राप्यसत्वात् । अतिव्याप्त्यव्याप्त्यसम्भवानां निष्कृष्टलक्षणं तु लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्न-प्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः । अव्याप्तिस्तु लक्ष्य-तावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । असम्भवस्तु लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ।

दी०—वायुं निरूपति । रूपरहितेति । आकाशादावतिव्याप्ति-

वारणाय स्पर्शवानिति । पृथिव्यादावतिव्याप्तिवारणाय रूपरहितेति। ननु प्राणस्य कुत्रान्तर्भावः इत्यत आह । शरीरेति । सचेति। एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैर्व्यवह्रियत इत्यर्थः । स्पर्शानुमेयो वायुः । तथाहि योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शो भासते स स्पर्शः क्वचिदाश्रितः गुणत्वात् रूपवत् । नचाऽस्य पृथिवी आश्रयः, उद्भूतस्पर्शवत्पार्थिवस्योद्भूतरूपवत्त्वनियमात् । न जलतेजसी, अनुष्णाशीतत्वात् । न विभुचतुष्टयम्, सर्वत्रोपलब्धिप्रसंगात् । न मनः, परमाणुस्पर्शस्याऽतीन्द्रियत्वाद्, तस्माद् यः प्रतीयमानस्पर्शाश्रयः स वायुः । ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत् इति चेत् न उद्भूतरूपवत्वस्योपाधित्वात्, यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं तत्र उद्भूतरूपवत्वम् इति घटादौ साध्यव्यापकत्वम्। पक्षे साधनाव्यापकत्वम् । नचैवं तप्तवारिस्थतेजसोऽप्यप्रत्यक्षत्वापत्तिः । इष्टत्वात् । तस्मात् रूपरहितत्वाद्वायुः प्रत्यक्षः ।

गं०—ननु वायौ प्रमाणाभावात् तस्य लक्षणादिकरणमयुक्तमित्याशंक्य प्रमाणप्रदर्शनेन परिहरति। स्पर्शानुमेयो वायुरिति। तथा च महत्वोद्भूतरूपवद्द्रव्यसंयोगाऽसमानकालीनप्रत्यक्षविषयः स्पर्शः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसमवेतः पृथिव्याद्यष्टद्रव्याऽसमवेतत्वे सति द्रव्यसमवेतत्वादिति परिशेषानुमानेन पृथिव्याद्यष्टद्रव्यातिरिक्तवायुनामकनवमद्रव्यसिद्ध्या नोक्तशंकेति भावः । विशेष्यासिद्धिं परिहरति । तथाहीति । वायौ वाति सति । वायुसंयोगे सतीत्यर्थः । महत्त्वोद्भूतरूपवद्द्रव्यसंयोगेऽसतीति यावत् । भासते इति प्रत्यक्षविषय इत्यर्थः । तथा च महत्वोद्भूतरूपवद्द्रव्यसंयोगाऽसमानकालीनप्रत्यक्षविषयः स्पर्श इत्यर्थः । क्वचिदाश्रितः। द्रव्यसमवेत इत्यर्थः । रूपवदिति । अनेन विशेष्याऽसिद्धिः परिहृता ।

सत्यन्तासिद्धिं क्रमेण परिहरति । नचेति । अस्य । तादृश-

स्पर्शस्य । **पृथिवी आश्रयः ।** पृथिव्यधिकरणमित्यर्थः । एवं च तादृश-स्पर्शाधिकरणं उद्भूतस्पर्शविशिष्टपृथिवीत्वाभाववत् उद्भूतरूपाभावात् रूप-वदित्यनुमानं फलितम् । उद्भूतरूपस्य उद्भूतस्पर्शविशिष्टपृथिवीत्वव्यापकतया व्यापकाभावेन व्याप्याभावसिद्धेरिति । **न जलतेजसीति ।** तादृशस्पर्शा-श्रयः न जलं, न वा तेज इत्यर्थः । **न विभुचतुष्टयमिति ।** तादृशस्पर्शाधि-करणं विभुचतुष्टयं नेत्यर्थः । एवं च तादृशस्पर्शः आकाशादि-आत्मान्तान्यतम-समवेतत्वाभाववान् गुहादिप्रविष्टशरीरावच्छेद्यप्रत्यक्षनिरूपितलौकिकविषय-ताशून्यत्वे सति विशेषगुणत्वाद् घटरूपवदिति फलितम् । शब्दादौ व्यभि-चारवारणाय सत्यन्तम् । कालपरिमाणादौ व्यभिचारवारणाय विशेष्यदलम् । तर्कमाह । **सर्वत्रेति ।** स स्पर्शो यदि आकाशादि-आत्मान्तान्यतमसंमवेत-विशेषगुणः स्यात्तदेत्यादिः । गुहादिप्रविष्टशरीराद्यवच्छेद्यप्रत्यक्षनिरूपितलौकि-कविषयतावान्स्यादित्यर्थः । **न मन इति ।** तादृशस्पर्शाधिकरणं मनोभिन्नमि-त्यर्थः । मनःसमवेतत्वाभाववत् लौकिकविषयतावत्वात् घटादिरूपवदित्यनु-मानं फलितम् । तत्रापि तर्कं दर्शयति । **परमाणुस्पर्शस्येति ।** अत्र स्पर्श-पदं गुणकर्मोपलक्षकम् । परमाणुसमवेतगुणादेरित्यर्थः । **अतीन्द्रियत्वादिति** लौकिकविषयताशून्यत्वादित्यर्थः । स च स्पर्शो यदि मनःसमवेतः स्यात्तदा लौकिकविषयताशून्यः स्यादिति तर्कः पर्यवसन्नः । **तस्मादिति ।** परिशेषा-नुमानादित्यर्थः । **इदमुपलक्षणम् ।** असति रूपवद्द्रव्याभिघाते यो यं पर्णादिषु शब्दसन्तानः सः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानाव-यवद्रव्यसंबन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत् । एवं नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवद् । एवं रूपवद्द्रव्याभिघात-मन्तरेण तृणे कर्मस्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात् नदी-पूराहतकाशादिकर्मवदित्यादीन्यपि बोध्यानि ।

वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपं कारणम्, किन्तु चाक्षुषप्रत्यक्षे-रूपम्, स्पार्शनप्रत्यक्षे स्पर्शःकारणमिति वायोः प्रत्यक्षत्ववादिनवीनमतं

दूषयितुं तन्मतमुपन्यस्यति। नन्वित्यादिना। अनुद्भूतस्पर्शाश्रये त्वगिन्द्रिये व्यभिचारवारणाय हेतौ प्रत्यक्षेति। ननु साध्यव्यापकत्वे सति साधनाऽव्यापकत्वं उपाधिः, एवं च तादृशप्रत्यक्षत्वस्य गुणादावपि सत्त्वे तत्रोद्भूतरूपाभावेन साध्याव्यापकत्वात्कथं तस्योपाधित्वमित्यत आह। यत्रेति। तथाचोद्भूतरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वान्नोपाधित्वभंग इति भावः। एवं। प्रत्यक्षस्पर्शाश्रयस्याप्युद्भूतरूपाभावेन प्रत्यक्षत्वानंगीकारे। अप्रत्यक्षत्वापत्तिरिति। उद्भूतरूपाभावादित्यर्थः।

दी०—इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते। ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते, ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते। त्रिभिर्द्व्यणुकैस्त्र्यणुकम्, एवं चतुरणुकादिक्रमेण महापृथिवी, महत्य आपः, महत्तेजः, महान् वायुरुत्पद्यते। एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात् क्रियया परमाणुद्वयविभागे सति द्व्यणुकस्य नाशः। ततस्त्र्यणुकस्य इत्येवं पृथिव्यादिनाशः। असमवायिकारणनाशात् द्व्यणुकनाशः। समवायिकारणनाशात् त्र्यणुकनाश इति सम्प्रदायः। सर्वत्रासमवायिकारणनाशाद् द्रव्यनाश इति नवीनाः। किम्पुनः परमाणुसद्भावे प्रमाणम्। उच्यते। जालसूर्यमरीचिस्थं सूक्ष्मतमं यद्रजो दृश्यते तत्सावयवं चाक्षुषद्रव्यत्वात् पटवत्। त्र्यणुकावयवोऽपि सावयवः महदारम्भकत्वात् तन्तुवत्। यो द्व्यणुकावयवः स एव परमाणुः, स च नित्यः। कार्यत्वेऽनवस्थाप्रसङ्गात्। तथा च मेरुसर्षपयोरपि तुल्यपरिमाणापत्तेः। सृष्टिप्रलयसद्भावे "धाता यथापूर्वमकल्पयत्" इति श्रुतिः प्रमाणम्। सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः। सर्वभावकार्यध्वंसो महाप्रलय इति विवेकः।

गं०—इदानीमिति। पृथिव्यादिचतुष्टयस्य लक्षणस्वरूपप्रामाण्यक

थनानन्तरमित्यर्थः । **उत्पत्तिविनाशक्रम** इति । उत्पत्तिक्रमः विनाशक्रमश्चेत्यर्थः । **कथ्यते** । शिष्यबुद्धिवैशद्यायेत्यादिः । सप्रमाणमुच्यते इत्यर्थः । **ईश्वरस्येत्यादि** । तथाहीत्यादिः । **चिकीर्षावशादिति** । कर्त्तुमिच्छा चिकीर्षा—कुर्यामित्याकारिका—तादृशेच्छारूपनिमित्तकारणात्, अदृष्टवदात्मसंयोगरूपाऽसमवायिकारणसहकृतादित्यर्थः । **क्रियेति** । द्रव्यारंभानुगुणक्रियेत्यर्थः । **ततः** । तादृशक्रियाजन्यविभागजन्यपूर्वदेशसंयोगनाशादित्यर्थः । उत्पत्तिक्रममुपाद्य नाशक्रममुपपादयति । **एवमिति** । उत्पत्तिक्रमकथनानन्तरमित्यर्थः । **उत्पन्नस्य कार्यद्रव्यस्येति** । अत्रोत्पन्नस्येति स्वरूपकथनम्, अनुत्पन्नकार्यद्रव्याऽप्रसिद्धेरिति ध्येयम् । **संजिहीर्षावशादिति** । संहर्त्तुमिच्छारूपनिमित्तकारणादित्यर्थः । अत्रापि अदृष्टवदात्मसंयोगस्याऽसमवायिकारणता बोध्या । **क्रिययेति** । तृतीयार्थोजन्यत्वम्, तस्य विभागेऽन्वयः । **द्व्यणुकनाश** इति । आरम्भसंयोगनाशपूर्वकद्व्यणुकनाश इत्यर्थः । **इत्येवमिति** । एतादृशक्रमेणेत्यर्थः । **पृथिव्यादिनाश** इति । कार्यरूपपृथिव्यादिचतुष्टयनाश इत्यर्थः । **असमवायिकारणनाशादिति** । परमाणुद्वयसंयोगनाशादित्यर्थः । न तु समवायिकारणनाशात्, समवायिकारणस्य परमाणोर्नाशाऽसंभवादिति भावः । **समवायिकारणनाशादिति** । द्व्यणुकादिनाशादित्यर्थः । **त्र्यणुकनाश** इति । त्र्यणुकादिनाश इत्यर्थः । संप्रदाय इत्यस्वरसः, तद्बीजन्तु क्वचित्समवायिकारणनाशस्य क्वचिदसमवायिकारणनाशस्य द्रव्यनाशकत्वे कार्यकारणभावद्वयकल्पनाप्रयुक्तगौरवमिति । **द्रव्यनाश** इति । स्वीक्रियते शेषः । एतन्मते कार्यद्रव्यनाशमात्रे अवयवसंयोगनाशस्यैव हेतुतया नोक्तगौरवम् । **नवीना** इति । वदन्तीति शेषः । अत्र त्र्यणुकादिनाशं प्रति असमवायिकारणनाशस्य हेतुत्वस्वीकारे द्व्यणुकनाशानन्तरं द्व्यणुकसंयोगनाशः तदुत्तरक्षणे त्र्यणुकनाशस्य वाच्यतया एतन्मते क्षणविलंबः समवायिकारणं बिना क्षणद्वयं द्रव्यस्य स्थित्यापत्तिः । प्राचीनमते तु द्व्यणुकनाशद्वितीयक्षणे एव द्व्यणुकसंयोग-त्र्यणुकयोः नाशस्वीकारान्नोक्तदोषापत्तिरित्यस्वरसो नवीना इत्यनेन सूचित इति ध्येयम् ।

ननु पृथिव्यादिचतुष्टयस्य पूर्वोक्तोत्पत्तिविनाशक्रमोऽयुक्तः परमाणुद्व्य-
णुकयोर्मानाभावात्। नचैवं सति समवायिकारणस्याऽसमवायिकारणस्य
विरहेण त्र्यणुकानुत्पत्तिप्रसंग इति वाच्यम्। इष्टत्वात्। असमवेतद्रव्यत्वा
तस्य नित्यत्वाभ्युपगमात्। महत्त्वोद्भूतरूपवत्त्वाच्च घटादेरिव प्रत्यक्षत्वम्
नचैवं सति अणुः परमाणुरिति प्रमाणिकव्यवहारानुपपत्तिः, सर्वस्यापि मह
वत्वेन अणुत्वाश्रयाभावादिति वाच्यम्। अपकर्षानाश्रयमहत्वस्य परममह
शब्दवाच्यत्ववत्, अपकर्षाश्रयमहत्वस्य अणुत्वशब्दवाच्यत्वम्। अत
महानपि महत्तमादणुरिति व्यवहारः, एवमुत्कर्षानाश्रयमहत्वस्यैव परम
त्वशब्दवाच्यत्वम्। एवं च कपालादिपरिमाणस्य घटादिपरिमाणावधिक
कर्षाश्रयत्वात् अणुत्वशब्दवाच्यत्वेऽपि कपालिकादिपरिमाणावधिकोत्कर्षाश्र
त्वान्न परमाणुशब्दवाच्यत्वम्, त्र्यणुकपरिमाणस्य तु सकलपरिमाणावधि
पकर्षाश्रयत्वात् किंचित्परिमाणावधिकोत्कर्षानाश्रयत्वाच्च परमाणुत्वशब्दवा
त्वम्। तस्मात्परमाण्वादिद्रव्यसद्भावे प्रमाणाभावात्पूर्वोक्तोत्पत्तिविनाशक्र
निरूपणमसंगतमिति केषांचिन्मतं निरसितुमादौ संक्षेपेण तन्मतमनुवद
किं पुनरिति। पुनरिति वाक्यालंकारे। किं शब्दः प्रमाणशब्दपूर्वं योज
परमाणुसद्भावे। परमाण्वादिसद्भावे। आदिना द्व्यणुकपरिग्रहः। प्रमा
मिति। इति चेदिति शेषः। उच्यते इति। यत् द्रव्यं। त्र्यणुकमित्यर्थ
तत् त्र्यणुकम्। सावयवम्। अवयवसमवेतमित्यर्थः। चाक्षुषद्रव्यत्व
दिति। आत्मनि व्यभिचारवारणाय चाक्षुषेति। रूपादौ व्यभिचारवारण
विशेष्यदलम्। द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषवत्वादि
यावत्। पटवदिति। इत्यनुमानाद्द्व्यणुकसिद्धाविति शेषः। सावयव इ
अवयवसमवेत इत्यर्थः। महदारम्भकत्वादिति। महन्निरूपितस
वायिकारणतावत्वादित्यर्थः। कपालवदिति। कपालवदित्यनुमानेन द्व्य
कावयवसिद्धाविति शेषः। यो द्व्यणुकावयव इति। द्व्यणुकावयवत्वे
सिद्धो य इत्यर्थः। स एव परमाणुरिति[1]। स एव परमाणुशब्दवा

[1] अत्र परमाणुस्वीकर्तृणामयमाशयः। अपकृष्टमहत्ववतः पदार्थस्यैव वाच्यत्व

इत्यर्थः। **स च नित्य** इति। परमाणुर्नित्य एवेत्यर्थः। **चो**ऽवधारणे। तस्याऽनित्यत्वे बाधकमाह। **तस्यापीति**। परमाणोरपीत्यर्थः। **कार्यत्वे** इति। द्व्यणुकावयवाः सावयवाः महदारंभारंभकत्वात् कपालिकावदित्यनुमानेन सावयवत्वेऽनुमिते सतीत्यर्थः। **अनवस्थाप्रसंगादिति**। अप्रामाणिकानन्तावयवधाराकल्पनापत्तेरित्यर्थः। **तथा च**। अवयवधाराया अनन्तत्वे च। **तुल्यपरिमाणापत्तेरिति**। परिमाणोत्कर्षापकर्षप्रयोजिकाया अवयवसंख्याया उभयत्र समानत्वादितिभावः। प्रलयस्य द्वैविध्य तयोर्लक्षणं चाह। **सर्वकार्यद्रव्यध्वंस** इति। कार्यद्रव्यप्रतियोगिका यावन्तो ध्वंसास्तावत्समुदाय इत्यर्थः। यद्यपि द्रव्ये कार्यत्वविशेषणमनर्थकं नित्यप्रतियोगिकध्वंसाऽप्रसिद्धेः, तथापि स्पष्टार्थमेव तदुक्तम्। **सर्वभावकार्यध्वंस** इति। भावकार्यस्य यावन्तो ध्वंसाः तावत्समुदाय इत्यर्थः।

---

दर्शनात् अन्वयव्यतिरेकाभ्यां बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति अपकृष्टमहत्वेन कारणता वाच्या, अपकृष्टमहत्वं चाऽनेकद्रव्यत्वाधीनम्, अन्यथाऽऽकाशादीनामपि अपकृष्टमहत्ववत्वापत्तेः। अनेकद्रव्यत्वं च समवेतसमवेतत्वसंबन्धेन अनेकद्रव्यविशिष्टत्वम्, यथा घटे समवेतसमवेतत्वसंबन्धेन कपालिकात्मकद्रव्यविशिष्टत्वरूपं अनेकद्रव्यत्वम्। पटे चाऽशुंकात्मकद्रव्यविशिष्टत्वरुपम्। एवं च त्रसरेणुर्यदि समवेतसमवेतत्वसंबन्धेन अनेकद्रव्यवान्न स्यात् तदा अपकृष्टमहान्न स्यात्, यदि अपकृष्टमहान्न स्यात्तदा प्रत्यक्षविपयो न स्यादित्यनुकूलतर्काभ्यां त्रसरेणोः समवेतसमवेतत्वसंबन्धेन किंचिद्द्रव्यविशिष्टत्वमवश्यमभ्युपेयम्, तच्च तदवयवावयवीभूत किंचिद्द्रव्याऽस्वीकारे न संभवितुमर्हतीति यत्तादृशद्रव्यं तदेवाऽस्माभिः परमाणुनाम्ना व्यवहर्त्तव्यमिति।

अथैवमपि अवयविनि मानाभावः न चाऽवयविनः परमाणुरूपत्वे घटस्याऽपि नित्यत्वापत्तिः, दण्डादिसामग्र्यपेक्षा च न स्यादिति वाच्यम्। विलक्षणसंयोगविशिष्टानामेव परमाणूनां घटात्मकतया तादृशसंयोगोत्पत्तौ दण्डादेरुपयोगात्। घट उत्पन्नः, विनष्टः, इत्यादि बुद्धेरपि तादृशसंयोगोत्पादविनाशावलंबनत्वादिति चेन्न। परमाणोरतीन्द्रियत्वेन तत्समुदायात्मकस्य घटस्य प्रत्यक्षानुपपत्तेरित्यत्र विस्तरः।

शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ।

न्या०—आकाशं लक्षयति । शब्दगुणकमिति । अत्र गुण- पदमाकाशे शब्द एव विशेषगुण इति द्योतनाय, न त्वतिव्याप्तिवार- णाय, समवायेन शब्दवत्त्वमात्रस्यैव सम्यक्त्वात् ।

रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।

बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ।

तच्चैकमिति । अनेकत्वे मानाभावादिति भावः । विभ्विति । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं च क्रियावत्त्वम् । पृथिव्यप्ते- जोवायुमनांसि मूर्तानि । पृथिव्यप्तेजोवाय्वाकाशेति पञ्चकं भूतप- वाच्यम् । भूतत्वं वहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ।

दी०—आकाशं लक्षयति । शब्दगुणकमिति । ननु किं आ- काशं पृथिव्यादिवन्नाना, नेत्याह । तच्चैकमिति । भेदे प्रमाणाभा- वादित्यर्थः । एकत्वादेव सर्वत्रोपलब्धेर्विभुत्वमङ्गीकर्त्तव्यमित्याह विभ्विति । सर्वमूर्तसंयोगित्वं विभुत्वम् । मूर्तत्वं परिच्छिन्नपरिमा- णवत्वं, क्रियावत्वं वा । विभुत्वादेव आत्मवत् नित्यत्वमित्याह नि- त्यं चेति ।

गं०—आकाशं लक्षयतीति । क्रमप्राप्तमित्यादिः । शब्दगुणक- मिति । शब्दः गुणोयस्य तत्तथा । शब्दस्य द्रव्यत्ववादिनो मीमांसक- निरासाय गुणपदम् । द्योतनायेति । तेन आकाशे शब्दोऽष्टद्रव्यातिरिक्तद्र- व्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादिति परिशेषानुमानरूप- प्रमाणमपि सूचितम्, न च विशेष्याऽसिद्धिरिति वाच्यम् । शब्दो द्रव्या- श्रितः गुणत्वाद्रूपवदित्यनुमानेन तन्निरासात् । नह्यत्रापि स्वरूपासिद्धिः शंकनीया । शब्दो गुणः चक्षुर्ग्रहणाऽयोग्यत्वे सति वहिरिन्द्रियग्राह्यजाति- मत्वात् स्पर्शवदित्यनुमानस्यैव सत्वात् । वहिरिन्द्रियग्राह्यजातिमत्वस्य घटा-

सत्वेन व्यभिचारः स्यादतः सत्यन्तम् । अत एव रसनादिग्रहणाऽयोग्यत्वे सतीति नाभिहितम् । उक्तस्थले एव व्यभिचारात् । आत्मनि व्यभिचारवारणाय विशेष्यदलम् । अत एव बहिः पदमपि । तथा च बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावच्छेदकजातिमत्वादित्यर्थो बोध्यः । तेन नात्मादौ व्यभिचारतादवस्थ्यम् । रसत्वादौ व्यभिचारवारणाय जातिपदोपादानम् । यस्य घटस्य न चाक्षुषं वृत्तम्, अपि तु त्वाचमेव तत्र घटे व्यभिचारवारणाय सत्यन्तमपि जातौ विशेषणम्, धर्मिविशेषणत्वे अतीन्द्रिये द्रव्ये कर्मणि च व्यभिचारापत्तेः । न च बहिरिन्द्रियग्राह्यत्वस्यापि धर्मिविशेषणत्वे नाऽयं व्यभिचार इति वाच्यम् । उक्तघटे व्यभिचारापत्तेः । न च वायोः स्पार्शनाङ्गीकर्तृनवीनमते वायुत्वजातेरपि तादृशतया वायौ व्यभिचार इति वाच्यम् । जातौ द्रव्याऽवृत्तित्वस्य विशेषणीयत्वात् । एतल्लाभायैव बहिरिन्द्रियग्राह्यत्वविशेषणम् । एवं च चाक्षुषनिरूपितलौकिकविषयताशून्यद्रव्यावृत्तिजातिमत्वादिति हेतुः पर्यवसित इति ध्येयम् ।

नचैवमपि विशेषणाऽसिद्धिरिति वाच्यम् । शब्दो न स्पर्शवद्विशेषगुणः[१] अग्निसंयोगाऽसमवायिकारणकत्वाऽभावेऽसति अकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत् । न दिक्कालमनसां गुणः विशेषगुणत्वाद्[२] रूपवत् । नात्मविशेष-

---

१ पृथिव्यप्तेजोवायुसमवेतविशेषगुणत्वाभाववानित्यर्थः । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । अपाकजत्वे सतीति तदर्थः । अकारणगुणपूर्वकत्वं न प्रत्यक्षविशेषणम् प्रत्यक्षमात्रस्याऽकारणगुणपूर्वकत्वेनाऽव्यावर्त्तकत्वात्, कारणगुणपूर्वकपटरूपादौ व्यभिचारतादवस्थ्याच्च, अतो धर्मिविशेषणम्, तथा च अकारणगुणपूर्वकत्वे सति प्रत्यक्षविषयत्वादित्यर्थः । एवं पटरूपादौ अकारणगुणपूर्वकत्वाभावान्न व्यभिचारः । स्वसमवायिकारणकारणगुणजन्यत्वं कारणपूर्वकत्वं, तदभावोऽकारणगुणपूर्वकत्वमिति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति ।

२ रूपादिचतुष्टयशब्दान्यतमत्वादिति यावत् । यथाश्रुते दृष्टान्तपक्षसाधारणविशेषगुणत्वस्याभावेऽपि न क्षतिः ।

गुणः बहिरिन्द्रियग्राह्यत्वात्[1] रूपवदित्यनुमानसद्भावात्। एवं च शब्दा-श्रयतया अष्टद्रव्यातिरिक्तं गगनात्मकं द्रव्यं सिद्ध्यतीत्यवधेयम्।

**सं०—किं पृथिव्यादिवन्नानेति।** प्रश्नार्थकः किं शब्दः नानेत्युत्तरं योज्यः, इति जिज्ञासायामिति शेषः। तथा च पृथिव्यादिचतुष्टयस्य नानात्वसाधकं प्रमाणं यथा, तथाऽऽकाशस्यापि नानात्वसाधकं प्रमाणमस्ति किमिति जिज्ञासायामिति फलितार्थः। **नेत्याहेति।** तादृशप्रमाणं नास्तीत्याहेत्यर्थः मूले। **तच्चैकमिति।** तदेकमेवेत्यर्थः। यथाश्रुते अनेकत्वाश्रयघटादेरपि प्रत्येकमेकत्ववत्त्वादव्यावर्त्तकतापत्तेः। तथा च शब्दसमानाधिकरणाऽन्योन्याभावप्रतियोगितानवच्छेदकैकत्ववदित्यर्थः। फलितार्थमाह। **भेदे इति।** पर्याप्तिसंबन्धेन द्वित्वादिमत्त्वे इत्यर्थः। **एकत्वादेवेति।** अप्यर्थकः एवकारः विभुत्वमित्युत्तरं योज्यः। विभुत्वं निर्वक्ति। **सर्वमूर्तेति।** ननु सर्वमूर्त्तसंयोगित्वमित्यस्य सर्वाणि यानि मूर्त्तद्रव्याणि तावत्प्रतियोगिकसंयोगवत्त्वार्थकत्वे तावत्प्रतियोगिकसंयोगाऽप्रसिद्ध्या असंभवः, तावतां प्रत्येकप्रतियोगिकसंयोगसमुदायवत्त्वार्थकत्वे घटभूतलसंयोगादेरपि तादृशसंयोगरूपतया तादृशसमुदायवत्त्वस्याकाशादावभावात्तद्दोषतादवस्थ्यम्, एवमुत्पन्नविनष्टपृथिव्यादेरपि मूर्त्तत्वजात्याश्रयत्वेन मूर्त्तान्तर्गततया तत्प्रतियोगिकसंयोगस्याऽप्रसिद्धत्वेन तद्घटितसमुदायवत्त्वाभावाच्चेति चेन्न। **सर्वमूर्त्तसंयोगी**त्यनेन गगनाद्यसंयुक्तमूर्तं नास्तीत्यर्थो लभ्यते, एवं च स्वाऽसंयुक्तमूर्त्तं यद्यत्स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं लक्षणं फलितम्

---

शब्दोविशेषगुणः लौकिकप्रत्यासत्त्या इन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या विजातीयेन्द्रियग्रहणयोग्यताराहित्ये च सति गुणत्वव्याप्यजातिमत्त्वादित्यनुमानस्यैव शब्दे विशेषगुणत्वे प्रमाणत्वादिति ध्येयम्।

१ मनोभिन्नेन्द्रियं बहिरिन्द्रियम्, तथा च मनोभिन्नेन्द्रियजन्यज्ञाननिरूपितलौकिकविषयताश्रयगुणविभाजकधर्मवत्त्वादिति बहिरिन्द्रियग्राह्यत्वादित्यस्यार्थो बोध्यः, तेनाद्यशब्दस्य लौकिकविषयताशून्यत्वेऽपि न भागासिद्धिः।

अत्र गगनाद्यसंयुक्तमूर्त्ताऽप्रसिद्ध्या स्वपदेन गगनाद्युपादानाऽसंभवाल्लक्षण-समन्वयः। एवं च तादृशभेदकूटविशिष्टद्रव्यत्वमेव विभुत्वं फलितम्, तेन रूपादेः संयोगाऽप्रसिद्ध्या स्वपदेन रूपादेरुपादानाऽसंभवेपि न तत्राति-व्याप्तिः।

प्रसंगसंगत्या मूर्त्तस्यापि लक्षणमाह। परिच्छिन्नपरिमाणवत्त्वमिति। परिच्छिन्नत्वं च परममहत्परिमाणभिन्नत्वम्, नत्वपकर्षाश्रयत्वम्, परमाणु-परिमाणस्य कुतोप्यपकर्षानाश्रयत्वेन परमाणावव्याप्तेः। लाघवाल्लक्षणान्तर-माह। क्रियावत्त्वं वेति। क्रियावद्वृत्तिगगनाऽसमवेतजातिमत्त्वमिति तदर्थः। तेनोत्पन्नविनष्टघटादौ नाव्याप्तिरिति ध्येयम्। बहिरिन्द्रियग्राह्यविशेषगुणवत्त्व-मिति। मनसोऽन्यदिन्द्रियं बहिरिन्द्रियम्, तद्ग्राह्या ये विशेषगुणास्तद्वत्त्व-मित्यर्थः बहिरिन्द्रियजन्यप्रत्यक्षीयलौकिकसन्निकर्षप्रयोज्यविषयतावच्छेदक-विशेषगुणत्वाश्रयवत्त्वमिति यावत्। तेन परमाणौ, ज्ञातोघट इति प्रत्यक्षीयाऽ-लौकिकसन्निकर्षविषयताश्रयज्ञानवत्त्वमादायाऽऽत्मनि च नाव्याप्त्यतिव्याप्ती। विभु नित्यं चेति मूलेन यतो विभु तत एव नित्यमिति अभिप्रायं प्रकाश-यति। विभुत्वादेवेति। विभुत्वलिंगादेवेत्यर्थः। आत्मवन्नित्यमित्या-हेति। तथाचाऽऽकाशं नित्यं विभुत्वाद् आत्मवदित्यनुमानादाकाशस्य नित्यत्वसिद्धिरिति भावः। इदमुपलक्षणम्। आकाशस्य नित्यत्वे लाघवमिति लाघवज्ञानसहकारादपि नित्यत्वं सिद्ध्यतीति।

**अतीतादिव्यवहार हेतुः कालः। स चैको विभु-र्नित्यश्च।**

न्या०—कालं लक्षयति। अतीतेति। व्यवहारहेतुत्वस्य लक्षणत्वे घट इति व्यवहारहेतुभूतघटादावतिव्याप्तिः। तद्वारणायाऽतीतादीति विशेषणोपादानम्।

दी०—कालं लक्षयति । अतीतेति । सर्वाधारः कालः, सं
कार्ये निमित्तकारणं च[1] ।

गं०—कालं लक्षयतीति । कालविशेष्यकलक्षणस्वरूपप्रामाण्यप्र
कज्ञानाकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः । मूले अती
दीति । आदिना वर्त्तमानत्वभविष्यत्वयोः परिग्रहः । अतीतः आदिर्ये
अतीतादयः, तेषां व्यवहारः शब्दप्रयोगः तस्य हेतुः कारणमित्यर्थः । अ
वर्त्तमानः भविष्यन्निति शब्दप्रयोगे कालः कारणम् । व्यवहारे व्यवहर्त्तव्यता
च्छेदकस्य कारणत्वम् । यथा घट इति शब्दप्रयोगे घटो व्यवहर्त्तव्यः, घ
व्यवहर्त्तव्यतावच्छेदकम् । तस्य घटशब्दप्रयोगे कारणत्वम् । प्रकृते चाऽती
अतीतकालवान्, वर्त्तमानः वर्त्तमानकालवान्, भविष्यन् भविष्यत्कालवा
त्यर्थः । एवं चाऽतीतशब्दप्रयोगे अतीतकालवान् व्यवहर्त्तव्यः, व्यवहर्त्तव्य
वच्छेदकं चाऽतीतकालवत्वम्, तच्चाऽतीतकाल एव, एवं वर्त्तमाना
लेऽपि बोध्यम् । तथा चाऽतीतादिव्यवहारकारणत्वस्य काले सत्वाल्लक्षण
न्वयः । वर्त्तमानत्वं च शब्दप्रयोगाधिकरणकालवृत्तित्वम् । प्रारब्धापरिस
प्त्युपलक्षितकालत्वमिति यावत् । अतीतत्वं च वर्त्तमानध्वंसप्रतियोगित्व
भविष्यत्वं च वर्त्तमानकालवृत्तिप्रागभावप्रतियोगित्वम् । सर्वाधार इति । का
संबन्धेनेत्यादिः । सर्वपदार्थनिष्ठकालिकसंबन्धावच्छिन्नाधेयतानिरूपिता
करणतावत्त्वमित्यर्थः । एतादृशाधिकरणतावत्ता च महाकालस्यैव नतु भि
त्मकखण्डकालस्य, विभिन्नकालीनयोः विषयताविषयितान्यसंबन्धेन आधा
धेयभावविरहादितिध्येयम् । सर्वकार्ये इति । कालिकसंबन्धावच्छिन्न
तानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वमित्यर्थः । मूले । सचैक इ

---

१ कार्यमात्रं प्रति कालस्य समवायिकारणत्वाभावेन, द्रव्यतयाऽसमवायिकार
भावेन च परिशेषान्निमित्तकारणत्वमित्यर्थः । नच स्वसमवेतद्वित्वपृथक्त्वादिकं
कालस्य समवायिकारणत्वात्सर्वकार्यंप्रतीत्यसंगतिरिति वाच्यम् । कालिकसं
निमित्तकारणत्वादिति ध्येयम् ।

अनेकत्वे मानाभावात् । ननु यदि एक एव कालः तदा क्षणघटिकामुहूर्त्त-प्रहरदिनपक्षमासादिव्यहारः कथमुपपद्यते । एकस्मिन् विरुद्धनानाव्यवहार-विषयत्वाभावादितिचेन्न । एकस्यैव कालस्य उपाधिविशिष्टस्य क्षणत्वम्, एवं क्षणसमुदायस्य मूहूर्त्तत्वम् । मुहूर्त्तसमुदायस्य दिनत्वमिति रीत्या बोध्यम् । क्षणत्वव्यवहारनियामकोपाधयस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म पूर्व-संयोगावच्छिन्नविभागः । पूर्वसंयोगनाशावच्छिन्नोत्तरसयोगप्रागभावः । उत्तरसंयोगावच्छिन्नं कर्म इति ।

[ यथाहि । आदौ क्रिया-ततो विभागः-ततः पूर्वसंयोगनाशः-तत उत्तरदेश-संयोगः इत्ति चत्वारः क्षणाः सन्ति । तत्र क्रियोत्पत्तिक्षणे क्षणत्वनियाम-कोपाधिरस्ति, स च स्वजन्यविभागप्रागभाववच्छिन्नं कर्मेति । स्वं क्रिया तज्जन्यो यो विभागः तस्य प्रागभावः क्रियोत्पत्तिक्षणे इति । विभागक्षणे क्षणत्व-व्यवहारनियामकोपाधिस्तु पूर्वसंयोगावच्छिन्नविभागः । स्वजन्यविभागनाश्य-पूर्वसंयोगविशिष्टविभाग इति यावत् तादृशविभागावच्छिन्नं स्वमित्यर्थः । पूर्वसंयोगस्य तृतीयक्षणे नाशाद् द्वितीयक्षणे पूर्वसंयोगविशिष्टविभागोऽस्त्ये-वेति । द्वितीयक्षणे क्षणत्वनियामकोयमुपाधिः । नच प्रथमक्षणे क्षणत्वनिया मकोपाधिरत्राऽप्यस्तु किमुपाध्यन्तरेणेति वाच्यम् । प्रतिक्षणं क्रियोत्पत्तौ मानाभावादिति । एवं तृतीयक्षणे चतुर्थक्षणे च बोध्यम् । एवं पंचमादिक्षणेष्वपि क्रियाविभागन्यायेन क्षणत्वं वेदितव्यम् । महाप्रलये क्रियाया अभावेऽपि स्व-वृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयस्यैव क्षणव्यवहारवि-विषयत्वमिति ध्येयम् । ]

इदमत्रावधेयम् इदानीं घटः तदानीं घट, इत्यादिप्रतीतौ न महाकालो विषयः, इदानीं घटो न तदानीमिति प्रत्ययानुपपत्तेः । एवं च इदानीं घट इत्यादिप्रतीतेः तत्तत्क्रियाविशिष्टो घट इत्याकारकत्वमेव स्वीकार्यम् । तत्क्रि-यापदेन सूर्यपरिस्पन्द एव ग्राह्यः । न च सूर्यपरिस्पन्देन सह घटादेः साक्षात्संबन्धः, तस्य सूर्ये एव समवेतत्वात् । अतस्तस्य घटादिना परंपरा-संबन्धो वाच्यः, स च संबन्धः स्वाश्रयतपनसंयोगिसंयुक्तत्वरूपः । स्वं

परिस्पन्दः। एवं च तत्संबन्धघटकतया कालः कल्पनीयः। तथा इदानीं घट इत्याकारकसूर्यपरिस्पन्दप्रकारकघटविशेष्यकप्रतीतिः परंपरासंबन्धविषया साक्षात्संबन्धाभावे सति विशिष्टबुद्धित्वादित्यनुमानं फलितम्। एवं कालिकपरत्वाऽपरत्वे साऽसमवायिकारणके भावकार्यत्वाद् घटरूपवदित्यनुमानमपि बोध्यम् ज्येष्ठत्वकनिष्ठत्वे च कालिकपरत्वाऽपरत्वरूपे एव। तयोरसमवायिकारणं च कालपिण्डसंयोग एव। समवायिकारणन्तु पिण्ड एवेति ध्येयम्।

**प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका नित्या विभ्वी च।**

न्या०—दिशो लक्षणमाह। प्राच्येति। उदयाचलसन्निहिता या दिक् सा प्राची। अस्ताचलसन्निहिता या दिक् सा प्रतीची। मेरोः सन्निहिता या दिक् सोदीची। मेरोर्व्यवहिता या दिक् साऽवाची।

दी०—दिशो लक्षणमाह। प्राचीति। दिगपि कार्यमात्रे निमित्तकारणम्।

गं०—दिशो लक्षणमाहेति। क्रमप्राप्ताया इत्यादिः। दिग्विशेष्यककारणप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। मूले प्राच्यादीति प्राची आदिर्येषां ते प्राच्यादयः, तेषां[1] व्यवहारः प्राच्यादिविषयकज्ञानजनकशब्दप्रयोगः तस्य हेतुः-निमित्तकारणमित्यर्थः। आदिना प्रतीच्यादिपरिग्रहः। प्रयागः प्राच्य इत्यत्र प्राच्यः-प्राग्दिग्वानित्यर्थः। तत्र च प्राच्यशब्दप्रयोगे प्राग्दिग्वान् व्यवहर्त्तव्यः, व्यवहर्त्तव्यतावच्छेदकं प्राग्दिग्वत्त्वम्, प्राग्दिगेव। एवं च प्राच्यशब्दप्रयोगे प्राची दिक्कारणम्, व्यवहार्य

---

[1] प्राच्यादिरितिव्यवहार इति विग्रहे प्राची प्रतीचीत्याद्याकारकशब्दप्रयोग इत्यपि बोध्यः।

त्य नद्दर्यव्यतावच्छेदकस्य कारणत्वाल्लक्षणसमन्वयः। प्रकृतग्रन्थस्वरसंवलितस्यैव पाठस्य धर्त्तुमुचितत्वादाह। **प्राच्येतीति**। तस्याऽप्रयोजकत्वे तु उक्तम्, दीपिकायां **प्राचीतीति**। मूले। **सा चैकेति**। **सा-दिक् एका**। अनेकत्वे मानाभावादित्यर्थः। दिश एकत्वेऽपिप्राच्यादिसंज्ञाभेदस्तु उपाधिभेदनिबन्धन इत्याशयः। प्राच्यादिसंज्ञासु निमित्तभूतानुपाधीनाह। **उदयाचलसन्निहितेति**। यदपेक्षयाउदयगिरिसन्निहितं यन्मूर्तं तदवच्छिन्ना दिक् सा ततः प्राचीत्यर्थः। यदपेक्षया उदयगिरिसन्निहितत्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम्। तथा च **प्रयागात् प्राच्यां काशी** इत्यत्र प्रयागनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्त्तवृत्तिः काशीति बोधः। एवं **काशीतः प्रतीच्यां प्रयाग** इत्यत्र काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणोदयगिरसंयुक्तसंयोगवन्मूर्त्तवृत्तिः प्रयाग इति बोधः। अनयैवरीत्या मेरुसन्निहितत्व-मेरुव्यवहितत्वोपपादनीये। **अस्ताचलसन्निहितेति**। यदपेक्षया अस्ताचलसन्निहितं यन्मूर्त्तं तदवच्छिन्ना दिक् सा ततः प्रतीचीत्यर्थः। यदपेक्षया मेरुसन्निहितं यन्मूर्त्तं तदवच्छिन्ना दिक् सा ततः उदीची। **मेरोर्व्यवहितेति**। यदपेक्षया सुमेरुव्यवहितं यन्मूर्तं तदवच्छिन्ना दिक् सा ततो दक्षिणेत्यर्थः। लक्षणान्तरमाह। दीपिकायाम्। **कार्यमात्रे** इति। दैशिकविशेषणतासंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं दिशोलक्षणमित्यर्थः।

गं०--एवं **दिक् सर्वतो**ऽस्त्यादिप्रतीत्या दैशिकसंबन्धावच्छिन्नाधेयतानिरूपिताऽधिकरणतावत्त्वमपि लक्षणं बोध्यम्। दैशिकपरत्वाऽपरत्वे साऽसमवायिकारणके भावकार्यत्वादित्यनुमानेन दैशिकपरत्वाऽपरत्वयोरसमवायिकारणं दिक्पिण्डसंयोगः, तदाश्रयतया दिक् सिद्धिर्बोध्या। परत्वम्, दूरत्वम्। अपरत्वमन्तिकत्वम्। अपरत्वबुद्धिस्तु काशीतः कुरुक्षेत्रमपेक्ष्य प्रयागोऽपरः इति। परत्वबुद्धिस्तु पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः पर इति।

## ज्ञानाधिकरणमात्मा

न्या०—आत्मानं निरूपयति । ज्ञानाधिकरणमिति । अधि
करणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम् ।

दी०—आत्मनो लक्षणमाह । ज्ञानेति ।

गं०—आत्मानं निरूपयतीति । द्वितीयार्थो विषयित्वम्, तस्य नि
करूपधात्वर्थैकदेशे ज्ञानेऽन्वयः । निपूर्वकरूपधात्वर्थश्च निरूपणम्,
ज्ञानानुकूलो व्यापारः स च शब्दात्मकः । आख्यातार्थः कृतिः । तथाच
त्मविषयकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इति बोधः । दीपिका
आत्मनो लक्षणमाहेति । आत्मविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापा
कूलकृतिमान् मूलकार इति बोधः । ज्ञानवत्वमात्रस्य लक्षणत्वे घटादिवि
मात्रेऽतिव्याप्तिः, ज्ञानस्य विषयतासंबन्धेन विषयमात्रे सत्वात् अत उक्त
अधिकरणपदमिति । यद्यपि विषयताया वृत्त्यनियामकत्वेन ज्ञानाधि
करणत्वविरहादतिव्याप्तिवारकमेवाधिकरणपदम् तथापि कालिकसंबन्धेन ज्ञा
वत्त्वमादाय कालेऽतिव्याप्तिवारणाय समवायसंबन्धनिवेशस्यावश्यक
तल्लाभार्थमेवाधिकरणपदमित्याशयः । ज्ञानस्याऽधिकरणं ज्ञानाधिकरण
तथाच ज्ञाननिष्ठाधेयतानिरूपिताधिकरणतावत्वमात्मनो लक्षणमित्यर्थः । इ
मुपलक्षणम् आत्मत्वजातिमत्वमप्यात्मनो लक्षणम् । आत्मत्वजातिसिद्धि
सुखादिसमवायिकारणतावच्छेदकतया बोध्या । सा जातिरीश्वरेऽपि
शरीरादिरूपकारणान्तरविरहेणैव सुखाद्युत्पादनाऽसंभवात् । वस्तुतस्तु
त्मपदशक्यतावच्छेदकतया आत्मत्वजातिसिद्धिः । असति बाधके शक्य
वच्छेदकतया जातिसिद्धेः सर्वानुमतत्वात् । ननु आत्मनि प्रमाणाऽभा
लक्षणाभिधानमयुक्तमिति चेन्न । अहं सुखी अहं जानामीत्यादिप्रत्य
प्रत्यक्षसिद्धत्वात् । इन्द्रियाणि सकर्तृकाणि "फलोपधानात्मककारणत्व
टित" करणत्वात् "छेदनफलोपधायक" वास्यादिवदित्यनुमानाच्चात्मसिद्धि
यद्यपि परात्मनः तद्गतसुखादेश्च प्रत्यक्षवारणाय परात्मव्यावृत्तविजातीय

त्ममनःसंयोगस्य कारणतया न परात्मनः प्रत्यक्षविषयता, तथापि समवायेन चेष्टां प्रति अवच्छेदकतासंबन्धेन कृतेः कारणतया, परशरीरे च प्रत्यक्षसिद्धया चेष्टया कृतिरनुमेया, तथा च परात्मनोऽनुमेयत्वमस्त्येव अनुमानप्रकारश्च चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत्, तत्प्रयत्नं क्वचिद्द्रव्यसमवेतं गुणत्वाद्रूपवदिति । एवं सर्वे एव आत्मानः समर्पिता इत्यादिश्रुतिसिद्धत्वं च । ईश्वरसाधकानुमानन्तु स्वयमेव वक्ष्यति । एवमात्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादि श्रुतयोपीश्वरसाधिकाः, तस्मादात्मसामान्यं प्रमाणसिद्धमिति ध्येयम् ।

## स द्विविधः । परमात्मा जीवात्मा चेति ।

दी०—आत्मानं विभजते । स द्विविध इति ।

गं०—आत्मानं विभजते इति । आत्मत्वावच्छिन्नविशेष्यकाऽऽत्मत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इति बोधः । सः । आत्मा । द्विविध इति । धर्मद्वयाऽन्यतरवानित्यर्थः । धर्मद्वयमाह । परमात्मेति । भावप्रधानो निर्देशः तेन परमात्मत्वं जीवात्मत्वं चेत्यर्थः । ननु परमात्मजीवात्मनोरभेदाद्विभागोऽनुपपन्न इति चेन्न । वक्ष्यमाणयुक्त्या जीवानां परस्परं भिन्नत्वेन सुतरां ईश्वरभेदोऽङ्गीकर्त्तव्यः, एकत्वाऽनेकत्वयोर्विरोधात् । एकमेवाऽद्वितीयंब्रह्मेत्यादिश्रुतिविरोधाच्च । एवमीश्वरस्य जीवात्मकत्वे बन्धमोक्षव्यवस्थानुपपत्तिश्च स्यात् । ईश्वरे बन्धमोक्षयोरभावात्, चैत्रमैत्रात्मनोरीश्वररूपयोरैक्यात् । जीवात्मनामेकत्वेऽपि एतद्दोषोदुर्वार एवेति तेषां परस्परं भेदः स्वीकार्य एव । न च तत्तदन्तःकरणरूपोपाधिभेदात्, तदुपाधिनाशे मुक्तत्वव्यवहारः, यदन्तःकरणस्य न नाशः, तदवच्छिन्नात्मनो बद्धत्वव्यवहार इति "आत्मनएकत्वेऽपि" नानुपपत्तिर्व्यवस्थाया इति वाच्यम् । एवमपि मुक्त्यर्थं प्रयत्नानुष्ठाननिष्फलत्वापत्तेः । एतदन्तःकरणनाशेऽपि अन्तःकरणान्तरावच्छिन्नत्वस्य स्वात्मनि अव्याहतत्वेन दुःखोत्पत्तेरावश्यकतया निर्दुःखत्वासंभवादिति संक्षेपः ।

## तत्रेश्वरः सर्वज्ञः परमात्मा एक एव ।

दी०—परमात्मनो लक्षणमाह । तत्रेति । नित्यज्ञानाधिकरणत्वम् ईश्वरत्वम् ।

गं०—परमात्मनो लक्षणमाहेति । परमात्मविशेष्यकलक्षणप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः । मूले । तत्र । परमात्मजीवात्मनोर्मध्ये । सर्वज्ञः[1]—सर्वं जानातीति सर्वज्ञः सर्वविषयकज्ञानवानित्यर्थः । ईश्वरः—सृष्टिस्थितिसंहारकर्त्ता इत्यर्थः । स एव परमात्मा स च एक एवेत्यन्वयः । ननु सर्वविषयकज्ञानवत्त्वस्य लक्षणत्वे योगिष्वतिव्याप्तिरित्यत आह । नित्यज्ञानाधिकरणत्वमिति । समवायेन नित्यज्ञानवत्त्वमित्यर्थः । नन्वेवं 'नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिविरोधः, तत्र ईश्वरस्य विज्ञानाद्यभिन्नत्वप्रतिपादनादिति चेन्न । अधिकरणार्थकल्युडन्तविज्ञानपदेन विज्ञानाश्रयत्वबोधनेन श्रुतिविरोधाभावात् । तादृशश्रुतिघटकविज्ञानपदस्य भावार्थकल्युडन्तत्वे "यः सर्वज्ञ सर्वविदित्यादि" श्रुतिविरोधापत्तेः । एवमानन्दमित्यस्याऽपि आनन्दवदित्यर्थः अर्शआदित्वेन मत्वर्थीयाच्प्रत्ययात् । सुखार्थकाऽऽनन्दशब्दस्य पुंल्लिङ्गत्वनियमेन नपुंसकत्वानुपपत्तेः आनन्दशब्दस्याऽपि दुःखाभावे लक्षणा, तेन दुःखाभाववदित्यर्थः । नवीनास्तु नित्यसुखवत्त्वमपि लक्षणं स्वीकुर्वन्ति । नन्वेवमीश्वरीयचिकीर्षाया अपि नित्यत्वात्प्रलयानुपपत्तिरिति चेन्न । तस्याः प्राण्यदृष्टोपाधिकत्वेन प्रलयोपपत्तेरित्यन्यत्र विस्तरः ।

दी०—ननु ईश्वरसद्भावे किं प्रमाणम् । न तावत्प्रत्यक्षम्, तद्धि बाह्यम्, आभ्यन्तरं वा । नाद्यः, अरूपिद्रव्यत्वात् । नान्त्यः,

---

१ सर्वज्ञत्वं च धर्मावच्छिन्ननिरूपकताकविषयितात्वव्यापकज्ञानवत्त्वम् । व्यापकत्वं च स्वीयविषयितानिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकत्वसंबन्धेनेति । एतेन सर्वमित्याकारकसर्वविषयकज्ञानवतोऽपि सर्वज्ञत्वापत्तिरितिसमाहितम् ।

आत्मसुखादिव्यतिरिक्तत्वात्। नाप्यनुमानम्, लिङ्गाभावात्। नाऽप्यागमः, तथाविधाऽऽगमाभावादिति चेन्न।

गं०--इदानीं प्रसंगसंगत्या निरीश्वरवादिनं निराकर्तुमादौ तन्मतमुपन्यस्यति। नन्विति। विप्रतिपत्तिस्तु क्षितिः सकर्तृका नवेत्याकारिका बोध्या। ईश्वरसद्भावे इति। किं प्रमाणमिति। न किमपि प्रमाणमित्यर्थः। तथा च भवन्मतसिद्धईश्वरः प्रमाणसामान्याभावगम्यः प्रत्यक्षादिप्रमाणविशेषगम्यत्वाभावकूटवत्त्वात् यन्नैवं तन्नैवं यथा घटः इति फलितम्। अत्र कूटघटकप्रत्येकाभावं साधयति। न तावत् प्रत्यक्षमिति। तत् प्रत्यक्षं बाह्यं। मानसान्यप्रत्यक्षनिरूपितलौकिकविषयतारूपम्। आभ्यन्तरम्। मानसनिरूपितलौकिकविषयत्वरूपम्॥ नाद्य इति। मानसान्यप्रत्यक्षनिरूपितलौकिकविषयतावान् इत्यर्थः। अरूपिद्रव्यत्वादिति। बाह्यप्रत्यक्षं प्रति उद्भूतरूपस्य हेतुत्वादिति भावः। न द्वितीय इति। न मानसनिरूपितलौकिकविषयतावानित्यर्थः। आत्मसुखादीति। स्वात्मभिन्नद्रव्यत्वादित्यर्थः। परात्मनः परेण मनसा प्रत्यक्षवारणायाऽऽत्मप्रत्यक्षं प्रति विजातीयात्ममनः संयोगत्वेन हेतुत्वस्यावश्यकतया ईश्वरे तस्याभावादिति यावत् नाप्यनुमानमिति। अपि शब्दः प्रत्यक्षसमुच्चायकः। यथा ईश्वरे प्रत्यक्षं न प्रमाणं तथाऽनुमानमपीत्यर्थः। ईश्वरः अनुमानप्रमाणगम्यत्वाभाववान् इति फलितार्थः। लिङ्गाभावादिति। तद्व्याप्यलिङ्गाभावादित्यर्थः। तथा च यत्र यद्व्याप्यलिङ्गं प्रसिद्धं तत्र तदनुमेयम्, यथा वह्निव्याप्यधूमात्मकलिङ्गं प्रसिद्धं तत्र वह्निरनुमेयः, प्रकृते ईश्वरव्याप्यलिङ्गस्य क्वाप्यनिर्णयेन ईश्वरो न कुत्राप्यनुमातुं योग्य इत्याशयः। उपमानस्य शक्तिमात्रसाधकत्वेन तन्निराकरणं न कृतमिति ध्येयम्। नाप्यागम इति। आगमः ईश्वरसाधको नेत्यर्थः। तत्र हेतुमाह तथाविधेति। श्रुतेर्निर्णीतप्रामाण्यकत्वाभावादिति यावत्। यथाश्रुते ईश्वरप्रतिपादकाऽनेकश्रुतिसत्त्वादसङ्गत्यापत्तेः। तथा च ईश्वरोच्चरितत्वेनैव श्रुतिप्रामाण्यस्य वक्तव्यतया ईश्वरसन्देहे श्रुतेरपि सन्दि-

ध्यप्रामाण्यकत्वेन निर्णीतप्रामाण्यकत्वरूपलिंगनिर्णयाभावेन श्रुतेरीश्वरसा-
धकत्वाभावादिति भावः।

दी०—क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवदित्यनुमानस्य
प्रमाणत्वात्।

गं०—ईश्वरव्याप्यलिङ्गाभावेऽपि परंपरया ईश्वरसाधनं संभवती-
त्याशयेन समाधत्ते। क्षित्यङ्कुरादिकमिति।

अत्र क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वेन दृष्टान्ते घटे
अंशतः सिद्धसाधनम्। अवच्छेदावच्छेदेन तथात्वे सामानाधिकरण्ये
सिद्धेरप्रतिबन्धकतया सिद्धसाधनाऽभावेऽपि परमाणौ बाधः, जन्यक्षिति-
त्वस्य पक्षतावच्छेदकत्वे परमते जन्यपदव्यावृत्त्यसिद्धिः, तन्मतेऽजन्यक्षिते-
रभावात्, जन्यत्वस्यैव तथात्वसंभवेन पक्षतावच्छेदककोटौ क्षितित्वस्य व्यर्थ-
त्वाच्चेत्यत उक्तम्। अङ्कुरेति। तथा च क्वाप्यङ्कुरेजीवीयकृतिसाध्यत्वाभावे-
नांशतः सिद्धसाधनम्, न वा बाधो, नित्याङ्कुरस्याऽभावादिति भावः।

ननु कार्यत्वमस्तु कर्तृजन्यत्वं मास्तु इति व्यभिचारशंकायां कर्तृत्वेन
कार्यत्वेन कार्यकारणभाव एवाऽनुकूलस्तर्को वाच्यः "स च कार्यत्वं यदि
कर्तृजन्यत्वव्यभिचारिस्यात्तदा कर्तृजन्यतावच्छेदकं न स्यादित्याकारकः
स च न प्रमाणसिद्धः। तन्तुवायकृतिकाले घटापत्तिवारणाय कुलालकृतित्वेन
घटत्वेन कार्यकारणभावस्याऽवश्यकत्वेन सामान्यतः कर्तृत्वेन कार्यत्वेन
कार्यकारणभावे मानाभावात्। न च यद्विशेषयोः कार्यकारणभावः असति
बाधके तत्सामान्ययोरपीति नियम एव मानमिति वाच्यम्। तस्याप्यप्रयोज-
कत्वात्। न च कार्यसामान्याऽभावे "कुलालादि" कर्त्रभावकूटस्य प्रयोज-
कत्वे गौरवात्, कर्तृत्वावच्छिन्नाभावस्यैकस्यैव तथात्वे लाघवम्, तच्च
कर्तृत्वस्य कारणतावच्छेदकत्वमन्तरा न संभवति, कारणतावच्छेदकधर्मा-
वच्छिन्नाभावस्यैव कार्याभाव प्रयोजकत्वात्। एवं च लाघवमूलक एव
यद्विशेषयोरिति न्यायइति वाच्यम्। कारणतावच्छेदकावच्छिन्नाभावस्यैव

लाघवेन प्रयोजकत्वात्प्रयोजकत्वं च स्वरूपसंबन्धरूपम्, एवं च लाघवादेव कारणतानवच्छेदककर्तृत्वावच्छिन्नप्रतियोगिताकैकाभावस्य कार्याभावप्रयोजकत्वम्, कर्तृत्वेन कार्यत्वेन कार्यकारणभावमन्तराऽपि सुवचमित्यत उक्तम्। आदीति। आदिना सर्गाद्यकालीनघटे खण्डघटे वा कर्तृजन्यत्वस्य साधनीयत्वात्। एवं चेदृशानुमानेन घटत्वेन कुलालत्वेन कार्यकारणभावानुकूलतर्कसहकृतेनैवेश्वर सिद्धिः। नचैवमीश्वरस्य कुलालत्वापत्तिः। इष्टत्वादिति।

वस्तुतस्तु यस्य कार्यानुत्पत्तौ प्रयोजकत्वं कल्प्यते तदभावस्य कारणत्वमवश्यमभ्युपेयमेव। कारणत्वं च कार्याभावप्रयोजकीभूताभावप्रतियोगित्वम्। सामान्यतः कर्त्रभावस्य "कृत्यभावस्य वा" कार्यानुत्पत्तौ प्रयोजकत्वेन तत्प्रतियोगिनः कर्तृसामान्यस्य कार्यमात्रं प्रति कारणत्वमावश्यकमेव। अन्यथा घटत्वावच्छिन्नं प्रति कुलालत्वेनापि कारणता न स्यात्। तत्तद्घटत्वावच्छिन्नं प्रति तत्तत्कुलालत्वेन कारणत्वस्यावश्यकतया सामान्यकार्यकारणभावमात्रोच्छेदप्रसंगात्। अतो यद्विशेषयोरिति न्याय आवश्यकः। एवं च कार्यं पक्षः, अवच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यताऽतो न सिद्धसाधनमितिध्येयम्।

दी०—उपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् उपादानं समवायिकारणम्। सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम्। यः सर्वज्ञः स सर्वविदित्यागमोऽपि तत्र प्रमाणम्।

गं०—उपादानगोचरेति। उपादानविषयकेत्यर्थः। एतस्याऽपरोक्षज्ञानचिकीर्षाकृतिषु प्रत्येकमन्वयः। उपादानपदार्थमाह। उपादानमिति। एवं च कार्यमात्रे उपादानगोचराऽपरोक्षज्ञानजन्यत्वम् - तादृशचिकीर्षाजन्यत्वम्—तादृशकृतिमजन्यत्वमव्याहतमेवेति। तादृशज्ञानेच्छाकृतीनामेकत्वे नित्यत्वे च लाघवमितिरीत्या तासामेकत्वनित्यत्वे बोध्ये। एवं च तादृशकृतिर्द्रव्याश्रिता गुणत्वाद्रूपवदित्यनुमानेनेश्वरसिद्धिर्बोध्या। निरुक्तानुमानेनेश्वरसिद्धौ अर्थात्सर्वज्ञत्वमतिसिद्ध्यतीत्याह। सकलेति। द्व्यणुकोपादान-

सकलपरमाणुविषयकप्रत्यक्षवत्त्वात्, त्र्यणुकोपादानसकलद्व्यणुकोपादानवि-
षयकप्रत्यक्षवत्त्वाच्चेत्यर्थः। अतीन्द्रियसूक्ष्मपदार्थविषयकप्रत्यक्षवतः स्थूलपदा-
र्थविषयकप्रत्यक्षाश्रयत्वं कैमुतिकन्यायसिद्धमिति तस्य सर्वज्ञत्वमर्थाल्लब्ध-
मित्यर्थः सर्वविदिति। विशेषरूपेणज्ञानवानित्यर्थः। तत्र। ईश्वरे—
सर्वज्ञत्वे चेत्यर्थः।

"इदमत्रबोध्यम्। उपादानगोचरेत्यादिसाध्यम्। अत्र कार्यमात्रे उपा-
दानगोचराऽपरोक्षज्ञानादीनां त्रयाणामेवाऽन्वयव्यतिरेकाभ्यां हेतुत्वावधार-
णात् विनिगमनाविरहाच्च त्रितयोक्तिः। इष्टसाधनताज्ञानन्तु नोपात्तम्
आप्तकामेनेश्वरे तदभावात्। सकर्तृकत्वं च न कृतिमज्जन्यत्वम्, तथा सति
ईश्वरे नित्यज्ञानेच्छयोरसिद्धिप्रसंगात्, अतः सकर्तृकत्वं उपादानगोचरा-
परोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वरूपमेव। तथा चैतदनुमानेन नित्यज्ञाने-
च्छाकृतीनां सिद्धौ, नित्यज्ञानेच्छाकृतीनां गुणत्वहेतुकानुमानेन लाघवात्
द्रव्याश्रितत्वसिद्धौ तदेव द्रव्यमीश्वर इति नित्यज्ञानेच्छाकृतिमानेक ई[श्वरः]
सिद्धयतीति प्राञ्चः।

नव्यास्तु प्रवृत्तिं प्रति उपादानज्ञानस्य चिकीर्षायाश्च कारणत्वेन [कार्य]-
सामान्यं प्रति तयोरन्यथासिद्धतया त्रितयजन्यत्वस्य साध्यत्वे बा[धः]
नन्वेवं नित्यकृतिमदीश्वरसिद्धावपि तस्मिन्नित्यज्ञानं नित्येच्छा च न सिद्ध्येत्
न च कृतिं प्रति ज्ञानचिकीर्षयोर्हेतुत्वेन तयोरीश्वरे सिद्धिरिति वाच्यम्
नित्यकृतेः कार्यत्वाभावान्न तया ज्ञानचिकीर्षयोः सिद्धिः। परन्तु यः स[र्वज्ञः]
इत्यादिश्रुत्यैव ज्ञानेच्छयोः सिद्धिर्वाच्येति, सकर्तृकत्वं कृतिमज्जन्यत्वमे[व]
न च तदपि संभवति। कर्त्तुर्जनकत्वेऽनन्तकृतीनां कारणतावच्छेदकत्वापत्तेः
स्वरूपतः कृतित्वजातेरेव कारणतावच्छेदकत्वे लाघवमिति कृतिजन्यत्व[मेव]
साध्यम्, एवं च कार्यं कृतिजन्यमितिफलितम्। कृतिजन्यत्वं च "[उपा]-
दानत्वाख्य"विशेष्यतासंबन्धावच्छिन्नकृतित्वावच्छिन्नकारणतानिरूपितका[र्यता]-
रूपम्। अदृष्टद्वाराजीवकृतिजन्यत्वस्य कार्यमात्रे सत्त्वात्सिद्धसाधनवार[णाय]
कारणतायां विशेष्यतासंबन्धावच्छिन्नत्वनिवेशः। एवं च समवा[यि]-

कार्यं प्रति स्वजन्यादृष्टवत्त्वसंबन्धेन जीवकृतेः कारणतया तस्या विशेष्यता-संबन्धावच्छिन्नत्वविरहान्न सिद्धसाधनम्। समवायसंबन्धावच्छिन्नत्वनिवेशस्तु यदुपादानिका प्रवृत्तिस्तत्रैव समवायेन कार्यमिति नियमस्य निर्वाहायेति प्राहुः।

नन्वेवं कार्यं उपादानत्वाख्य विशेष्यतासंबन्धावच्छिन्नकारणतानिरूपितकार्यतावत् कार्यत्वादित्यनुमानं फलितम् तथा च पक्षतावच्छेदकहेत्वोरैक्ये उपनयवाक्याच्छाब्दबोधानुपपत्तिरिति चेन्न। स्वरूपसंबन्धविशेषरूपकार्यत्वस्य पक्षतावच्छेदकत्वात्, प्रागभावप्रतियोगित्वरूपकार्यत्वस्य हेतुत्वेन तयोरैक्याभावात्। प्रतियोगित्वं च पदार्थान्तरम्, सप्तपदार्थविभागस्तु तत्वज्ञानोपयोगितयेति ध्येयम्।

न चैवमपि ध्वंसे पक्षतावच्छेदकाक्रान्ते विशेष्यतासंबन्धावच्छिन्नकृतित्वावच्छिन्नजनकतानिरूपितसमवायसबन्धावच्छिन्नजन्यत्वरूपसाध्याभावेन बाध इति वाच्यम्। सत्वविशिष्टजन्यत्वस्य "ध्वंसव्यावृत्तस्य" पक्षतावच्छेदकत्वोपगमात्। न च हेत्वधिकरणे ध्वंसे उक्तसाध्याभावेन व्यभिचार इति वाच्यम्। हेतावपि सत्ववैशिष्ट्यस्य निवेशनीयत्वात्"।

## जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च।

दी०—जीवस्य लक्षणमाह। जीवेति।

ग०—जीवस्य लक्षणमाहेति। स्वरूपमाहेत्यर्थः। जीव इत्यनेन जीवत्वं जीवलक्षणम्। जीवत्वं च सुखादिमत्वम्। तदेवाह **सुखाद्याश्रयत्वमिति**। आदिना दुःखादेः परिग्रहः। **प्रतिशरीरं भिन्न इति**। प्रतिवृक्षं सिञ्चतीत्यत्रेव प्रत्यर्थो व्यापकत्वम्, तथा च वृक्षत्वव्यापककर्मतानिरूपितसेचनानुकूलकृतिमानितिवत्, शरीरत्वव्यापकभेदप्रतियोगी जीव इति तादृशवाक्याद्बोधः। अथ नैतद्युज्यते जीवात्मन एकत्वेऽपि ईदृशार्थनिर्वाहात्, आत्मभेदस्य शरीरत्वव्यापकताया अक्षतेरिति चेन्न। **शरीरं** स्वावच्छेदकशरीरं तथा च प्रतिपदसमभिव्याहृतशरीरपदस्य स्वावच्छेदकयत्किंचिच्छरीरभेदव्या-

पकत्वमर्थः । तस्य भेदेऽन्वयः । तथा च स्वावच्छेदकयत्किंचिच्छरीरभे-
पकभेदप्रतियोगीत्यर्थः[1] । व्याप्यतावच्छेदकसंबन्धश्चात्र स्वाश्रयशरीर-
स्वाश्रयावच्छेदकत्वं व्यापकतावच्छेदकसंबन्धः ।

दी०—ननु मनुष्योऽहं ब्राह्मणोऽहमित्यादौ सर्वत्राऽहं
शरीरस्यैव विषयत्वाच्छरीरमेवाऽऽत्मेति चेन्न । शरीरस्य करपाद-
नाशे शरीरनाशादात्मनोऽपि नाशाऽपत्तेः । नापीन्द्रियाणामात्मत्वं
तथात्वे योऽहं घटमद्राक्षं सोऽहं इदानीं स्पृशामीत्यनुसन्धाना-
प्रसंगात्, अन्यानुभूते अन्यस्याऽनुसन्धानाऽयोगात् । तस्मा-
न्द्रियादिव्यतिरिक्तो जीवः, सुखादिवैचित्र्यात्प्रतिशरीरं भि-
स च न परमाणुपरिमाणः, शरीरव्यापिसुखाद्यनुपलब्धिप्रसं-
न मध्यमपरिमाणः, तथा सति अनित्यत्वप्रसंगेन कृतहानाऽकृ-
भ्यागमप्रसंगात् । तस्मान्नित्यो विभुर्जीवः ।

गं०—चार्वाकमतं दूषयितुं तन्मतमुपन्यस्यति । नन्विति । इत्या-
विति । आदिना । क्षत्रियोऽहमित्यादेः परिग्रहः । इत्याद्यभिन्नस्थ-
मित्याकारकप्रत्यये इत्यर्थः । शरीरस्यैव विषयत्वादिति । एवकारेण शरी-
रिक्तस्याहं प्रत्ययविषयत्वं व्यवच्छिद्यते । करपादादिनाशे इति । आ-
नासिकादेः परिग्रहः । शरीरनाशात् । पूर्वशरीरनाशात् । आत्मनोऽ-

---

१ तथा च एतच्छरीरावच्छिन्नो जीवः एतच्छरीरभिन्नशरीरावच्छिन्न भिन्नः ए-
रीरभिन्नशरीरावच्छेद्यभोगानधिकरणत्वाद् घटवदिति फलितम् । न च एतच्छरीरा-
न्नजीवात्मकपक्षे एतच्छरीरभिन्नजन्मान्तरशरीरावच्छिन्नजीवभिन्नत्वरूपसाध्यं बाधि-
वाच्यम् । साध्यघटकैतच्छरीरभिन्नशरीरे एतच्छरीरसमानकालीनत्वस्यापि निवे-
त्वात् । प्रकृते जन्मान्तरशरीरस्य एतच्छरीरसमानकालीनत्वाभावेनाऽदोषः ।
एवं तादृशशरीरे योगाद्यजन्यत्वमपि विशेषणीयम् । तेन जैगीषव्यादीनां एक-
शरीरसत्वेऽपि न बाधः । एवं हेतुघटकशरीरेऽपि एतच्छरीरभिन्नत्व—एतच्छरीर-
कालीनत्व—योगाद्यजन्यत्वविशेषणान्यावश्यकानि । अन्यथा स्वरूपासिद्ध्यापत्तेरिति

त्वन्मते इत्यादिः। अपि शब्दः एवकारार्थे। त्वन्मते आत्मन एव नाशापत्तेरि-त्यर्थः। नचेष्टापत्तिः, पूर्वानुभूतस्य कालान्तरे स्मरणानुपपत्तेः। अनुभवाश्रयस्य पूर्वशरीरस्य विनष्टत्वात्। "चक्षुरादीनामेवाऽऽत्मत्वमस्तु" इति बौद्धमतं दूषयति। नापीन्द्रियाणामिति। अपिना शरीरपरिग्रहः। यथा शरीरस्याऽऽत्मत्वं नास्ति तथा इन्द्रियाणामात्मत्वं नास्तीत्यर्थः। तत्र हेतुमाह। **योऽहं घटमद्राक्षमिति।** योऽहं घटादिविषयकवर्तमानध्वंसप्रतियोगिचाक्षुषवा-नित्यर्थः। **सोऽहमिदानीं स्पृशामीति।** घटादिविषयकवर्त्तमानस्पार्शं-नवान् सोहमित्यर्थः। **इत्यनुसन्धानाभावप्रसंगादिति।** इत्याकारकचाक्षु-षाश्रयस्पार्शनाश्रययोः अभेदावगाहिप्रत्ययाभावप्रसंगादित्यर्थः। तथा च चक्षुस्त्वगादिरूपेन्द्रियाणां परस्परभिन्नतयाऽभेदावगाहिप्रत्ययानुपपत्तेः नेन्द्रियाणामात्मत्वसंभव इत्यर्थः। **अनुसन्धानायोगादिति।** स्मरणा-संभवादित्यर्थः अन्यथा चैत्रेणानुभूतस्य मैत्रेण स्मरणप्रसंगादिति भावः। इदमुपलक्षणम्। पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात्। समवायेन स्मृतिं प्रति समवायेनाऽनुभवस्य कारणतया अनुभवितुरभावात्। नच विषयतासंवन्धेन स्मृतिं प्रति विषयतासंबन्धेनानुभवः कारणमिति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभाव आवश्यकः, आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे घटाद्यनुभवोत्तरं पटादिस्मृत्यापत्तेः, विषयनिवेशे तु महा-गौरवापत्तिरिति वाच्यम्। तथापि तत्पुरुषीयत्वनिवेश आवश्यकः, अन्यथा चैत्रेणाऽनुभूतस्य मैत्रेण स्मरणप्रसंगादित्यन्यत्रविस्तरः तस्मादिति जीवस्य देहेन्द्रियरूपत्वासंभवादित्यर्थः देहेन्द्रियादिव्यतिरिक्त इति। देहेन्द्रियादि भिन्न एवेत्यर्थः। आदि पदेन मनः क्षणिकविज्ञानयोः परिग्रहः। **सच न परमाणुरिति।** जीवः परममहत्त्ववानेवेत्यर्थः। **शरीरव्यापीति।** अन्य-थेत्यादिः। शिरसि मे वेदना पादे मे सुखमित्यादिसमूहालंबनात्मकसाक्षा-त्कारानुपपत्तिप्रसंगादित्यर्थः। जीवस्याऽणुत्वेन एकदा शिरःपादादिना संब-न्धाऽसंभवादितिभावः। ननु शरीरावच्छेदेनाऽऽत्मनि सुखादिसाक्षात्कारोप-पत्तये सर्वशरीरव्यापित्वमात्मनोऽस्तु तथापि विभुत्वाङ्गीकारे प्रयोजनाभाव

इत्यत आह । न मध्यमपरिमाणवानिति । नापकर्षाश्रयमहत्त्ववानि
तथा सतीति जीवस्य तादृशपरिमाणवत्त्वस्वीकारे इत्यर्थः । अनित्यत्वे
अनित्यप्राप्त्येत्यर्थः । यन्मध्यमपरिमाणं तदनित्यं यथा घट इति व्याप्ति
भावः । कृतहानेति । कृतस्य एतज्जन्मार्जितस्य पापपुण्यादेः हानौ नि
वम्, अकृतस्य स्वानार्जितस्य पुण्यपापफलस्याऽभ्यागमः प्राप्तिः त
पत्तेरित्यर्थः । कर्त्तुरात्मन उत्तरजन्मनि असत्त्वात्, अकर्त्तुश्च सत्त्वा
भावः । उपसंहरति । जीवस्याऽणुत्वमध्यमपरिमाणवत्त्वाऽसंभवादि

## सुखाद्युपलब्धिसाधनमिन्द्रियं मनः ।

न्या०—मनो निरूपयति । सुखादीति । उपलब्धिर्नाम सा
त्कारः । तथा च सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रि
मनसो लक्षणम् । इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः,
सुखदुःखादिसाक्षात्कारकारणत्वविशेषणम् । विशेष्यानुपादाने
त्मनि अतिव्याप्तिः, आत्मनः सुखादिकं प्रति समवायिकारणत्व
अत इन्द्रियत्वरूपविशेष्योपादानम् ।

दी०—मनसो लक्षणमाह । सुखेति । स्पर्शरहितत्वे
क्रियावत्त्वं मनसो लक्षणम् ।

गं०—मनो निरूपयतीति । क्रमप्राप्तमित्यादिः । मनोविषयकज्ञा
कूलव्यापारानुकूलकृतिमान् मूलकार इति बोधः । दीपिकायां-मन
लक्षणमाहेति । मनोविषयकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकू
मान् मूलकार इति बोधः । सुखादेरुपलब्धिः सुखाद्युपलब्धिः । वि
पष्ठ्यर्थः । उपलब्धिः-साक्षात्कारः । सुखादिविषयकज्ञानमित्य
सुखाद्युपलब्धेः साधनं सुखाद्युपलब्धिसाधनम्, सुखाद्युपलब्धिनिरूपित
णतावत् । तथा च सुखादिविषयकसाक्षात्कारनिष्ठकार्यतानिरूपितकारण
सति इन्द्रियत्वं मनसो लक्षणमित्यर्थः । सुखादिविषयकसाक्षात्

अहं सुखी अहं दुःखीत्याकारकः, तन्निरूपितकारणत्वस्य मनसि सत्वाल्लक्षण-समन्वयः ।

मनसि प्रमाणन्तु सुखादिसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवदित्यनुमानम् । ईश्वरीयसाक्षात्कारे व्यभिचारवारणाय जन्येति । तथा च सुखादिसाक्षात्कारस्य सकरणकत्वे सिद्धे चक्षुरादीनां बाधाद् मनसः सिद्धिः । ज्ञानसामान्यं प्रति आत्ममनःसंयोगस्याऽसमवायिकारणतया तदाश्रयत्वेनाऽपि मनसः सिद्धिर्बोध्या । ज्ञानं साऽसमवायिकारणकं भावकार्यत्वात् घटवदित्यनुमानादिति ध्येयम् ।

दीपिकायां स्पर्शरहितत्वे सतीति । इदं च घटादावतिव्याप्तिवारणाय । समवायसंबन्धावच्छिन्नस्पर्शत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वे सतीत्यर्थः । तेन व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकं व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकं वाऽभावमादाय न तद्दोषतादवस्थ्यम् । आकाशादावतिव्याप्तिवारणाय विशेष्यदलम् ।

## तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च

दी०—मनो विभजते । तच्चेति । एकैकस्याऽऽत्मनः एकैकं मनः आवश्यकमित्यात्मनामनेकत्वात् मनसामप्यनेकत्वमित्यर्थः । परमाणुरूपमिति । मध्यमपरिमाणवत्त्वेऽनित्यत्वप्रसंगादित्यर्थः । ननु मनो विभु स्पर्शरहितद्रव्यत्वात् आकाशवदिति चेन्न । मनसो विभुत्वे आत्ममनःसंयोगस्याऽसमवायिकारणस्याऽभावात् ज्ञानानुत्पत्तिप्रसंगात् । न च विभुद्वयसंयोगोऽस्त्विति वाच्यम् । तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसंगात् । पुरीतद्व्यतिरिक्तप्रदेशात्ममनःसंयोगस्य सर्वदा विद्यमानत्वात् । अणुत्वे तु पुरीतति नाड्यां प्रविशति तदा सुषुप्तिः, यदा निःसरति तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ।

गं०—मूले । तच्चेति । मनश्चेत्यर्थः । अवधारणार्थकश्च शब्दः । अन-

न्तमित्युत्तरं योज्यः। अनन्तमेवेत्यर्थः। तत्र हेतुमाह। प्रत्यात्मनियत-
दिति। आत्मानं आत्मानं प्रति प्रत्यात्मम्। तत्र नियतत्वात्। ज्ञानो-
नियमेनाऽऽत्मसंबन्धित्वादित्यर्थः। अत्र प्रतिपदसमभिव्याहृताऽऽत्म-
स्याऽऽत्मत्वव्यापकसंख्यासजातीयमर्थः। नियतत्वं संख्यावत्त्वम्।
चाऽऽत्मत्वव्यापकसंख्यासजातीयसंख्यापर्याप्त्यधिकरणत्वादित्यर्थः। सा
च बहुत्वत्वव्याप्यजात्या। तदेवाह। एकैकस्याऽऽत्मन इति।
मन इति। सर्वात्मनामेकस्य मनसः स्वीकारे एकस्य ज्ञानद-
मपरस्य तदनुपत्तिः, तस्याऽणुत्वेन सकलात्मसंबन्धीन्द्रियैरेकदा सं-
भावात्। मनसः परमाणुरूपत्वं व्यवस्थापयितुमादौ मध्यमपरि-
वत्वं खण्डयति। मध्यमपरिमाणवत्वे। मनस इत्यादिः। अपक-
यमहत्त्ववत्वे इत्यर्थः। अनित्यत्वप्रसंगादिति। यद्यन्मध्यमपरि-
तत्तदनित्यमिति व्याप्त्या नानावयवतन्नाशकल्पने गौरवादिति यावत्।
ममहत्परिणामवत्वं खण्डयितुमाक्षिपति। नन्विति। विभ्विति।
महत्परिमाणवदित्यर्थः। घटादौ व्यभिचारवारणाय स्पर्शरहिते
गुणादौ व्यभिचारवारणाय द्रव्यत्वादिति। स्पर्शवदवृत्तिद्रव्यविभा-
मंदत्वादिति फलितम्। तेनोत्पन्नविनष्टघटादौ न व्यभिचारः। वि-
इति, परमहत्परिमाणवत्वे इत्यर्थः। आत्ममनःसंयोगस्येति। आ-
मनःसंयोगस्येत्यर्थः। अभावादिति। विभुद्वयसंयोगाभावेनाऽऽ-
मनःसंयोगस्यावृत्तेरित्यर्थः। ज्ञानानुत्पत्तिप्रसंगादिति। भावकार्य-
कारणत्रितयजन्यत्वनियमेन प्रकृतेऽसमवायिकारणाभावादित्यर्थः।
तादृशनियमे मानाभावः, द्रव्यमात्रस्यैव कारणत्रितयजन्यत्वनियमात्,
चाऽसमवायिकारणं विनापि क्वचिदुत्पत्तिसंभवेन प्रकृते ज्ञानानु-
बाधकाभाव इति वाच्यम्। तथा सति सुषुप्तावपि ज्ञानाद्युत्पत्तेः,
करणत्वानुपपत्तेश्च। इदमुपलक्षणम्। ज्ञानयौगपद्यप्रसङ्गश्च
बोध्यम्। सुषुप्त्यभावादिति। अत्र सर्वदा विद्यमानत्वादिति
प्रविशतीति। परमाणोः क्रियावत्त्वादिति भावः।

## चक्षुर्मात्रग्राह्योगुणो रूपम् ।

न्या०—रूपं लक्षयति—चक्षुरिति । चक्षुर्मात्रग्राह्यत्वविशिष्ट-गुणत्वम् रूपस्य लक्षणम् । विशेष्यमात्रोपादाने रसादावतिव्याप्तिः । अतश्चक्षुर्मात्रग्राह्यत्वविशेषणम् तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः, यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठाजातिस्तदिन्द्रियग्राह्येति नियमात्तद्वा-रणाय विशेष्योपादानम् । चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाऽ-ग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् , मात्रपदानुपादाने संख्यादिसामान्यगुणे-ऽतिव्याप्तिः । तत्रापि चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात् अतस्त-द्वारणाय मात्रपदम् । संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्र-ग्राह्यत्वं नास्ति । अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्राह्येति ।

गं०—मूले । चक्षुर्मात्रग्राह्येति । चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्र-ग्राह्यः । जन्यत्वं तृतीयार्थः । ग्रहधातोर्ज्ञानमर्थः । ण्यत्प्रत्ययस्य विषयोर्थः । तथा च चक्षुर्मात्रजन्यज्ञानविषयत्वे सति गुणत्वं रूपस्य लक्षणम् । चक्षुर्मात्र-जन्यं यद्ज्ञानं "इदं रूपमित्याकारकं" तद्विषयत्वस्य रूपे सत्त्वाल्लक्षणसम-न्वयः । चक्षुर्मात्रग्राह्यत्वविशिष्टेति । वैशिष्ट्यं च सामानाधिकरण्य-सम्बन्धेन । तन्निष्ठाजातिरिति तदभावश्चेत्यपि बोध्यम् । मात्रपद-मिति । सत्यन्तार्थकमिति शेषः । विशेष्यदलप्रयोजनमाह । अतीन्द्रिय-गुरुत्वादाविति । आदिना अदृष्टभावनयोः परिग्रहः ।

न्या०—अत्र लक्षणे ग्राह्यत्वं नाम प्रत्यक्षविषयत्वम् । अग्रा-ह्यत्वं नाम तदविषयत्वम् । तथा च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषय-त्वे सति चक्षुर्जन्यप्रत्यक्षविषयत्वम् इति फलितोऽर्थः । ननु प्रभा-घटसंयोगे रूपलक्षणस्यातिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यविशेषगुणत्वा-दिति चेन्न । गुणपदस्य विशेषगुणपरत्वात् । नचैवं विशेषगुणत्वघ-

टितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति च्यम्। जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय द्रु दानात्। अथवा चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वात् भाघटसंयोगादावतिव्याप्तिः। संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभा घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात् तद्गतजातेरपि त्वगिन्द्रिय त्वात्, यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रिय त्वात्। अत्र जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्य मति सुवर्णादावतिव्याप्तिरतस्तद्वारणाय तदुपादानम्। एवं दिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणादावतिव्याप्तिः, विशे नुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः, अतो विशे विशेष्ययोरुपादानम्।

दी०—रूपं लक्षयति—चक्षुरिति। संख्यादावतिव्याप्तिवार मात्रपदम्। रूपत्वेऽतिव्याप्तिवारणाय गुणपदम्।

गं०—प्रत्यक्षविषयत्वमिति। लौकिकप्रत्यक्षविषयताश्रयत्वमि तेन गुरुत्वादीनां चाक्षुषाऽलौकिकग्रहेऽपि नातिव्याप्तिः। तद्विषयत्वा लौकिकप्रत्यक्षाविषयत्वमित्यर्थः। तेन रूपस्येतरेन्द्रियेणालौकिकग्रहसं पि नाऽसंभवः। तथा च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षीयलौकिकविषयता सति चक्षुरिन्द्रियजन्यप्रत्यक्षीयलौकिकविषयतावत्त्वे सति गुणत्वं लक्षण तदुपानादिति। मात्रपदोपादानादित्यर्थः। परमाणुरूपादाव विशेषपदाऽप्रवेशेन लाघवाच्चाह। अथवेति। वस्तुतस्तु त्वगग्राह्यचक्षु ह्यगुणविभाजकधर्मवत्त्वम् लक्षणम्। लक्ष्यभिन्नगुणादाविति। रूपस्प वित्यर्थः।

**तच्च शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्र दात् सप्तविधम्। पृथिवी-जल-तेजोवृत्ति।**

दी०—रूपं विभजते—तच्चेति। नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपम् इति चेत् न। रूपस्य व्याप्यवृत्तित्वनियमात्। ननु चित्रपटे अवयवरूपस्य प्रतीतिरस्त्विति चेन्न। रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात्। न च रूपवत्समवेतत्वम्प्रत्यक्षत्वप्रयोजकम्, गौरवात्। तस्मात् पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः। रूपाश्रयमाह। पृथिवीति।

गं०—मूले। तच्चेति। निरुक्तलक्षणलक्षितं रूपं चेत्यर्थः। अवधारणात्मकश्च शब्दः। सप्तविधमित्युत्तरं योजनीयः सप्तविधमेवेत्यर्थः। चित्ररूपानंगीकर्तृनवीनमतं दूषयितुं तन्मतमुपन्यस्यति। नन्विति। अव्याप्यवृत्तिनीलादिसमुदाय एवेति। नीलादीनामव्याप्यवृत्तित्वं विना तत्समुदायस्य एकत्र वृत्तित्वाऽसंभवादिति भावः। चित्ररूपमिति। प्रतीतिविषय इत्यर्थः। तथा च तादृशनीलादिसमुदायविषयकत्वाङ्गीकारेणैव तादृशप्रतीत्युपपत्तेरतिरिक्तचित्ररूपाङ्गीकारो निष्प्रामाणिक इति भावः। व्याप्यवृत्तित्वेति। दैशिकव्याप्यवृत्तित्वेत्यर्थः। कालिकाऽव्याप्यवृत्तित्वंत्वस्त्येवेति भावः। तथा च रूपत्वस्य व्याप्यवृत्तित्वव्याप्यत्वादिति भावः। प्राचामयमाशयः। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति समवायसम्बन्धेनोद्भूतरूपं कारणम्। एवं च रूपस्याऽव्याप्यवृत्तित्वे नानारूपवदवयवारब्धद्रव्यप्रत्यक्षे समवायेन नानारूपाणां हेतुत्वकल्पने गौरवम्, एवं नीलपीतकपालारब्धघटे पीतकपालावच्छेदेन नीलरूपोत्पत्तिवारणाय तत्तदवयवावच्छेदेन नीलादिरूपं प्रति तत्तदवयवगतनीलान्यरूपत्वेन प्रतिबन्धकता, अवयविनि तत्तदवयवावच्छेदेन तत्तद्रूपं प्रति तत्तदवयवगततद्रूपाणां हेतुता वा वाच्या। तथा च गौरवम्। एवं परमाणौ नीलादेर्व्याप्यवृत्तितया पटादिसमवेतनीलादेः तत्सजातीयत्वेन न तेषामव्याप्यवृत्तित्वं कल्पयितुं शक्यम्, विरोधात्। अतोऽवयविनि व्याप्यवृत्तिरेव नीलादिसमुदायो वाच्यः। न च तावताऽपि निष्कृतिः, नीलादेर्व्याप्यवृत्तितया नानारूपवदवयवारब्धपटे एकरूपव्यक्तेरेवोत्पत्तिसंभ-

वेन एकरूपस्यैव प्रत्यक्षं स्यात्, नान्यरूपस्य परस्परविरोधे तु कस्य प्रत्यक्षं न स्यादतश्चित्ररूपसिद्धिः । न चैवमतिरिक्तचित्ररूपं प्रति अवयव नानारूपाणां कारणत्वकल्पनमधिकमिति वाच्यम् । अनन्यगतिकत्वात् चित्रपट इति प्रतीतेर्नानारूपसमुदायविषयकत्वकल्पनामपेक्ष्य एकचित्र विषयकत्वकल्पने लाघवादिति ध्येयम् । इदमत्रतत्त्वम् । समवाये नीलादिकं प्रति स्वसमवायिसमवायसम्बन्धेन नीलादेःकारणत्वस्य सर्व सिद्धतया चित्ररूपाङ्गीकर्त्तृ तदनंगीकर्त्तृ, उभयमते नानारूपवदवयवार वयविनि घटे स्वसमवायिसमवेतत्वसम्बन्धेन कपालनीलादीनां सत्त्व पीतावच्छेदेन नीलाद्युत्पत्तिवारणाय समवायेन नीलं प्रति स्वसमवायिस वेतत्वसम्बन्धेन नीलान्यरूपत्वेन प्रतिबन्धकत्वस्यावश्यकतया उभ साम्येऽपि चित्रमिति प्रतीतिविषयताया अनेकेषु रूपेषु कल्पनायां परमतिरिच्यते इति । ननु अस्तु रूपस्य व्याप्यवृत्तित्वं, अस्तु च नानारू वदवयवारब्धघटस्य निर्गन्धत्ववन्नानारूपवदवयवारब्धपटस्यापि नीरूपत्व तादृशघटविशेष्यकगन्धप्रत्ययस्य अवयवगन्धमादायोपपत्तिवत्तादृशघटवि ष्यकप्रत्ययस्यापि अवयवरूपमादायोपपत्तिसंभवादित्याशयेनाऽऽक्षिप ननुचित्रपटे इति । रूपरहितत्वेनेति । समवायेनरूपसामान्याभाव त्वेनेत्यर्थः । पटस्येति । नानारूपवदवयवारब्धपटस्येत्यर्थः । अप्रत्यक्ष त्वप्रसङ्गादिति । प्रत्यक्षनिरूपितलौकिकविषयत्वाभावप्रसङ्गादित्यर्थः द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति समवायेनोद्भूतरूपस्य हे तया तत्र तादृशकारणाभावादिति भावः । शंकते । नचेति । रूपवत्समवे त्वमिति । स्वाश्रयसमवेतत्वसंबन्धेन रूपम् । प्रत्यक्षत्वप्रयोजकम् । प्रत्यक्ष विषयत्वप्रयोजकम् । प्रत्यक्षकारणस्य प्रत्यक्षीयविषयताप्रयोजकत्वाव गौरवादिति । साक्षात्संबन्धेन कारणत्वापेक्षया गौरवादितिभावः[२]

---

१ नचाननुगमः । समवायेन चित्ररूपं प्रति रूपविशिष्टरूपं कारणम् वै० भिन्नत्व-स्वसमवायिसमवेतसमवायिसमवेतत्वोभयसंबन्धेनेत्यनुगमसंभवात् ।

टि० २ केचत्तुरूपत्वापेक्षयारूपवत्समवेतत्वस्यगुरुत्वात् । इदमुपलक्षणम् ।

तस्मादिति । रूपवत्समवेतत्वादेः प्रत्यक्षकारणत्वाऽसंभवादित्यर्थः । पट-स्येति । तादृशपटस्येत्यर्थः । प्रत्यक्षत्वान्यथानुपपत्त्येति अन्यथा प्रत्यक्षत्वा-नुपपत्त्येति योजना । चित्ररूपसिद्धिरिति । क्लृप्तरूपानां परस्परविरो-धेनोत्पत्त्यसंभवादिति भावः ।

**तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ।**

दी०—आश्रयं विभज्य दर्शयति । तत्रेति ।

गं०—मूले । तत्र पृथिवीजलतेजःसमुदाये । घटकत्वं सप्तम्यर्थः । पृथिव्यामित्यत्र वृत्तित्वं सप्तम्यर्थः । सप्तविधमपि रूपं पृथिवीजलतेजःस-मुदायघटकीभूतपृथिवीवृत्तीति यावत् । जले इति । सप्तम्यर्थो वृत्तित्वम् । तथा चाऽभास्वरशुक्लरूपं जलवृत्तीत्यर्थः । क्वचिन्नीलादिग्रहस्त्वौपाधिक इति भावः । एवं तेजोवृत्तिरूपं शुक्लभास्वररूपमित्यर्थः । सुवर्णादौ शुक्लभास्वर-रूपमभिभूतमिति भावः । ननु 'गुणे शुक्लादयः पुंसि गुणि लिंगास्तु तद्वति', इति कोपात् गुणवाचकशुक्लादिशब्दानां पुंलिङ्गत्वाभिधानात् रूपात्मकगुणवाचकशुक्लशब्दस्य कथमत्र नपुंसकत्वमिति चेन्न । अस्त्रीनियतलिंगानां योगे तल्लिंगतापि च । इत्यनुशासनानुरोधेन पूर्वानुशा-सनस्य नियतस्त्रीलिंगभिन्नलिंगकविशेष्यवाचकपदाऽसमभिव्याहारविषयत्वेन प्रकृते रूपमिति विशेष्यवाचकपदं नपुंसकलिङ्गमनुषज्य शुक्लपदस्य नपुंसकलिंगताया उपपादयितुं शक्यत्वादिति ।

**रसनाग्राह्यो गुणो रसः । स च मधुराऽम्ललवण-कटुकषायतिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः । पृथिव्यां षड्विधः । जले मधुर एव ।**

---

वत्समवेतत्वस्य रूपवत्समवेतसमवेतत्वस्य वा प्रयोजकत्वमित्यत्र विनिगमनाविरहात्कार्य-कारणभावद्वयापत्तिश्चेत्यपि बोध्यमित्याहुः ।

दी०—रसं लक्षयति। रसनेति। रसत्वेऽतिव्याप्तिवारणाय गुणपदम्। रसस्याश्रयमाह। पृथिवीति। आश्रयं विभज्य दर्शयति पृथिव्यामिति।

गं०—रसं लक्षयतीति। रसविशेष्यकलक्षणस्वरूपप्रामाण्यशङ्कज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। रूपादावतिव्याप्तिवारणाय-मूले रसनाग्राह्य इति। रसत्वे इति। इदमुपलक्षणम् रसाभावेऽपि अतिव्याप्तिर्बोध्या। यो गुणो यदिन्द्रियेण गृह्यते तन्निष्ठा जातिस्तदभावश्च तेनैव गृह्यते इति नियमात्। रसनेन्द्रियजन्यप्रत्यक्षीयलौकिकविषयताश्रयगुणविभाजकधर्मवत्त्वमित्यर्थः। तेन परमाणुरसादौ नाऽव्याप्तिः। जले मधुर एवेति मूलम्। जम्बीरजलमम्लमिति प्रतीतिः स्वसमवायिसंयोगसंबन्धेन जम्बीरसमेवतरसविषयिणी। स्वं जम्बीरसमवेतो रसः। शुष्कजम्बीरेऽपि अम्लरसोपलब्ध्या तत्राऽम्लरसांगीकारस्यावश्यकत्वेन जले नाम्लादिकमिति ध्येयम्। न च जले माधुर्यमपि नोपलभ्यते इति वाच्यम्। हरीतक्यादिभक्षणसहकृतरसनेन्द्रियस्यैव जलरसग्राहकत्वात्, सर्वदाऽनुपलंभेऽपि क्षतेरभावात्। वस्तुतस्तु निदाघपीतनिर्मलगंगाजलमाधुर्यस्याऽनुभवसिद्धस्याऽपलापाऽसंभवान्मधुरएवेति युक्तम्। रसोऽपि न रूपवदव्याप्यवृत्तिः। न च तर्हि मधुरादिनानारसवदवयवारब्धावयविनो नीरसत्वापत्तिरिति वाच्यम्। इष्टत्वात्। तत्र रसनेन्द्रियेणाऽवयवरस एव गृह्यते अवयवानामपि रसनेन्द्रियसंयुक्तत्वेन तत्समवायस्याऽवयवरसे सत्वात्। न च तादृशावयविनो नीरसत्वे तत्प्रत्यक्षानुपपत्तिः शंक्या। उद्भूतरूप इव रसस्य द्रव्यप्रत्यक्षे कारणत्वाभावात्, रसनेन्द्रियस्य रसमात्रग्राहकत्वेन अवयविप्रत्यक्षे कारणत्वाभावाच्च। तथा च चित्ररसो नांगीकार्य एवेति। रसश्च द्विविधः। नित्योऽनित्यश्च। जलपरमाणौ रसो नित्यः। अन्यः सर्वोऽनित्यः। अनित्योऽपि द्विविधः, पाकजाऽपाकजभेदात्, पृथिव्यां पाकजः अग्निसंयोगाऽसमवायिकारणकः। अपाकजस्थलेऽवयविरसं प्रति अवयवरसः असमवायिकारणम्। समवायिकारणन्तु आश्रय एव सर्वत्र।

**घ्राणग्राह्यो गुणो गन्धः। स द्विविधः। सुरभि-रसुरभिश्च। पृथिवीमात्रवृत्तिः।**

दी०—गन्धं लक्षयति। घ्राणेति। गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम्।

गं० – गन्धं लक्षयतीति। गन्धविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलकृतिमान् मूलकार इति बोधः। रूपादावतिव्याप्तिवारणाय घ्राणग्राह्येति! गन्धत्वे इति। गन्धाभावेऽप्यतिव्याप्तिर्बोध्या। तथा च घ्राणेन्द्रियजन्यप्रत्यक्षीयलौकिकविषयताश्रयगुणविभाजकधर्मवत्त्वं गन्धस्य लक्षणं पर्यवसन्नम्। तेन परमाणुगन्धे नाऽव्याप्तिः। प्राचीनास्तु चित्रगन्धं नाङ्गीकुर्वन्ति। सुरभ्यऽसुरभिकपालद्वयारब्धे घटे गन्धविरहेऽपि अवयवगन्धस्यैव भानात्। नव्यास्तु चित्रगन्धं स्वीकुर्वन्ति। अन्यथा सुरभ्यसुरभिद्व्यणुकत्रयारब्धे त्र्यणुके गन्धभानं न स्यात्। द्व्यणुकगन्धस्याऽयोग्यत्वादिति। एवं चित्ररसोपिस्वीकार्य इति। गन्धस्तु सर्वोप्यनित्य एवेति ध्येयम्।

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स त्रिविधः। शीतोष्णानुष्णाशीतभेदात्। पृथिव्यप्तेजोवायुवृत्तिः। तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः।**

न्या०—स्पर्शं लक्षयति। त्वगिन्द्रियमात्रेति। अत्रापि मात्रपदं संख्यादावतिव्याप्तिवारणाय। अन्यत्सर्वं पूर्ववद् बोध्यम्।

दी०—स्पर्शंलक्षयति। त्वगिति। स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम्। संयोगादावतिव्याप्तिवारणाय मात्रपदम्।

गं०—मात्रपदमिति। त्वगिन्द्रियभिन्नेन्द्रियजन्यप्रत्यक्षीयलौकिकविषयताशून्यत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षीयलौकिकविषयताश्रयत्वे सति

गुणत्वं समुदितलक्षणार्थः। परमाणुस्पर्शेऽव्याप्तिवारणाय त्वगिन्द्रियमात्र-ग्राह्यजातिमत्त्वं विवक्षणीयम्। वस्तुतस्तु चक्षुरग्राह्यत्वग्ग्राह्यगुणविभाजकधर्म-वत्त्वं पर्यवसितं बोध्यम्। ननु जातिघटितलक्षणे स्पर्शं वेऽतिव्याप्तिविरहे गुणपदं व्यर्थमिति चेन्न। वायोः स्पार्शनप्रत्यक्षविषयत्वे वायुत्वजातिमादाया-तिव्याप्तिवारणाय तत्सार्थक्यात्। तत्र। पृथिव्यप्तेजोवायुसमुदाये। घटक-सप्तम्यर्थः। जले इत्यत्र सप्तम्यर्थो वृत्तित्वम्। शीतस्पर्शः पृथिव्यप्तेजोवायु-घटकीभूतजलवृत्तिरिति बोधः। तप्तजलादावुष्णत्वस्य, सुवर्णादावनुष्णाशीत-त्वस्य, वन्हिजलसंबन्धेन वायौ उष्णशीतत्वस्य चौपाधिकत्वादितिभावः। कठिनत्वसुकुमारत्वादिकं स्पर्शनिष्ठो जातिविशेषः। न तु संयोगनिष्ठा जातिः चक्षुर्ग्राह्यत्वापत्तेः। एवं च नानास्पर्शवदवयवारब्धे घटे चित्रस्पर्शोऽप्यङ्गी-कार्यः। अन्यथा घटत्वाचप्रत्यक्षानुपपत्तेः। त्वाचप्रत्यक्षे स्पर्शस्य समवायेन कारणत्वात्।

## रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च अन्यत्राऽपाकजं नित्यमनित्यं च। नित्यगतं नित्यम् अनित्यगतमनित्यम्।

न्या०—रूपादिचतुष्टयमिति। एतत्तत्वनिर्णयश्चेत्थम्। पाको नाम विजातीयतेजः संयोगः। स च नानाजातीयरूपजनको विजातीयस्तेजः संयोगः, तदपेक्षया रसजनको विजातीयस्तेजः संयोग एव गन्धजनकोऽपि विजातीय एव, एवं स्पर्शजनकोऽपि विजातीय एव। एवम्प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः। यथा तृणपुञ्जनिक्षिप्ते आम्रादौ ऊष्मलक्षणविजातीयतेजः संयोगात्पूर्वहरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्तिः, न तु रसादेरुत्पत्तिः, पूर्वरसस्यैवाऽम्लस्याऽनुभवात्, तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः। एवं गन्धजनको विलक्षण

एव, रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशे विजातीयपाकवशात्सुरभिगन्धोपलब्धेः। एवं स्पर्शजनकोऽपि, पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्, तस्माद्रूपादिजनका विजातीया एव पाकाः यथाकार्यमुन्नेयाः। अतएव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः। यथा गोभुक्ततृणादीनामापरमाण्वन्तभंगे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्त्तते तादृश रूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते। तदुत्तरं तैरेव तादृश रूपरसादय उत्पद्यन्ते, तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः। एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते। एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक्।

गं०—पृथिव्यादिनवानां द्रव्याणां नित्यत्वानित्यत्वे दर्शिते, तथा हि पृथिव्यादिचतुष्टयपरमाणूनां आकाशकालादिगात्ममनसां च नित्यत्वम्, द्व्यणुकादिरूपजन्यपृथिव्यप्तेजोवायूनामनित्यत्वम्। रूपरसगन्धस्पर्शानां तु नित्यानित्यविवेकं दर्शयति। मूले। **रूपादि चतुष्टयमिति**। पृथिव्यामित्यत्र सप्तम्यर्थो वृत्तित्वम्, तथा च पृथिवीवृत्तिरूपादिचतुष्टयमनित्यमित्यर्थः। पाकजमिति हेतुगर्भविशेषणम्, तथा च पृथिव्यां रूपादिचतुष्टयं यतः पाकजमतो नित्यपृथिव्यामनित्यपृथिव्यां च वर्त्तमानं सर्वमप्यनित्यमित्यर्थः। **अपाकजमिति**। इदमपि हेतुगर्भविशेषणम्। तथा च जलादौ रूपादिचतुष्टयं यतोऽपाकजमतो नित्यमनित्यं च भवतीत्यर्थः। **रूपादिचतुष्टयमित्यस्य** रूपादिचतुष्टयघटकमित्यर्थः। तेन गन्धस्य जलाद्यवृत्तित्वेऽपि न वाक्यार्थानुपपत्तिः।

दी०—**पाकजमिति**। पाकः तेजःसंयोगः। तेन पूर्वरूपं

नश्यति रूपान्तरमुत्पद्यते इत्यर्थः। अत्र परमाणुष्वेव पाको न द्व्यणु-कादौ, आमपाकनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः। तत्र परमाणवः समवायि-कारणम्। तेजःसंयोगोऽसमवायिकारणम्। अदृष्टादिकं निमित्त-कारणम्। द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति पीलुपा-कवादिनो वैशेषिकाः। पूर्वघटनाशं विनैव अवयविनि, अवयवे परमाणुपर्यन्तेषु च युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः, अतएव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः। अन्य-त्रेति। जलादावित्यर्थः। नित्यगतमिति। परमाणुगतमित्यर्थः। अनित्यगतमिति। द्व्यणुकादिनिष्ठमित्यर्थः। रूपादिचतुष्टयं उद्भूतं प्रत्यक्षम्। अनुद्भूतमप्रत्यक्षम्। उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः तदभावोऽनुद्भूतत्वम्।

गं०—तेनेति। विजातीयतेजःसंयोगेनेत्यर्थः। पूर्वरूपं नश्य-तीति। पूर्वरूपनाशो भवतीत्यर्थः। अयमेव पाकजशब्दार्थः। अत्रेति कुत्र पाक इत्याकांक्षायामित्यर्थः। पाक इति। पूर्वरूपनाशपूर्वकरूपान्तरो-त्पादकतेजःसंयोग इत्यर्थः। परमाणुष्वेवेत्यत्र एवकारव्यवच्छेद्यं स्वयं विवृणोति न द्व्यणुकादाविति। आदिनाऽवयविमात्र परिग्रहः। अ "इति पीलुपाकवादिन" इत्युत्तरेणाऽन्वयः। आमपाकनिक्षिप्ते इति पच्यते अनेनेति पाकः, अत्राऽग्निरेव। तथा चाऽग्नियन्त्रविशेषस्थापिते इत्यर्थः घटे इति सति सप्तमी। परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे इति। श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तौ इति योजना। श्यामघट-नाशे इति द्व्यणुकादिनाशक्रमेण श्यामघटादिनाशे सतीत्यर्थः। तदनन्तरमि-ति शेषः। रूपान्तरोत्पत्ताविति। पूर्वरूपादिचतुष्टयनाशपूर्वकरूपादि-चतुष्टयोत्पत्तौ सत्यामित्यर्थः, तदनन्तरमिति शेषः। पुनरिति। अग्निसंयोग

दित्यर्थः । रक्तरूपविशिष्टद्व्यणुकाद्युत्पत्तिपूर्वकरक्तघटाद्युत्पत्तिरित्यर्थः । **वैशेषिकाणामयमाशयः** । पाकनिक्षिप्ते घटादाविव घटादिमध्येऽपि विजातीयं रूपरसादिकमनुभवसिद्धम्, तच्चाग्निसंयोगजत्वं ज्ञापयति, अग्निसंयोगस्यैव पाकत्वात् । नहि घटे रक्तोत्पत्त्यनन्तरं तदवयवाः नीलाः सन्तो दृश्यन्ते यावदवयवेषु च रूपान्तरोत्पत्तिर्न संभवति घटस्याऽच्छिद्रत्वेन वन्हेः सूक्ष्मावयवानां अन्तःप्रवेशासंभवेन घटारम्भकयावदवयवेषु वन्ह्यवयवसंयोगस्य बाधितत्वात् । अतः विजातीयवन्हिसंयोगेनाऽवयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः । तथाहि प्राणिकर्मसहकृतादृष्टवशात् अग्निसंयोगात्परमाणौ क्रिया—ततः परमाणुद्वयविभागः—ततो द्व्यणुकारंभकसंयोगनाशः—तत उत्तरदेशसंयोगो द्व्यणुकनाशश्च—ततः परमाणौ श्यामादिनाशः ततो रक्तोत्पत्तिः । ततो रक्तपरमाणौ द्व्यणुकारम्भानुगुणक्रिया । ततो विभागः । ततः पूर्वसंयोगनाशः ततः आरम्भकसंयोगः । ततोद्व्यणुकोत्पत्तिः ततो रक्तोत्पत्तिः । तथा च परमाणुक्रियया द्व्यणुकादिनाशक्रमेण महावयविनो नाशे सति उक्तक्रमेण द्व्यणुकादि महावयविपर्यन्तव्यूहोत्पत्तिः । तथा च **कारणगुणाः कार्यगुणानारभन्ते** इति नियमोपि संगच्छते । **गौतममते** तु अपरिपक्वघटादौ तु स नियमः, परिपक्वघटादौ तु युगपत्पाकस्वीकारे न सा व्यवस्था, सर्वत्र तेजःसंयोगस्यैव कारणत्वादिति । परमाणुरूपे कारणत्रयं दर्शयति । **तत्रेति** । परमाणुरूपे इत्यर्थः । द्व्यणुकादिरूपे तद्दर्शयति । **द्व्यणुकादिरूपे** इति । आदिना अवयविमात्रपरिग्रहः । **पीलुपाकवादिन** इति । वैशेषिका इत्यर्थः । वदन्तीति शेषः ।

**गौतममतं** दर्शयति । **पूर्वघटनाशं विनैवेति** । **अवयविनीति** । पूर्वावयविनीत्यर्थः । **अवयवेष्विति** । तदवयवेष्वित्यर्थः । **युगपद्रूपान्तरोत्पत्तिरिति** । युगपत्पूर्वरूपनाशः । तदनन्तरं युगपद्रूपान्तरोत्पत्तिरित्यर्थः । **अयमाशयः** । अवयविनां सच्छिद्रत्वात् यावत्सु अवयवेषु वन्हेः सूक्ष्मावयवैरन्तःप्रविष्टैः संयोगो न विरुध्यते । **एषामयमाशयः** । तेजसा परमाणूनामभिघातसंयोगेऽपि तस्य नियमत आरम्भकसंयोगप्रतिद्वन्द्विविभागज-

नकक्रियाजनकत्वे मानाभावेन अवयविन्यपि पाकस्वीकार उचितः। चाऽवयवेषु अवयविनि च युगपद्विजातीयतेजःसंयोगाद् युगपदेव पूर्व नाशः। तदुत्तरक्षणे युगपदेव रूपान्तरोत्पत्तिः। तथा च सोयं घट प्रत्यभिज्ञापि संगच्छते। अनन्तावयविनाशाद्यकल्पनेन लाघवमपि। ऽवयविरूपं प्रति अवयवरूपस्य तन्नाशं प्रति आश्रयनाशस्य च हेतु व्यभिचार इति वाच्यम्। कार्यतावच्छेदककोटौ वैजात्यनिवेशेन व्यभि वारणादिति अतएवेति। पार्थिवपरमाणुषु पूर्वरूपनाशस्य रूपान्तो श्चोभयमतसिद्धत्वादेवेत्यर्थः। रूपादिकमिति। रूपादिचतुष्टयमित्यर्थः। द्विविधम्। उद्भूतं अनुद्भूतं च। अत्र यद्वक्तव्यं तदुक्तं प्रागिति ध्येयम्।

एकत्वादिव्यवहारहेतुः संख्या[1]। नवद्रव्यवृत्ति एकत्वादिपरार्धपर्यन्ता। एकत्वं नित्यमनित्यं च नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्वित्वादि कन्तु सर्वत्राऽनित्यमेव।

दी०—संख्यां लक्षयति। एकेति।

गं०—मूले एकत्वादीति। एकत्वमादिर्येषान्ते एकत्वादयः। एक दीनां व्यवहारः एकत्वादिव्यवहारः, तादृशव्यवहारहेतुत्वं संख्याया लक्ष व्यवहारं प्रति व्यवहर्त्तव्यतावच्छेदकस्य कारणतया एकः द्वौ इत्यादि प्रयोगे एकत्वद्वित्वादिसंख्यायाः कारणत्वाल्लक्षणसमन्वयः। घटादिवा एकत्वादीति। व्यवहारहेतुत्वं च व्यवहाराऽसाधारणकारणत्वं बोध्यम्। कालादीनां कार्यमात्रे कारणत्वेपि न क्षतिः। इदमुपलक्षणम्। संख्यात्व सत्वमपि संख्यासामान्यलक्षणं बोध्यम्। एकत्वमादिर्यस्याः परार्धं पर्य

---

टि० १—एकादिव्यवहारहेतुरिति पाठेतु एकादिरूपो व्यवहारः, अयमेक तद्धेतुरित्यर्थः। एकः द्वौ इत्याकारकः।

२ एतेन संख्याया अवधिर्दर्शिता। एकं दश शतं चैव सहस्रमयुतं तथा।

-यस्याः सा तथा । **एकत्वमिति**। द्विविधमिति शेषः। नित्यैकत्वस्याश्रयमाह। **नित्यगतमिति** । एकत्वनाशं प्रति आश्रयनाशः कारणम्, अतः परमाण्वाकाशादीनां नाशाभावेन तद्गतमेकत्वमपि न नश्यतीत्यर्थः। **अनित्यगतमिति** । अनित्यं द्व्यणुकादिकं यदा नश्यति तदा तद्गतमेकत्वमपि नश्यतीत्यर्थः[३] । द्वित्वादीनां द्वैविध्यं नास्तीत्याह। **द्वित्वादिकंत्विति** तु अप्य" सर्वत्रेत्युत्तरं योज्यः । **सर्वत्रेति** त्रलर्थो वर्त्तमानत्वम् । नित्यद्रव्यवर्त्तमानं, अनित्यद्रव्यवर्त्तमानं च द्वित्वादिकमनित्यमेव । द्वित्वादिकं अपेक्षाबुद्ध्या उत्पद्यते, अपेक्षाबुद्धिनाशात्तन्नाश इति यावत् । तथा च द्वित्वादिकं प्रति आश्रयः समवायिकारणम्, प्रत्याश्रयगतमेकत्वद्वयमसमवायिकारणम् । अयमेकः अयमेक इत्याकारिका अपेक्षाबुद्धिः निमित्तकारणम् । अपेक्षाबुद्धिश्च अनेकेषु एकत्वप्रकारिका बुद्धिः । द्वित्वादयो व्यासज्यवृत्तिसंख्याः अपेक्षाबुद्धिजन्याः, अपेक्षाबुद्धिनाशात्तन्नाश इति यावत् । तथाहि प्रथमं अयमेकः अयमेक इत्याकारिका अपेक्षाबुद्धिरुत्पद्यते। ततो द्वित्वोत्पत्तिः ततो द्वित्वत्वनिर्विकल्पकज्ञानम् । ततो द्वित्वप्रत्यक्षं इमौ द्वावित्याकारकम्, अपेक्षाबुद्धिनाशश्च । ततोऽपेक्षाबुद्धिनाशाद् द्वित्वनाश इति। **अत्रेदं बोध्यम्** । ज्ञानं द्विविधम् । नित्यमनित्यं च । तत्र परमेशितुर्ज्ञानं नित्यम् । तदन्यदनित्यम्, क्षणिकं च । क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। ज्ञानमात्रं यस्मिन् क्षणे उत्पद्यते तदुत्तरक्षणे ज्ञानान्तरमुत्पादयति। द्वितीयक्षणोत्पन्नं च ज्ञानं स्वजनकीभूतं प्रथमक्षणोत्पन्नं ज्ञानं नाशयति। अतः प्रथमक्षणोत्पन्नं ज्ञानं तृतीयक्षणे नश्यति । एवं द्वितीयक्षणोत्पन्नज्ञानस्य चतुर्थक्षणे नाशः । एवं रीत्या ज्ञानमात्रस्य स्वतृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात्क्षणिकत्वं सिद्धम् । ननु प्रहर-

---

च नियुतं चैव कोटिरर्बुदमेव च ॥ वृन्दं खर्वो निखर्वश्च शंखः पद्मश्च सागरः। अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम् ॥ इत्युक्तेः परार्धपर्यन्तैव संख्येति यावत्।

३ अनित्यैकत्वस्याऽश्रयः समवायिकारणम्, स्वाश्रयसमवायिकारणगतमेकत्वमसमवायिकारणम्, आश्रयनाशजन्यनाशश्चेति ।

मात्रममुमर्थं जानन्नेवाऽसमित्याद्यनुभवात्, ज्ञानस्य बहुक्षणावस्थायित्व-
मवश्यकम् । न चोक्तस्थले धारावाहिकज्ञानस्वीकाराद्वानुभवविरोध इ-
ति वाच्यम् । ज्ञानानन्त्यकल्पने गौरवात्, यत्र तु नोक्तानुभवः तत्रास्तां तृ-
तीयक्षणवृत्तिध्वंसप्रतियोगित्वमिति चेन्न । योग्यविभुविशेषगुणानां स्वोत्तर-
गुणनाश्यत्वात् । तथा च नाशकसत्वान्नाशः स्यादेव । इत्थंचोक्तस्थले
नायत्या ज्ञानधारैव कल्पनीया । परन्तु अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, द्वि-
क्षणमात्रस्थायित्वे निर्विकल्पकक्षणे एवाऽपेक्षाबुद्धिनाशः स्यात्, ततश्च द्वि-
त्वस्यैव नाशः स्यान्नतु द्वित्वप्रत्यक्षमिति प्रत्यक्षानुत्पत्त्या अपेक्षाबुद्धेः
क्षणावस्थायित्वं स्वीकर्त्तव्यम् । न चाऽपेक्षाबुद्धेर्द्वित्वप्रत्यक्षे एव कारण-
मस्त्विति वाच्यम् । कार्यतावच्छेदके गौरवात् । न चाऽपेक्षाबुद्धेर्द्वित्वनाशे
मानाभाव इति वाच्यम् । अपेक्षाबुद्धिनाशानन्तरं द्वित्वप्रत्यक्षाभावात् ।
ननु अपेक्षाबुद्धेः कथं त्रिक्षणावस्थायित्वम्, नाशकसत्वादिति चेन्न ।
क्षणिकत्वं हि न तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्, ज्ञानतृतीयक्षणवृ-
त्तिध्वंसप्रतियोगित्वस्य घटादावपि सत्वेज घटादेरपि क्षणिकत्वापत्तिः
स्यात्, अतः स्वतृतीयक्षणवृत्तिध्वंसप्रतियोगिस्वत्वमेव तद्वाच्यम् । तथा
च स्वत्वघटितत्त्वेन स्वत्वस्य तत्तद्व्यक्तिविश्रान्ततया अपक्षाबुद्धेर्न तृतीय-
क्षणे नाशः स्वीक्रियते द्वित्वप्रत्यक्षानुरोधात् । न च योग्यविभुविशेषगुणं
प्रति स्वोत्तरोत्पन्नगुणत्वेन कारणत्वे अपेक्षाबुद्धेः स्वोत्तरोत्पन्नसंस्कारादिना
न नाश इति वाच्यम् । स्वत्वस्य तत्तद्व्यक्तिविश्रान्ततया अपेक्षाबुद्धिं
प्रति द्वित्वत्वनिर्विकल्पकस्यैव कारणत्वात् । अथ स्वत्वाननुगमेन तत्तद्व्यक्ति-
विश्रान्तहेतुहेतुमद्भावस्य यत्र प्रहरमात्रं पश्यन्नेवासमित्यनुभवः तत्रापि क-
ल्पनाऽकल्पनापातादिति चेन्न । प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणं
प्रति स्वाव्यवहितपूर्ववृत्तित्व स्वसामानाधिकरण्योभयसंबन्धेनोत्तरगुणस्य
कारणतया स्वत्वस्य संबन्धमर्यादया भानेन तत्तद्व्यक्तिविश्रान्तत्वाभावात् ।
नचाऽपेक्षाबुद्धेर्द्वित्वनिर्विकल्पकक्षणे नाशापत्तिरिति वाच्यम् । तत्र द्वित्वनिर्-
विकल्पकस्यापि नाशकतया द्वित्वसविकल्पकोत्पादक्षणे एव नाशाभ्युपगमात्

ष्वदमुपलक्षणम् । परमाणुद्वित्वं प्रति ईश्वरीयापेक्षाबुद्धेः कारणतया तस्याः नित्यत्वेन द्वित्वस्य नित्यत्वापत्तिभिया तादृशापेक्षाबुद्ध्यधिकरणक्षणनाशादपि अपेक्षाबुद्धिनाशः स्वीक्रियत इति । महाप्रलयानभ्युपगमे ब्रह्माण्डान्तरवर्तियोगिनामेवाऽपेक्षाबुद्धिः कारणमित्यन्यत्र विस्तरः ।

अत्रेदं बोध्यम् । द्वित्वस्य समवायसंबन्धेन प्रत्येकस्मिन्नपि सत्वेन अयं द्वौ इति प्रतीतिः प्रमा स्यादतो द्वित्वादेः पर्याप्तिनामकः कश्चित्संबन्धः स्वीकार्यः । तथा च द्वित्वादेः पर्याप्तिसंबन्धेनोभयत्रैव सत्वादिमौ द्वौ इति प्रतीतिरेव भवति न तु अयं द्वौ इति प्रतीतिरिति ध्येयम् ।

**मानव्यवहाराऽसाधारणकारणं परिमाणम् । नव द्रव्यवृत्ति । तच्चतुर्विधम् । अणु महत् दीर्घं ह्रस्वं चेति ।**

दी०—परिमाणं लक्षयति । मानेति । परिमाणं विभजते । तच्चेति । भावप्रधानो निर्देशः । अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं चेत्यर्थः ।

**गं०—परिमाणं लक्षयतीति** । परिमाणविशेष्यकलक्षणप्रामाण्यस्वरूपप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इत्यर्थः ।

मूले । **मानव्यवहारेति** । मानव्यवहारः "अयमेतावत्परिमाणवान्" इत्यादिशब्दप्रयोगः, तादृशव्यवहाराऽसाधारणकारणत्वं लक्षणम् । अत्र व्यवहर्त्तव्यतावच्छेदकमेतत्परिमाणवत्त्वम्, तच्चैतत्परिमाणमेव तथा च तादृशव्यवहाराऽसाधारणकारणत्वस्य परिमाणे सत्वाल्लक्षणसमन्वयः । दण्डादिवारणाय **मानेति** । कालादिवारणायाऽ**साधारणेति** । शब्दत्ववारणाय **कारणेति** । परिमाणस्य गुणिबोधकशब्दैर्विभजनमसंगतमित्यत आह । **भावप्रधाननिर्देश इति** । अणु महद्दीर्घं ह्रस्वं चेति शेषः । **इदमुपलक्षणम्** । परिमाणत्वजातिमत्त्वमपि लक्षणम् । न च ह्रस्वत्वदीर्घत्वयोः अणुत्वमहत्त्वभिन्नत्वे प्रमाणाभावात्परिमाणस्य द्वैविध्यमेवेति वाच्यम् । घटापेक्षया अणु-

त्वेन प्रतीयमानेऽपि दण्डादौ घटावधिकह्रस्वत्वव्यवहाराऽभावात्, दण्डापेक्षया महत्त्ववत्तयाऽनुभूयमानेऽपि घटादौ तदवधिकदीर्घत्वव्यवहाराभावाच्च परिमाणस्य चातुर्विध्यावश्यकत्वात् । तच्च परिमाणं नित्यानित्यम् । अनित्यगतमनित्यम् । आश्रयनाशान्नश्यतीति । अनित्यपरिमाणमपि त्रिविधम् । परिमाणजन्यं संख्याजन्यं प्रचयजन्यं च । यथा घटादिपरिमाणं कपालादिपरिमाणजन्यम् । त्रसरेणुपरिमाणं द्व्यणुकनिष्ठत्रित्वसंख्याजन्यम्[1] । एवं द्व्यणुकपरिमाणं परमाणुनिष्ठद्वित्वसंख्याजन्यम् । तूलकपरिमाणं प्रचयजन्यम् । प्रचयश्च शिथिलसंयोगः । तथा च प्रचयः संयोगगतो जातिविशेष इति ध्येयम् ।

**पृथग्व्यवहाराऽसाधारणकारणं पृथक्त्वम् सर्वद्रव्यवृत्ति ।**

दी०—पृथक्त्वंलक्षयति । पृथगिति । इदमस्मात्पृथगिति व्यवहाराऽसाधारणकारणं पृथक्त्वमित्यर्थः ।

---

१ न च सर्वत्राऽवयविपरिमाणं प्रति अवयवपरिमाणस्य कारणतया त्रसरेणुपरिमाणं प्रति द्व्यणुकपरिमाणं कुतो न कारणमिति वाच्यम् । तथा सति त्रसरेणुपरिमाणस्याऽणुतरत्वापत्तेः । परिमाणस्याऽयं स्वभावः, यत्स्वसमानजातीयं स्वोत्कृष्टं परिमाणं जनयति । साजात्यं च परिमाणविभाजकाऽणुत्वादिरूपेण । उत्कृष्टं च तरत्वादिना । यथा घटपरिमाणं कपालपरिमाणसजातीयं कपालपरिमाणापेक्षयोत्कृष्टं कपालपरिमाणापेक्षया महत्तरत्वात् । तथैव त्रसरेणुपरिमाणमपि अणुतरं स्यादिति त्रुटेरचाक्षुषत्वप्रसंगाद् द्व्यणुकसमवेतत्रित्वसंख्यैव कारणमिति ध्येयम् ।

२ ननु घटःपटात्पृथक् घटः पटोनेति प्रतीत्योः समानदेशतया घटः पटोनेति प्रतीतिवत्, घटः पटात्पृथगित्यत्राऽपि अन्योन्याऽभाव एव विषयोस्तु किं पृथक्त्वस्य गुणान्तरत्वस्वीकारेण । न च विनिगमकाभावात्पृथक्त्वमेवास्तु न तु अन्योन्याभाव इति वाच्यम् । रूपं न घट इति प्रतीत्यनुपपत्तेः । गुणे गुणाऽनंगीकारेण घटावधिक

गं०—पृथक्त्वविशेष्यकलक्षणप्रामाण्यस्वरूपप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान्मूलकार इति बोधः। व्यवहारासाधारणकारणमिति। तादृशव्यवहारजनकतावच्छेदकमुख्यप्रकारतावत्त्वमित्यर्थः। तेन पृथक्त्ववति अवधित्वे च नातिव्याप्तिः। घटः पटात्पृथक्, घटौ पटात्पृथक्, घटाः पटात्पृथगित्यादिप्रतीत्या पृथक्त्वमपि संख्यावदनेकविधम्, एकपृथक्त्वं द्विपृथक्त्व त्रिपृथक्त्वादिभेदात्। एकपृथक्त्वं द्विविधम्, नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्विपृथक्त्वादिकंत्वनित्यमेव।

**संयुक्तव्यवहारहेतुः संयोगः। सर्वद्रव्यवृत्तिः।**

दी०—संयोगं लक्षयति। संयुक्तेति। इमौ संयुक्तौ इति व्यवहारहेतुरित्यर्थः। संख्यादिलक्षणे सर्वत्र दिक्कालादावतिव्याप्तिवारणाय असाधारणेति विशेषणीयम। संयोगो द्विविधः। कर्मजः संयोगजश्चेति। आद्यो हस्तक्रियया हस्तपुस्तकसंयोगः। द्वितीयो हस्तपुस्तकसंयोगात्कायपुस्तकसंयोगः। अव्याप्यवृत्तिः संयोगः। स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम्।

गं०—मूले संयुक्तव्यवहारेति। तथा च संयुक्तव्यवहाराऽसाधारणकारणत्वं संयोगस्य लक्षणम्। संयोगत्वजातिमत्त्वमिति यावत्। तेन यादृशसंयोगाश्रये तादृशव्यवहारो न जातः तादृशसंयोगे निरुक्तकारणत्वविरहेऽपि नाव्याप्तिः। आद्यः। कर्मज इत्यर्थः। इदमुपलक्षणम्। कर्मजोऽपि द्विविधः। एकक्रियाजन्यः, उभयक्रियाजन्यश्च। एकक्रियाजन्यं

---

त्वस्य रूपेऽभावात्, घटाऽन्योन्याभावस्य रूपे सत्वेऽपि तस्य त्वयाऽनभ्युपगमात्। अपेक्षाबुद्धिविशेषविषयत्वरूपत्वेऽपि उक्तानुपपत्तिस्तदवस्थैव, रूपं घटात्पृथगिति प्रतीतिविरहात्। सामानाधिकरण्यसंबन्धेन पृथक्त्वस्य रूपविशेषणत्वे घटो घटात्पृथगिति प्रतीत्यापत्तिः अतो नास्ति विनिगमनाविरह इति चेन्न। घटात्पृथगितिवत् घटो नेत्यत्रापि पंचमीप्रसंगात्, अतिरिक्तपृथक्त्वाङ्गीकार आवश्यक इति ध्येयम्।

संयोगमुदाहरति। हस्तक्रिययेति। उभयक्रियाजन्यस्योदाहरणन्तु द्वयक्रियाजन्यसंयोगः इत्यवधेयम्। द्वितीयः। संयोगजसंयोग इत्यर्थः। अथ संयोगजसंयोगे मानाभावः, यत्र हस्तक्रियया हस्तपुस्तकसंयोगः कायपुस्तकसंयोगः तत्र हस्तक्रियाया एव हस्तपुस्तकसंयोगं प्रति कारणत्वं न तु हस्तपुस्तकसंयोगस्येति चेन्न। समवायेन संयोगं प्रति समवायेन क्रियायाः कारणतया काये समवायेन क्रियाया अभावेन काये पुस्तकसंयोगानुपपत्तिः। अतः संयोगजसंयोगः आवश्यक एवेति ध्येयम्। इदं पुनरवधेयम्। कर्मजसंयोगो द्विविधः। अभिघातोनोदनाख्यश्चेति। शब्दहेतुः संयोगोऽभिघातः। शब्दाहेतुर्द्वितीयः। अवच्छेदकतासंबन्धेन शब्दं प्रति समवायसंबन्धेनाऽभिघातःकारणम्। प्रशिथिलनिबिड़भेदादपि भेदो बोध्यः।

अव्याप्यवृत्तिः। दैशिकाऽव्याप्यवृत्तिः कालिकाऽव्याप्यवृत्तिरित्यर्थः। संयोगः। सर्वोपि संयोग इत्यर्थः। अव्याप्यवृत्तित्वं निर्वक्ति स्वात्यन्ताभावेति। स्वं संयोगः तदत्यन्ताभावसमानाधिकरणत्वस्य संयोगे सत्वात्समन्वयः। इदमुपलक्षणम्। अवच्छिन्नवृत्तिकत्वमव्याप्यवृत्तित्वम्। तत्र देशावच्छेद्यवृत्तिकत्वं दैशिकाऽव्याप्यवृत्तित्वम्, कालावच्छेद्यवृत्तिकत्वं कालिकाऽव्याप्यवृत्तित्वमित्यपि बोध्यम्। प्राचीनमते नित्यःसंयोगो नास्ति। विभुद्वयसंयोगाङ्गीकर्त्तृनवीनमते विभुद्वयसंयोगो नित्य इति विशेषः।

## संयोगनाशको गुणो विभागः। सर्वद्रव्यवृत्तिः।

न्या०—विभागं लक्षयति। संयोगनाशक इति। संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम्। विशेषणमात्रोपादाने क्रियायामतिव्याप्तिः। तस्या अपि संयोगनाशकत्वात् अतस्तद्वारणाय विशेष्यम्।

दी०—विभागं लक्षयति। संयोगेति कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय संयोगनाशक इति। विभागोऽपि

द्विविधः । कर्मजो विभागजश्चेति । आद्यो हस्तपुस्तविभागः, द्वितीयो हस्तपुस्तकविभागात् कायपुस्तकविभागः ।

गं०—विभागं लक्षयतीति । विभागविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इत्यर्थः । प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनः कारणतया संयोगेऽतिव्याप्तिः तस्यापि प्रतियोगितया संयोगनाशजनकत्वात्, गुणत्वाच्च, अतः संयोगनाशनिष्ठजन्यतायां प्रतियोगित्वसम्बन्धानवच्छिन्नत्वं निवेशनीयम् । वस्तुतस्तु स्वरूपसम्बन्धावच्छिन्नसंयोगध्वंसत्वावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतावत्त्वे सति गुणत्वं विभागस्य लक्षणम् । कार्यतायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशात् संयोगे नातिव्याप्तिः । कारणतायां समवायसम्बन्धावच्छिन्नत्वनिवेशात् काले नातिव्याप्तिः । तस्य कालिकेन कार्यमात्रं प्रति तादात्म्येन कारणत्वात् । वस्तुतो विभक्तप्रत्ययासाधारणकारणत्वम् विभागस्य लक्षणम् इति ।

विभागं विभजते । विभागोऽपीति । संयोगसमुच्चायकोऽपि शब्दो दृष्टान्तार्थः । यथा संयोगो द्विविधः, तथा विभाग इति भावः । विभागद्वयमुदाहरति । आद्य इति । कर्मज इत्यर्थः । अयमपि द्विविधः, एकक्रियाजन्यः, उभयक्रियाजन्यश्च । तत्राऽद्यस्योदाहरणम्, हस्तपुस्तकविभाग इति । हस्तक्रियया इत्यादिः । उभयक्रियाजन्यश्च, मेषद्वयविभागादिकं बोध्यम् । विभागजविभागमुदाहरति । द्वितीय इति । विभागजविभागोऽपि द्विविधः । कारणमात्रविभागजन्यः, कारणाकारणविभागजन्यश्च । तत्र कारणमात्रविभागात् कारणाकारणविभागः । यथा कपालद्वयविभागात् कपालाकाशविभागः ।

तत्प्रकारश्च यत्र आदौ कपाले कर्म । ततः कपालद्वयविभागः । ततो घटारम्भकसंयोगनाशः । ततोऽसमवायिकारणनाशाद् घटनाशः । ततः कपालविभागेन सक्रियस्य कपालस्य आकाशविभागो जन्यते । तत आकाश-

संयोगनाशः। तत उत्तरदेशसंयोगः। ततः कर्मनाश इति। न च
कपालकर्मणा कपालद्वयविभागो जन्यते तेनैव कपालाऽऽकाशविभागः
न जन्यत इति वाच्यम्। एकं कर्म आरम्भकसंयोगप्रतिद्वन्द्विविभागं, अ
रम्भकसंयोगप्रतिद्वन्द्विविभागं च न जनयतीति नियमात्। आरम्भकसं
कपालद्वयसंयोगः। तद्विरोधी कपालद्वयविभागः। अनारम्भकसंयोगः क
काशसंयोगः। तत्प्रतिद्वन्द्वी कपालाकाशविभागः उभयजनकत्वमेकस्य
णोऽस्वीकारात्। एकस्यैव कर्मण उभयजनकत्वे विकसत्कमलकुड्मल
प्रसङ्गात्। तथाहि-विकासश्च अग्रावच्छेदेनाऽनारम्भकसंयोगप्रतिद्व
भागः तज्जनककर्मणः सत्त्वात् तेन कर्मणा मूलाऽवच्छेदेनाऽऽरम्भकसं
प्रतिद्वन्द्विविभागोत्पत्त्या आरम्भकसंयोगनाशात् कमलनाशापत्तिः। न
कपालद्वयविभागेन आरम्भकसंयोगनाशक्षण एव कपालाऽऽकाशवि
कथं न जन्यत इति वाच्यम्। घटनाशात् पूर्वं घटस्यैव प्रतिबन्धक
तदसंभवादिति।

कारणाकारणविभागात् कार्याकार्यविभागः। तदुदाहरणमाह—ह
पुस्तकविभागादिति। यत्र हस्तक्रियया हस्तपुस्तकविभागस्तत्र श
ऽपि विभक्तप्रत्ययो भवति। तत्र शरीरपुस्तकविभागे हस्तक्रिया न का
भिन्ननिष्ठत्वात्। शरीरनिष्ठोविभागः हस्तनिष्ठं च कर्मेति, शरीरे क्रि
नास्त्येव, क्रियाया व्याप्यवृत्तित्वनियमात्। अतो हस्तपुस्तकविभागः श
पुस्तकविभागं जनयतीति सिद्धम्। नचोक्तप्रतीतौ शरीरपुस्तकध्वंस एव वि
न तु विभाग इति वाच्यम्। शरीरपुस्तकध्वंसजनकतया विभागसि
तथाहि शरीरपुस्तकध्वंसे हस्तक्रिया न कारणम् व्यधिकरणत्वात्। ए
विभागो न गुणान्तरम्। संयोगाभावेनैव विभक्तप्रत्ययोपपत्तेरित्यपि परा
उक्तप्रत्ययस्य संयोगप्रागभावविषयकत्वम्, संयोगात्यन्ताभावविषयकत्व
संयोगध्वंसविषयकत्वम्, संयोगान्योन्याभावविषयकत्वं, वा। ना
घटपटसंयोगोत्पत्तेः पूर्वमेव घटादौ विभक्तप्रत्ययापत्तेः। न द्वितीयः। 
रसयोः अवयवावयविनोश्च विभक्तप्रत्ययापत्तेः। न तृतीयः। विभज्य

त्तेऽपि तत्प्रतीत्यापत्तेः। संयोगध्वंससत्वात्। न चतुर्थः। तद्भिन्नमात्रे तत्प्रतीत्यापत्तेरिति।

**परापरव्यवहाराऽसाधारणकारणे परत्वाऽपरत्वे। पृथिव्यादिचतुष्टयमन्तोवृत्तिनी। ते द्विविधे। दिक्कृते कालकृते च दूरस्थे दिक्कृतंपरत्वम्। समीपस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम् कनिष्ठे कालकृतमपरत्वम्।**

दी०—परत्वापरत्वयोर्लक्षणमाह। परापरेति। परव्यवहारकारणं परत्वम्। अपरव्यवहारकारणमपरत्वम् इत्यर्थः। ते विभजते। द्विविधे इति। दिक्कृतयोरुदाहरणमाह दूरस्थे इति। कालकृते उदाहरति। ज्येष्ठे इति।

गं०—परापरव्यवहाराऽसाधारणकारणे परत्वापरत्वे इति यथा श्रुतमूलात्प्रतीयमानपराव्यवहारोभयनिरूपिताऽसाधारणकारणस्वरूपलक्षणस्यपरत्वादावसंभवग्रस्तत्वादेकैकव्यवहारघटितलक्षणद्वयपरतया मूलं व्याचष्टे। परव्यवहारेति। परव्यवहारकारणत्वं परत्वस्य लक्षणमित्यर्थः। परव्यवहारे व्यवहर्त्तव्यतावच्छेदकं परत्वमिति लक्षणसमन्वयः। परव्यवहारजनकतावच्छेदकप्रकारताश्रयत्वमिति यावत्। एवमपरत्वलक्षणमपि परिष्करणीयम्। ते परत्वापरत्वे। मूले। दिक्कृते। दैशिकपरत्वाऽपरत्वे। कालकृते। कालिकपरत्वाऽपरत्वे। अत्र परत्वनिष्ठ दैशिकत्वं च बहुतरमूर्त्तसंयोगान्तरितत्वज्ञानजन्यत्वम्। एवं परत्वनिष्ठं कालिकत्वं च बहुतरतपनपरिस्पन्दान्तरितत्वज्ञानजन्यत्वम्। एवमपरत्वनिष्ठं दैशिकत्वंच अल्पतरमूर्त्तसंयोगान्तरितत्वज्ञानजन्यत्वम्। एवमपरत्वनिष्ठं कालिकत्वं च अल्पतरतपनपरिस्पन्दान्तरितत्वज्ञानजन्यत्वम्। दैशिकपरत्वापरत्वे उदाहरति। दूरस्थे इति। दूरस्थनिष्ठं दैशिकपरत्वमित्यर्थः। अत्रावधित्वार्थं पञ्चम्यन्तापेक्षा। यथा पाटलिपुत्रात्काशी-

मपेक्ष्य प्रयागः परः इत्यत्र पंचम्यर्थोऽवधितानिरूपकत्वम्, तस्य परे न्वयः। काशीमपेक्ष्येति काशीनिरूपितेत्यर्थः। एवं च पाटलिपुत्रनिष्ठ तानिरूपककाशीनिरूपितपरत्वाश्रयः प्रयागः इति बोधः। एवं पाटलि प्रयागमपेक्ष्य काशी अपरा इत्यत्रापि। कालिकपरत्वापरत्वे उदाहरति इति। ज्येष्ठनिष्ठं कालकृतं परत्वमित्यर्थः। चैत्रान्मैत्रः पर इत्यत्र चैत्रावधिकपरत्वं स्वीकार्यम्, तच्च चैत्रोत्पत्तिक्षणप्रभृति एतत्क्षण जायमानतपनपरिस्पन्दसमुदायाऽपेक्षया अधिकतपनपरिस्पन्दसमुदायत्व कनिष्ठे इति कनिष्ठनिष्ठं कालिकमपरत्वमित्यर्थः। तच्च मैत्राच्चैत्रोऽपर इ मैत्रावधिकचैत्रनिष्ठं कनिष्ठत्वं च मैत्रोत्पत्तिक्षणप्रभृति एतत्क्षणपर्यन्तं मानतपनपरिस्पन्दसमुदायाऽपेक्षया न्यूनतपनपरिस्पन्दसमुदायत्वम्। दैशिकपरत्वाऽपरत्वयोः तदाश्रयः समवायिकारणम्, दिक्पिण्डसंयो समवायिकारणम्। अपेक्षाबुद्धिर्निमित्तकारणम्। कालिकपरत्वापर तदाश्रयः समवायिकारणम्। कालपिण्डसंयोगोऽसमवायिकारणम्। अ बुद्धिर्निमित्तकारणम्। अपेक्षाबुद्धिजन्यत्वेन सर्वेषामनित्यत्वम्।

**आद्यपतनाऽसमवायिकारणं गुरुत्वम्। पृथि जलवृत्ति।**

न्या०—गुरुत्वं लक्षयति—आद्येति। द्वितीयपतनक्रि वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिवारणायाद्येति, उत्तरत्र न्दने आद्यत्वविशेषणमपि पूर्ववदेव योजनीयम्।

दी०—गुरुत्वं लक्षयति—आद्येति। द्वितीयादिपतनस्य वे समवायिकारणत्वाद् वेगेऽतिव्याप्तिवारणाय आद्येति।

बा०—गुरुत्वं लक्षयतीति। गुरुत्वविशेष्यकलक्षणस्वरूपप्रा प्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान्मूलकार इति बोधः। यःपतनं तस्याऽसमवायिकारणं गुरुत्वमिति मूलार्थः। तत्र। वेगे। ए

नाम वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः। तत्र प्राथमिकव्यापारे गुरुत्वमसमवायिकारणम्, द्वितीयादिपतने वेगोऽसमवायिकारणम्, तथाच द्वितीयपतनाऽसमवायिकारणत्वाद् वेगेऽतिव्याप्ति वारणायाऽऽद्येति[1] विशेषणमिति भावः। पृथिवीजलवृत्तीति। गुरुत्वमित्यनुवर्त्तते। गुरुत्वमतीन्द्रियम्, पतनकार्यानुमेयम्, अनुमित्याकारस्तु आद्यपतनं साऽसमवायिकारणं क्रियात्वात् संयोगाऽसमवायिकारणक्रियावदिति। नित्यवृत्ति नित्यम्। अनित्यवृत्त्यनित्यम्। आश्रयः, फलादिः, समवायिकारणम्। अवयवसमवेतगुरुत्वं अवयविसमवेतगुरुत्वस्याऽसमवायिकारणम्। आश्रयनाशान्नश्यतीति। उत्तरत्र। घटकत्वं त्रलर्थः। द्रवत्वलक्षणघटकस्यन्दने इत्यर्थः। एवमेव। वेगेऽतिव्याप्तिवारणायैवेति यावत्। (वेगाऽसमवायिकारणत्वात्) वेगाऽसमवायिकारणकत्वादित्यर्थः।

आद्यस्यन्दनासमवायिकारणं द्रवत्वम्। पृथिवीजलतेजोवृत्ति। तद् द्विविधम् सांसिद्धिकं, नैमित्तिकं चेति। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ॥

दी०—द्रवत्वं लक्षयति आद्येति। स्यन्दनं प्रस्रवणम्। तेजःसंयोगजं नैमत्तिकम्। तद्भिन्नं सांसिद्धिकम्। पृथिव्यां नैमित्तिकमुदाहरति। घृतादाविति। तेजसि तदाह—सुवर्णादाविति।

गं०—द्रवत्वविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान्मूलकार इति बोधः। आद्यं यत्स्यन्दनं तस्याऽसमवायिकारणमित्यर्थः। स्यन्दनं प्रस्रवणमिति। तच्च सन्निकृष्टे द्रव्यसंयोगानु-

---

१ आद्यत्वं च स्वसमानाधिकरणपतनप्रतियोगिकध्वंसाऽसमानकालीनत्वम्॥

कूलो व्यापारः पृथिवीजलतेजोवृत्तीति । द्रवत्वमित्यनुषज्यते । अग्न्यादितेजः संयोगो निमित्तं तज्जन्यं नैमित्तिकम् । तद्भिन्नं—अग्न्यादितेजः संयोगाऽजन्यमित्यर्थः, जले इति । जले एवेत्यर्थः । सांसिद्धिकद्रवत्वस्य नित्यतादि गुरुत्ववत् । नैमित्तिकं पृथिवीतेजसोरिति । पृथिवीतेजोवृत्तीत्यर्थः । यथा सांसिद्धिकद्रवत्वं यावज्जलवृत्ति न तथा नैमित्तिकद्रवत्वं पृथिवीतेजोवृत्ति पटादौ वन्ह्यादौचाऽभावात्, अतः पृथिवीतेजोविशेषवृत्तित्वमाह पृथिव्यां घृतादाविति । घृतादिरूपपृथिव्यामित्यर्थः । आदिना जत्वादिपरिग्रहः । वृत्तित्वं सप्तम्यर्थः अन्वयश्चाऽस्य द्रवत्वे । अग्निसंयोगजं द्रवत्वमिति नैमित्तिकद्रवत्वमित्यर्थः । तेजसि सुवर्णादाविति । सुवर्णादिरूपतेजसीत्यर्थः । आदिना रजतपरिग्रहः । सप्तम्यर्थोवृत्तित्वम्, तस्याऽग्निसंयोगजं द्रवत्वमित्यनुषङ्गेणान्वयः । सर्वं नैमित्तिकं द्रवत्वमनित्यम् । तेजः संयोगोऽसमवायिकारणम् । तेजःसंयोगनाशाच्च नश्यति । अन्यत्पूर्ववद् ।

## चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः

न्या०—स्नेहं लक्षयति—चूर्णादीति । चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणः संयोगः । तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वं नतु जलादिगतद्रवत्वस्य, तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः, अतः स्नेह एवासाधारणं कारणम् । विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय विशेष्योपादानम् । वस्तुतस्तु द्रुतजलसंयोगस्यैव चूर्णादिपिण्डीभावहेतुत्वं स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् । जले द्रुतत्वविशेषणात् करकादिव्यावृत्तिः ।

दी०—स्नेहं लक्षयति—चूर्णेति—कालादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय पिण्डीभावेति ।

शं०—स्नेहविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः, स्नेहं लक्षयतीत्यस्य। मूले। चूर्णादीति। आदिना सक्त्वादिपरिग्रहः। चूर्णादीनां यः पिण्डीभावः अवयवानां विलक्षणदृढसंयोगः देशान्तरनिर्गमनप्रतिबन्धकः तस्य हेतुरित्यर्थः। जलसंयोगे चूर्णादीनां पिण्डीभावो जायते, तं प्रति जलनिष्ठस्नेहः कारणमिति लक्षणसमन्वयः। तथा च समवायसंबन्धावच्छिन्नपिण्डीभावनिष्ठकार्यतानिरूपितस्वसमवायिसंयोगसंबन्धावच्छिन्नकारणत्वं स्नेहस्य लक्षणम्। तादृशकारणतावच्छेदकतया सिद्धस्नेहत्वजातिमत्त्वं वा लक्षणम्। मूले जलमात्रवृत्तिरिति। जलभिन्ने स्नेहव्यवस्थापकप्रमाणाऽभावादिति भावः। अथ घृततैलादावपि स्नेहाङ्गीकार आवश्यकः अन्यथा तैलसंयुक्तचूर्णादौ पिण्डीभावानुपपत्तेः। तथा च कथं स्नेहस्य जलमात्रवृत्तित्वमिति चेन्न। तैलान्तर्वर्त्तिजलस्नेहादेव तत्रपिण्डीभावोपपत्तेः। कालिन्दीजलश्यामादिवत् तैले औपाधिकःस्नेहप्रत्ययोपपत्तिः। नच तैलादौ जलसत्त्वे ततो दहनानुपपत्तिः, जलस्य दहनप्रतिकूलत्वादिति वाच्यम्। तैलान्तर्वर्त्तिजलस्यैव दहनप्रतिकूलत्वात्। अपकृष्टस्नेहवज्जलस्यैव दहनप्रतिकूलत्वाद्वा। तैलादौ तु प्रकृष्टःस्नेह इति ध्येयम्।

न्यायबोधिन्यां द्रुतजलसंयोगस्यैवेति। एवकारेण स्नेहव्युदासः। अत्रेदं बोध्यम्। द्रुतजलसंयोगस्य सांसिद्धिकद्रवत्वस्य स्नेहस्य वा कारणत्वमित्यत्र विनिगमनाविरहात्, अतिरिक्तस्नेहसिद्धिः। स्नेहो नित्यवृत्तिर्नित्यः। अनित्यवृत्तिरनित्यः। अनित्यः कारणगुणपूर्वकः, आश्रयनाशनाश्यश्चेति बोध्यम्।

**श्रोत्रग्राह्यो गुणः शब्दः। आकाशमात्रवृत्तिः। स द्विविधः– ध्वन्यात्मको वर्णात्मकश्चेति। ध्वन्यात्मको भेर्यादौ। वर्णात्मकश्च संस्कृतभाषादिरूपः।**

न्या०—शब्दं लक्षयति–श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय श्रोत्रेति।

दी०—शब्दं लक्षयति–श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय श्रोत्रेति ।

गं०—शब्दं लक्षयतीति । शब्दविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः । मूले । श्रोत्रग्राह्य इति । श्रोत्रेण ग्राह्यः श्रोत्रग्राह्यः तृतीयार्थो जन्यत्वम् । ग्रह-धातोर्ज्ञानमर्थः । ण्यत्प्रत्ययस्य लौकिकविषयत्वमर्थः । तथा च श्रोत्रेन्द्रियजन्य-ज्ञानविषयत्वे सति गुणत्वं शब्दस्य लक्षणम् । श्रोत्रेन्द्रियजन्यं यज्ज्ञानं "कं शब्द इत्याकारकं ज्ञानं" तद्विषयत्वस्य शब्दे विद्यमानत्वाल्लक्षणसमन्वयः । शब्दत्वजातिमत्त्वं वा शब्दस्य लक्षणम् । तस्याऽऽश्रयमाह । आकाशमात्र-वृत्तिरिति । शब्दं विभजते । स द्विविध इति । ध्वनिपदशक्यतावच्छेदकतया सिद्धो जातिविशेषो ध्वनित्वम् । वर्णत्वं च ताल्वोष्ठपुटसंयोगजन्यतावच्छेदकतया सिद्धो जातिविशेषः । ध्वनिमुदाहरति । ध्वन्यात्मको भेर्यादाविति । आदिना मृदङ्गादिपरिग्रहः । अवच्छेद्यत्वं सप्तम्यर्थः । तथा च भेर्याद्यवच्छेद्यः शब्दो ध्वन्यात्मक इत्यर्थः । भेर्यादिः शब्देऽवच्छेदकः । शब्दस्तु भेर्याद्यवच्छेद्यः । एतेन वीथ्यां कोलाहलः । वने कोलाहलः इत्यादिप्रतीतेः अवच्छेद्यतासंबन्धेन वीथीवनादिविषयकत्वेनोपपत्तिः । वर्णमुदाहरति । वर्णात्मक इति । संस्कृतभाषादिरूप इति । आदिना अपभ्रंशभाषापरिग्रहः । ताल्वोष्ठपुटसंयोगजन्यशब्दः वर्णस्वरूप इति यावत् । नच ताल्वाद्यवच्छेद्यशब्दो वर्णस्वरूप इति कुतो नोक्त इति वाच्यम् । ध्वनिविशेषस्याऽपि ताल्वाद्यवच्छेद्यत्वात् ।

न्या०—स त्रिविधः—संयोगजो विभागजः शब्दजश्चेति । यथा भेरीदण्डसंयोगजो झाङ्कारादिशब्दः, हस्तादिसंयोगजन्यो मृदङ्गादिशब्दः । वंशे पाट्यमाने दलद्वयविभागजश्चटचटा-शब्दः । शब्दोत्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचितरङ्गन्यायेन

वा निमित्तपवनेन शब्दधारा जायन्ते, तत्रोत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम् ॥

दी०—शब्दस्त्रिविधः—संयोगजो विभागजः शब्दजश्चेति । तत्राऽऽद्यो भेरीदण्डसंयोगजन्यः । द्वितीयो वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः । भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तं द्वितीयादिशब्दाः शब्दजाः ।

गं०—सः ध्वन्यात्मकशब्दः । शब्दसामान्यपरत्वे वर्णस्य विभागजन्यत्वाभावादसंगत्यापत्तेः । संयोगजः संयोगनिष्ठाऽसमवायिकारणतानिरूपितध्वनिनिष्ठकार्यतावच्छेदकतया सिद्धजातिविशेषवान् इत्यर्थः । विभागजः विभागनिष्ठाऽसमवायिकारणतानिरूपितकार्यतावच्छेदकतया सिद्धजातिविशेषवानित्यर्थः । शब्दजः शब्दनिष्ठाऽसमवायिकारणतानिरूपितकार्यतावच्छेदकतया सिद्धजातिविशेषवानित्यर्थः । संयोगजध्वन्यात्मकं शब्दमुदाहरति । यथेति । भेरीदण्डसंयोगज इति । भेरीदण्डसंयोगनिमित्तकारणक इत्यर्थः । तस्य भेर्याकाशसंयोगोऽसमवायिकारणम् । उदाहरणान्तरमप्याह हस्तादिसंयोगजन्य इति । हस्तमृदङ्गसंयोगो निमित्तकारणम् । हस्ताऽऽकाशसंयोगोऽसमवायिकारणम् । विभागजध्वनिमुदाहरति । दलद्वयविभागज इति । वंशे पाट्यमाने इति । उत्पाट्यमाने सतीत्यर्थः । इदं च विशेषणं विभागजनकक्रियासंपत्यर्थम् । वंशक्रियाजन्यवंशदलद्वयविभागनिमित्तकारणक इत्यर्थः । तस्य दलद्वयाकाशविभागोऽसमवायिकारणम् । झांकारादिशब्द इति चटचटाशब्द इति च ध्वनिविशेषस्यानुकरणम् । शब्दोत्पत्तिदेशमारभ्येति एतत्तत्वमग्रे वक्ष्यते । दीपिकायां भेरीदंडसंयोगज इति । यः स इति शेषः । तस्य आद्य इति पूर्वेणाऽन्वयः । दलद्वयविभागजन्य इति । यः स इति शेषः । तस्य द्वितीय इति पूर्वेणाऽन्वयः । भेर्यादिदेशमारभ्येति । भेर्यादिदेशावच्छेदेन जायमानध्वनिमारभ्येत्यर्थः । आदिनामृदङ्गादिपरिग्रहः । श्रोत्रदेशपर्यन्तमिति । श्रोत्रदेशावच्छेदेन जायमान-

ध्वनिपर्यन्तमित्यर्थः । अन्त्यध्वनिपर्यन्तमिति यावत् । द्वितीयादिशब्दा इति आद्यध्वनिं विहाय द्वितीयध्वनिप्रभृति चरमध्वनिपर्यन्ताः ध्वन्यात्मकशब्दा इत्यर्थः । ये ते इति शेषः । शब्दजा इति । ध्वन्यात्मकशब्दाऽसमवायिकारणका इत्यर्थः । इदमुपलक्षणम् वर्णात्मकोऽपि द्विविधः, संयोगजो वर्णजश्च, आद्यः ताल्वोष्ठपुटसंयोगनिमित्तकारणकः । तस्य ताल्वाकाशसंयोगोऽसमवायिकारणम् । द्वितीयवर्णप्रभृतिअन्त्यवर्णपर्यन्तं सर्वे वर्णा वर्णाऽसमवायिकारणका इत्यपि बोध्यम् । सर्वोऽपि शब्दोऽनित्यः, अव्याप्यवृत्तिश्च । अन्त्यभिन्नः शब्दः स्वेतरकार्यशब्दनाश्यः, अन्त्यशब्दस्तु उपान्त्यशब्दनाश्य इति ध्येयम् ।

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा, स्मृतिरनुभवश्च । संस्कारमात्रजन्यं ज्ञानं स्मृतिः । तद्भिन्नं ज्ञानमनुभवः । स द्विविधः, यथार्थोऽयथार्थश्च ।**

न्या०—बुद्धेर्लक्षणमाह । सर्वव्यवहारेति । व्यवहारः शब्दप्रयोगः । ज्ञानं विना शब्दप्रयोगाऽसंभवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते । स्मृतिरनुभवश्चेति । स्मृतिं लक्षयति । संस्कारेति । बहिरिन्द्रियाजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् । संस्कारजन्यत्वविशेषणानुपादानेऽनुभवेऽतिव्याप्तिरतस्तद्वारणाय तदुपादानम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्यम् । ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्वात् । प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम् । अनुभवं लक्षयति । तद्भिन्नमिति । तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम् । तथाच स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम् । विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावति-

व्याप्तिरतस्तद्वारणाय विशेषणविशेष्ययोरुपादानम्। अनुभवं विभजते। स द्विविध इति।

दी०—बुद्धेर्लक्षणमाह। सर्वेति। कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय सर्वव्यवहार इति। जानामीत्यनुव्यवसायगम्यज्ञानत्वं लक्षणमित्यर्थः। बुद्धिं विभजते। सेति। स्मृतेर्लक्षणमाह। संस्कारेति। भावनाख्यः संस्कारः। संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति। घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय संस्कारजन्यमिति। प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रेति। अनुभवं लक्षयति। तद्भिन्नमिति। स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः। अनुभवं विभजते। स द्विविध इति।

गं०—सर्वे च ते व्यवहारास्तेषां हेतुः व्यवहारसामान्यहेतुरित्यर्थः। शब्दप्रयोग इति। बुबोधयिषापूर्वक इत्यादिः। ज्ञानं विना। वाक्यार्थज्ञानं विना शब्दप्रयोगाऽसंभवात्। अर्थं बुद्ध्वा शब्दरचनेति न्यायादिति भावः। तथा च तादृशव्यवहारजनकतावच्छेदकजातिमत्त्वमर्थः। तेन निर्विकल्पकादौ नाऽव्याप्तिः। बुबोधयिषापूर्वकवाक्यप्रयोगे वाक्यार्थज्ञानत्वेन कारणत्वात् कारणतावच्छेदकज्ञानत्वमादाय लक्षणसमन्वयः। बुद्धिरिति लक्ष्यनिर्देशः। लघुलक्षणमाह। ज्ञानमिति। ज्ञानत्वजातिमत्त्वं बुद्धेर्लक्षणमित्यर्थः। ज्ञानत्वजातिसिद्धिस्तु तादृशव्यवहारजनकतावच्छेदकतया ज्ञानपदशक्यतावच्छेदकतया वा बोध्या। ज्ञानपदस्य बुद्धिलक्षणपरत्वं स्वयमाह दीपिकायां। जानामीत्यादिना। घटमहं जानामीत्यनुव्यवसायसिद्धज्ञानत्वमित्यर्थः। विषयविनिर्मोकेण केवलज्ञानव्यवसायस्याऽलीकतया यथाश्रुताऽसंगतेः।

संस्कारमात्रेत्यस्य संस्कारेतराजन्यत्वमिति यथाश्रुतार्थपरत्वे असंभवः, स्मृतौ संस्कारेतराऽऽत्मादिजन्यत्वसत्त्वादत उक्तम्। वहिरिन्द्रियाऽजन्यत्वविशिष्टेति।

मूले । स द्विविध इति । सः अनुभवः । द्वैविध्यं दर्श
यथार्थोऽयथार्थश्चेति । प्रमासामान्यलक्षणन्तु भगवद्ज्ञानवृत्तिविर्षात
वत्वे सति अनुभवत्वम् । इदं च ज्ञानभेदेऽपि विषयिताया ऐक्यमिति मते
विषयिताभेदे तु अनुपदमेव वक्ष्यते । भ्रमसामान्यलक्षणन्तु ईश्वरज्ञानाज
विषयितावत्वमिति ध्येयम् ।

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः । सैव प्र
त्युच्यते ।**

न्या०—यथार्थानुभवं लक्षयति । तद्वतीति । तद्वतीत्यत्र स
म्यर्थो विशेष्यत्वम् । तच्छब्देन प्रकारीभूतो धर्मो ग्राह्यः । तथा
तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं यथार्थानुभव
लक्षणम् । उदाहरणम् । रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रका
रजते "इदं रजतम्" इति ज्ञानम् । तद्वन्निष्ठविशेष्यतानिरू
तन्निष्ठप्रकारताशाल्यनुभवत्वमिति निष्कर्षः । अन्यथा यथा
रङ्गरजतयोरिमे रजतरङ्गे इत्याकारकसमूहालम्बनेऽतिव्याप्ति
तत्रापि रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोः, रङ्गत्ववद्विशे
कत्वरङ्गत्वप्रकारकत्वयोश्च सत्वात् । उक्तनिष्कर्षे तु दर्शितभ्र
नातिव्याप्तिः । तज्ज्ञानस्य रङ्गांशे रजतत्वावगाहित्वेन रजतांशे
त्वावगाहित्वेन रजतत्वप्रकारतायाः रङ्गत्ववन्निष्ठविशेष्यतानिरूपित
ऽपि रङ्गत्वनिष्ठप्रकारतायाः रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वे
रजतत्वप्रकारतायाः रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावात्,
त्वप्रकारतायाः रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावाच्च ।

गं०—प्रमाविशेषलक्षणमाह । तद्वतीति । तदस्यास्तीति तद्वान् त
तथाचेति । यत्र पुरोवर्त्तिनि रजते इदं रजतम् इत्याकारकं ज्ञानं

स यथार्थानुभवः। तत्र लक्षणसमन्वयोऽपि। तथाहि तादृशज्ञाने त्रयो विषयाः। विशेष्यः, प्रकारः, संसर्गश्च। तत्र "पुरोवर्त्ती" इदं पदार्थः रजतं विशेष्यः। रजतत्वं प्रकारः। समवायः संसर्गः। एवं च तज्ज्ञानं रजतविशेष्यकं रजतत्वप्रकारकं समवायसंसर्गकं च भवतीति। एवं च तच्छब्देन प्रकारीभूतरजतत्वग्रहणे तद्वत् रजतं तच्चाऽत्र ज्ञाने विशेष्यः, तत् रजतत्वम्, तच्चाऽत्र ज्ञाने प्रकारः। तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवरूपलक्षणस्य "इदं रजतम्" इत्याकारकानुभवे सत्त्वाल्लक्षण-समन्वयः। अयथार्थानुभवेऽतिव्याप्तिवारणाय सत्यन्तद्वयम्। स्मृतावति-व्याप्तिवारणायाऽनुभवत्वनिवेशः। अत एव ज्ञानत्वमपि नोक्तम्। नचेष्टा-पत्तिः। प्रमायाः पंचविधत्वेन तत्करणस्यानुभवस्य इन्द्रियादिवत् पंचम-प्रमाणत्वापत्तेः। तथा च प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति सूत्रविरोधः स्यादिति ध्येयम्। ननु रङ्गांशे रजतत्वप्रकारकं रजतांशे रङ्गत्व-प्रकारकं यत् 'रङ्गरजतयोः" इमे रजतरङ्गे इति समूहालम्बनभ्रमः, तत्राऽ-तिव्याप्तिरित्यत आह तद्वन्निष्ठविशेष्यतानिरूपितेति। अन्यथा उक्त-निष्कर्षाभावे। एवं च यत्र यः प्रकारः तन्निष्ठविशेष्यताप्रकारतयोर्निरूप्य-निरूपकभावः। अत्र रङ्गे रजतत्वं प्रकारः, तथा च रङ्गनिष्ठविशेष्यता रजतत्वनिष्ठप्रकारतयोर्निरूप्यनिरूपकभावः। एवं रजते रङ्गत्वं प्रकारः, तथा च रजतनिष्ठविशेष्यतारङ्गत्वनिष्ठप्रकारतयोर्निरूप्यनिरूपकभावः। एवं च रङ्गत्ववन्निष्ठविशेष्यतानिरूपितरङ्गत्वनिष्ठप्रकारताशालित्वविरहेण रज-तत्ववन्निष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताशालित्वविरहेण च नोक्त-भ्रमेऽतिव्याप्तिरित्याह उक्तनिष्कर्षे त्विति। नातिव्याप्तिरिति शेषः। केचित्तु ययोर्विषयतयोर्निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरवच्छेद्यावच्छे-दकभावः इति नियमः। तथा च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमिति पर्यवसितार्थे नोक्तभ्रमेऽतिव्याप्तिरिति प्राहुः।

दी०—यथार्थानुभवस्य लक्षणमाह। तद्वतीति। ननु घटे घटत्वमिति प्रमायामव्याप्तिः, घटत्वे घटाभावादिति चेन्न। यत्र

यत्सम्बन्धोऽस्ति तत्र तत्संबन्धानुभव इत्यर्थाद्, घटत्वे घटसम्बन्धोऽस्तीति नाव्याप्तिः । सैवेति । यथार्थानुभव एव शास्त्रे प्रमेत्युच्यते, इत्यर्थः ।

गं०—ननु तद्वतीत्यस्य तदधिकरणे इत्यर्थकतया "घटे घटत्वमिति" प्रमायामव्याप्तिः । तस्या घटत्वं आधेयतासम्बन्धेन घटवदित्यर्थकत्वे विशेष्यीभूतघटत्वे संयोगादिवृत्तिनियामकसंबन्धेन प्रकारीभूतघटवत्त्वाभावात्, आधेयतायाश्च वृत्तिनियामकत्वाभावादित्याशयेन शंकते । नन्विति । तद्वत् पदस्य तत्संबन्ध्यर्थकत्वमित्यभिप्रायेण समाधत्ते । यत्र यत्सम्बन्धोऽस्तीति । यो यत्संबन्धी भवतीत्यर्थः । तथा च तेन संबन्धेन तत्संबन्धिनिष्ठविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारताशाल्यनुभवत्वस्य लक्षणत्वस्वीकारादिति यावत् । सैवेति । यथार्थानुभव एवेत्यर्थः । प्रमेत्युच्यते इति । प्रमाशब्देन व्यवह्रियत इत्यर्थः ।

अत्रेदं बोध्यम् । प्रमात्वं द्विविधम् । आंशिकप्रमात्वम्, सर्वांशे प्रमात्वं च । तद्वति तत्प्रकारकत्वमिति तु आंशिकप्रमात्वम् । अनुगमस्तु विशेष्यताविशिष्टप्रकारताकत्वं ज्ञाने निवेश्यम् । वै० स्वनिरूपितत्व—स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावत्त्वोभयसम्बन्धेन । निरूपकतावत्ता च तत्सामानाधिकरण्य—स्वावच्छेदकसंबन्धावच्छिन्नत्व–स्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसंबन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेनेति ।

सर्वांशे प्रमात्वन्तु विशेष्यताविशिष्टप्रकारत्वाऽनिरूपकत्वं ज्ञाने निवेश्यम् । वै० स्वनिरूपितत्व-स्वाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वोभयसंबन्धेन । निरूपकतावत्ता चोक्तचतुष्टयसंबन्धेनेति । इदमेव भ्रमसामान्यभिन्नत्वमपीति ध्येयम् ।

**तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः । सैवाऽप्रमेत्युच्यते ।**

न्या०—अयथार्थानुभवं लक्षयति । तदभाववतीति । अत्रापि पूर्ववत् तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वं विवक्षणीयम् । अन्यथा यथाश्रुते रङ्गरजतयोरिमे रङ्गरजते इत्याकारकसमूहालंबनप्रमायामतिव्याप्तिः । तस्या रजतरङ्गोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्व-रजतत्वाभावप्रकारकत्वयोः रङ्गत्वाभाववद्रजतविशेष्यकत्व-रङ्गत्वप्रकारकत्वयोश्च सत्त्वात् । उक्तनिष्कर्षे तु न तत्राऽतिव्याप्तिः । प्रमायाः रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारतायाः रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावात्, रङ्गत्वप्रकारतायाः रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपितत्वाभावाच्च । उदाहरणम् । रजतत्वाभाववद्विशेष्यकत्वे सति रजतत्वप्रकारकं "शुक्तौ इदं रजतम्" इति ज्ञानम् ।

दी०—अयथार्थाऽनुभवं लक्षयति । तदभाववतीति । नन्विदं संयोगीति प्रमायामतिव्याप्तिरिति चेन्न । यदवच्छेदेन यत्संबन्धाभावः तदवच्छेदेन तत्संबन्धज्ञानस्य विवक्षितत्वात् । संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्संयोगावच्छेदेन संयोगसंबन्धस्य सत्त्वान्नाऽतिव्याप्तिः ।

गं०—अयथार्थाऽनुभवं लक्षयतीति । अयथार्थाऽनुभवविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमानिति बोधः । मूले । तदभाववतीति । अत्रापि तच्छब्देन प्रकारीभूतो धर्मो धर्त्तव्यः । तस्याऽभावस्तदभावः सोऽस्यास्तीति तदभाववान् तस्मिन् । सप्तम्यर्थो विशेष्यत्वम्, तत्र प्रकृत्यर्थस्य "तदभाववतो" निष्ठत्वसंबन्धेनाऽन्वयः । तस्य च निरूपकत्वसंबन्धेन ज्ञानेऽन्वयः । तथा च तदभाववन्निष्ठविशेष्यतानिरूपकत्वे सति तत्प्रकारकत्वं लक्षणम् । यत्र पुरोवर्त्तिनि शुक्तौ "इदं रजतम्" इत्याकारकं

ज्ञानं जातं सोऽयथार्थानुभवः । स एव लक्ष्यः । एवं चाऽत्र तच्छदेन प्रकारी-भूतरजतत्वं ग्राह्यम् । तदभाववती शुक्तिः । सा चाऽत्रज्ञाने विशेष्या । तत्-रजतत्वमं, तच्चात्र ज्ञाने प्रकार इति तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वरूपलक्षणस्य शुक्तिविशेष्यकरजतत्वप्रकारके "इदं रजतम्" इत्याकारकाऽयथार्थानुभवे सत्त्वाल्लक्षणसमन्वयः । **अत्रापि ।** अयथार्थाऽनु-भवलक्षणेपि । **पूर्ववदिति ।** यथार्थाऽनुभवलक्षणवदित्यर्थः । **विवक्षणीय-मिति ।** तथा च सप्तम्यर्थविशेष्यतायाः न निरूपकत्वसंबन्धेन ज्ञानेऽन्वयः, किन्तु निरूपितत्वसंबन्धेन प्रकारतायामन्वयः "तत्प्रकारक इत्यस्य तन्निष्ठप्र-कारतानिरूपितप्रकारितावानित्यर्थात्" इति भावः । अथवा सप्तम्यर्थो विशे-ष्यकत्वं "विशेष्यित्वम्" तत्र निरूपितत्वसंबन्धेन प्रकृत्यर्थस्याऽन्वयः। तस्याः-वच्छिन्नत्वसंबन्धेनप्रकारकत्वे "प्रकारितायां" अन्वयः । तथाच तदभाववद्विशे-ष्यकत्वावच्छिन्नतत्प्रकारकत्वानुभवत्वं तदर्थः । विवक्षायाः फलमाह । **अन्यथे-ति।** अविवक्षितत्वे इत्यर्थः। **रजतत्वावगाहित्वेन ।** रजतत्वप्रकारकत्वेन। शेषं स्पष्टार्थम् । भ्रमविशेषलक्षणस्य प्रमाविशेषेऽतिव्याप्तिमाशंक्य निरा-करोति । दीपिकायां **नन्विति । इदं संयोगीति प्रमायामिति ।** वृक्षः कपिसंयोगीति प्रमायां, अग्रावच्छिन्नो वृक्षः कपिसंयोगीति प्रमायां चेत्यर्थः। **अतिव्याप्तिरिति ।** वृक्षादेरपि कपिसंयोगाभाववत्वादित्यर्थः । **यदवच्छे-देन यत्संबन्धाभाव इति ।** यत्संबन्धावच्छिन्नयन्निष्ठप्रतियोगिताकाभावा-वच्छेदकोयः इत्यर्थः । यथाश्रुते कपिसंयोगस्य समवायेनाऽव्याप्यवृत्तित्वेऽपि समवायस्य व्याप्यवृत्तितया तदभावस्याऽपि व्याप्यवृत्तित्वेनाऽवच्छेदकाऽप्र-सिद्धयाऽसंगत्यापत्तेः । **तदवच्छेदेन तत्संबन्धज्ञानस्येति ।** तदवच्छिन्न-विशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारताशालिज्ञानस्येत्यर्थः। तत्सं-बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावावच्छेदकावच्छिन्नविशेष्यतानिरूपितत-त्संबन्धावच्छिन्नतन्निष्ठप्रकारताशालिज्ञानस्येति समुदितार्थः । तथा च वृक्षः कपिसंयोगीति प्रमीयविशेष्यतायाः कपिसंयोगाभावावच्छेदकीभूतमूलावच्छि-न्नत्वाभावेन तादृशप्रमायां नातिव्याप्तिः । मूलावच्छिन्नो वृक्षः कपि-

संयोगीत्यादिभ्रमे लक्षणमुपपाद्य अग्रावच्छिन्नो वृक्षःकपिसंयोगीति प्रमायामतिव्याप्तिं वारयति। **संयोगाभावावच्छेदेनेति।** कपिसंयोगाभावावच्छेदकीभूतमूलावच्छिन्नविशेष्यतानिरूपितकपिसंयोगनिष्ठप्रकारताशालिज्ञानस्येत्यर्थः **भ्रमत्वादिति।** निरुक्तभ्रमलक्षणाऽऽक्रान्तत्वादित्यर्थः। नाव्याप्तिरिति शेषः। **संयोगावच्छेदेनेति।** संयोगावच्छेदकीभूताऽग्रावच्छेदेनेत्यर्थः। **संयोगसंबन्धस्य सत्वादिति।** कपिसंयोगसत्वादित्यर्थः। **नातिव्याप्तिरिति।** अग्रावच्छेदेन वृक्षः कपिसंयोगीति प्रमायामित्यादिः। अग्रादेः कपिसंयोगावच्छेदकत्वेन तदभावावच्छेदकत्वाभावान्न तादृशप्रमायामतिव्याप्तिरिति भावः।

अत्रापि ज्ञाने विशेष्यताविशिष्टप्रकारतानिरूपकत्वमेवाऽनुगतं भ्रमत्वम्। वै० उक्तोभयसंबन्धेन। द्वितीयसंबन्धघटक वै० उक्तचतुष्टयसंबन्धेनेति।

यच्च नित्यज्ञानाऽवृत्तिविषयितावत्वमेव तदिति पूर्वमुक्तम् तन्नसम्यक्। नित्यज्ञाने विशिष्टविषयित्वाऽनुपगमे समानाकारकविषयिताया ऐक्यानुपगमे वा अस्मदादिप्रमायामतिव्याप्तेरिति ध्येयम्।

**यथार्थानुभवश्चतुर्विधः। प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। तत्करणमपि चतुर्विधम्, प्रत्यक्षानुमानोपमानशब्दभेदात्।**

न्या०—यथार्थानुभवं विभजते चतुर्विध इति। तत्करणमिति। फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः। प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम्। एकैकप्रमाणलक्षणं तु वक्ष्यते, प्रत्यक्षज्ञानेत्यादिना॥

दी०—यथार्थानुभवं विभजते यथार्थेति। प्रसङ्गात् प्रमाकरणं विभजते तत्करणमिति। प्रमाकरणमित्यर्थः। प्रमायाः करणं प्रमाणमिति प्रमाणसामान्यलक्षणम्।

गं०—यथार्थाऽनुभवं विभजते इति। यथार्थाऽनुभवत्वावान्तरपरस्पराऽसंकीर्णधर्मप्रकारकयथार्थानुभवविशेष्यकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। प्रत्यक्षं प्रत्यक्षप्रमा अनुमितिः-अनुमितिप्रमा। उपमितिः उपमितिप्रमा शाब्दं-शाब्दप्रमा। तत्करणम्-यथार्थानुभवकरणम्। तथा च प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम्। अनुमितिप्रमाकरणमनुमानप्रमाणम्। उपमितिप्रमाकरणं उपमानप्रमाणम्। शाब्दप्रमाकरणं शब्दप्रमाणम्। दीपिकायां प्रसंगादिति। प्रसंगश्च स्मृतिविषयत्वे सति द्वेषाऽविषयत्वम्, तस्मादित्यर्थः। सामान्यधर्मज्ञानस्य विशेषधर्मजिज्ञासां प्रति कारणतया प्रमाणसामान्यलक्षणमाह। प्रमायाः करणमिति। प्रमानिष्ठकार्यतानिरूपितकरणमित्यर्थः।

## असाधारणं कारणं करणम्।

न्या०—करणलक्षणमाह—असाधारणमिति। व्यापारवदसाधारणं कारणं करणमित्यर्थः। असाधारणत्वञ्च कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। यथा दण्डादेर्घटादिकं प्रत्यसाधारणकारणत्वम्। कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः तदवच्छिन्नकार्यता घटे तन्निरूपितकारणता दण्डेऽतो घटं प्रति दण्डोऽसाधारणं कारणम्। भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम्। साधारणकारणत्वञ्च कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। यथेश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात् साधारणकारणत्वम्।

दी०—करणलक्षणमाह असाधारणेति। साधारणकारणे दिक्कालादावतिव्याप्तिवारणाय असाधारणेति।

गं०—करणलक्षणमाहेति। प्रसंगसंगत्येति शेषः। करणलक्षणमित्यत्र द्वितीयार्थो विषयित्वम्, तस्य ब्रूधात्वर्थैकदेशे ज्ञानेऽन्वयः। ब्रूधात्व

यंश्च ज्ञानानुकूलशब्दप्रयोगः। तथा च करणलक्षणविषयकज्ञानानुकूल-शब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। कार्यत्वातिरिक्तेति। कार्यत्वभिन्नेत्यर्थः। कार्यत्वव्याप्येति यावत्। तच्च न्यूनवृत्तित्वरूपम्। एवं च कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावत्त्वमसाधारणत्वम्। भ्रम्यादिरूपव्यापारवत्त्वाच्चेति तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः, एवं च भ्रम्यादेः दण्डजन्यत्वमस्ति दण्डजन्यघटजनकत्वमस्तीति भ्रम्यादेर्व्यापारत्वमुपपन्नम्। जनकतासंबन्धेन तद्वत्त्वस्यापि दण्डे सत्वादिति भावः। भ्रम्यादिरूपव्यापारेऽतिव्याप्तिवारणाय व्यापारवदिति कारणविशेषणम्। ईश्वराऽदृष्टादेरिति। आदिना ईश्वरीयज्ञानेच्छाकृतीनां प्रागभावकालदिशां षण्णां परिग्रहः।

## कार्यनियतपूर्ववृत्ति कारणम्।

न्या०—कारणं लक्षयति—कार्यनियतेति। कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वं कारणत्वम्। नियतत्वानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यात्, अतो नियतत्वे सतीति विशेषणम्। नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽनन्यथासिद्धत्वमपि कारणलक्षणे निवेशनीयम्, एवं च न तत्रातिव्याप्तिः, दण्डरूपादीनामन्यथासिद्धत्वात्।

दी०—कारणलक्षणमाह—कार्येति। 'पूर्ववृत्ति कारणम्' इत्युक्ते रासभादावतिव्याप्तिः स्यादतो नियतेति। तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः पूर्ववृत्तीति।

गं०—कारणं लक्षयतीति। कारणविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। कार्यं प्रति। कार्योत्पत्तिं प्रति। नियतत्वे सति। व्यापकत्वे सति। यथा घटं प्रति दण्डः कारणम्। तत्र हि कार्यो घटः तदुत्पत्तिं प्रति दण्डो व्यापकः

"यत्र यत्र घटोत्पत्तिः तत्र तत्र दण्ड इति व्याप्त्या दण्डस्य व्यापकत्वम्" कार्यपूर्ववर्त्ती च दण्ड इति कार्योत्पत्तिव्यापकत्वे सति पूर्ववृत्तित्वरूपलक्षणस्य दण्डे सत्वाल्लक्षणसमन्वयः । एवं च कार्याऽव्यवहितप्राक्क्षणावच्छेदेन कार्यतावच्छेदकसंबन्धेन कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्वं कारणत्वम् । यथा कार्यतावच्छेदकीभूतसमवायसंबन्धेन घटाधिकरणे कपाले स्वजन्यभ्रमिवत्तासंबन्धेन दण्डो नास्तीत्यभावो गृहीतुं नैव शक्यते किन्तु घटो नास्तीत्यभाव एव तत्प्रतियोगितावच्छेदकं घटत्वं अनवच्छेदकं दण्डत्वं तद्वत्वस्य दण्डे सत्वाल्लक्षणसंगतिः । "समवायेन घटं प्रति स्वजन्यभ्रमिवत्तासंबन्धेन दण्डः कारणमिति" । न च तादृशाभावाप्रतियोगित्वमित्येव सम्यक् किमनवच्छेदकत्वानुधावनेनेऽति वाच्यम् । अरण्यस्थदण्डादेः कारणत्वाऽनुपपत्तेः । तत्रापि कारणत्वमिष्यते तथाहि कारणत्वं द्विविधम् । फलोपधानरूपं स्वरूपयोग्यत्वरूपं च । आद्यं फलाव्यवहितपूर्ववर्त्तिनि दण्डादौ । तच्च फलविशिष्टत्वम् । वै० स्वाव्यवहितपूर्ववृत्तित्वसंबन्धेन द्वितीयं चाऽरण्यस्थदण्डादौ । तच्चाऽव्यवहितपूर्ववर्त्तितावच्छेदकधर्मवत्वमिति । **घटादिकारणत्वं स्यादिति** । तथा च रासभादावतिव्याप्तिरिति भावः । तस्य घटपूर्ववृत्तित्वादिति यावत् । **अतो नियतत्वे सतीति** । तथा च रासभादेर्घटव्यापकत्वविरहेण नातिव्याप्तिरिति भावः । **तावन्मात्रे कृते इति** । कार्यनियतत्वमात्रस्य लक्षणत्वे इत्यर्थः । **कार्ये घटे अतिव्याप्तिरिति** । स्वस्मिन् स्वव्यापकत्वसत्वात् । **पूर्ववृत्तीति** । तथा च स्वस्य स्वपूर्ववृत्तित्वाभावान्नातिव्याप्तिरिति भावः । **दण्डरूपादेरपीति** । अपिना दण्डसमुच्चयः । तथा च घटं प्रति यथा दण्डः कारणम् , तथा दण्डरूपमपि कारणं स्यात् , घटं प्रति नियतपूर्ववर्त्तित्वादिति भावः । नचाऽनियतरासभादेः अनन्यथासिद्धत्वविशेषणेनैव वारणात् नियतपदं व्यर्थमिति वाच्यम् । दण्डस्य दण्डत्वेन घटजनकत्वेऽपि द्रव्यत्वेनाऽन्यथासिद्धत्वम् "विशेषधर्मेण व्यभिचाराऽज्ञाने सामान्यधर्मेणाऽन्यथासिद्धत्वात् एवं च दण्डादौ अनन्यथासिद्धत्वाभावेन घटकारणत्वानुपपत्तिवारणाय अन्यथासिद्ध्यनिरूपकत्वं धर्मे

विशेषणीयम्, एतादृशार्थलाभायैव नियतपदोपादानादिति। वस्तुतस्तु अनन्यथासिद्धत्वं अन्यथासिद्धभेदकूटवत्त्वम्—तथाच भेदकूटनिवेशे गौरवम्, अतो, नियतपूर्ववर्त्तितावच्छेदकयद्धर्मावच्छिन्ने न कारणत्वव्यवहारः प्रमाणिकानां तत्तद्धर्मावच्छिन्नत्वम्, अन्यथासिद्धत्वम्। तद्भिन्नत्वमनन्यथासिद्धत्वम् एवं च भेदकूटलाघवार्थं भेदप्रतियोगितावच्छेदककोटौ नियतत्वोपादानमावश्यकमिति। कार्याभावप्रयोजकीभूताभावप्रतियोगित्वं कारणत्वमित्यपि केचित्।

दी०—ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेत्, न। अनन्यथासिद्धत्वे सतीति विशेषणात्। अनन्यथासिद्धत्वम् अन्यथासिद्धिविरहः। अन्यथासिद्धिस्त्रिविधा—येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्। यथा तन्तुना तन्तुरूपं, तन्तुत्वं च पटं प्रति।

गं०—अन्यथासिद्धिविभजने प्रसंगसंगतिमाह। अनन्यथासिद्धत्वमिति। अन्यथासिद्धिविरह इति। अन्यथासिद्ध्यभावकूटवत्त्वमित्यर्थः। अन्यथासिद्धिस्त्रिविधेति। प्रतियोगिभूतान्यथासिद्धिस्त्रिविधेत्यर्थः। प्रथमामन्यथासिद्धिमाह। येन सहैवेति। यदवच्छिन्नमित्यर्थः। यस्य यन्निष्ठमित्यर्थः। पूर्ववृत्तित्वमित्यनेनाऽन्वयः। यं प्रति। कार्यं प्रतीत्यर्थः तन्तुना तन्तुरूपमिति। पटं प्रति अन्यथासिद्धमित्युत्तरेणाऽन्वयः। तथा च पटं प्रति तन्तुरूपनिष्ठं पूर्ववृत्तित्वं तन्त्ववच्छिन्नमेव भवति इति पटं प्रति तन्तुरूपमन्यथासिद्धम्। तन्तुरूपस्य हि घटं प्रति तन्तुरूपत्वेनैवकारणत्वं वाच्यम्, नतु रूपत्वेन "रूपसत्त्वे घटसत्वम्, रूपाभावे पटाभाव इत्यन्वयव्यतिरेकाभावात्" एवं च पटात्मककार्यं प्रति तन्तुरूपस्य या पूर्ववृत्तिता सा तन्तुनैव गृह्यते इति पटं प्रति तन्तुरूपस्याऽन्यथासिद्धिः। "तथा च यस्य यत्कार्यं प्रति स्वातन्त्र्येणान्वयव्यतिरेकौ न गृह्येते किन्तु स्वकारणमादायैव तौ गृह्येते तत्कार्यं प्रति तदन्यथासिद्धम्। एवं पटात्मककार्यं

प्रति तन्तोःकारणत्वं तन्तुत्वेनैव "तन्तुत्वावच्छिन्नैव" तत्कार्यं प्रति स धर्मो- न्यथासिद्धः। अमुमर्थमेवाऽऽह तन्तुत्वं चेति। पटं प्रति अन्यथासिद्ध- मित्युत्तरेणान्वयः।

दी०—अन्यं प्रति पूर्ववृत्तित्वे ज्ञाते एव यस्य यं प्रति पूर्व- वृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्। यथा शब्दं प्रति पूर्व- वृत्तित्वं ज्ञाते एव पटं प्रति आकाशस्य।

शं०—द्वितीयाऽन्यथासिद्धिमाह। अन्यं प्रतीति। फलानुगुणमन्यं- प्रतीत्यर्थः। तेन स्वर्गं प्रति यागादेः घटं प्रति दण्डादेश्चाऽपूर्व-भ्रमि-पूर्व- वृत्तित्वग्रहोत्तरकालीनग्रहविषयत्वेऽपि नान्यथासिद्धिः। पूर्ववृत्तित्वे इति। प्रकृतकार्यातिरिक्तकार्यनिरूपितनियतपूर्ववृत्तित्वे इति। ज्ञाते एव। ज्ञान- विषये सत्येवेत्यर्थः। तादृशपूर्ववृत्तित्वज्ञानानन्तरमेवेति यावत्। यस्य यं प्रति पूर्ववृत्तित्वमिति। यन्निष्ठयन्निरूपितपूर्ववृत्तित्वमित्यर्थः। अवग- म्यते ज्ञानविषयतावदित्यर्थः। तादृशपूर्ववृत्तित्वज्ञानं भवतीति यावत्। तथाच प्रकृतकार्यातिरिक्तकार्यनिरूपितनियतपूर्ववृत्तित्वेन ज्ञायमाननिष्ठप्रकृत- कार्यनिरूपितनियतपूर्ववृत्तिताश्रयत्वं प्रकृतकार्यनिरूपिताऽन्यथासिद्धत्वमिति फलितम्। उदाहरति। यथेति। शब्दं प्रतीत्यादि। अयं भावः। आका- शस्य हि घटपूर्ववृत्तित्वमाकाशत्वेनैव स्यात् आकाशत्वं च शब्दसमवायिका- रणत्वम्, तथाच शब्दं प्रति पूर्ववृत्तित्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमित्याकाशमन्यथासिद्धमिति भावः। एवं कुलालपितुरपि अन्यथासि- द्धत्वं बोध्यम्, तस्य हि घटातिरिक्तकुलालं प्रति पूर्ववृत्तित्वं गृहीत्वैव घटा- दिकं प्रति कारणत्वं प्राप्तम्, इति तदन्यथासिद्धम्। कुलालपिताऽपि कुला- लपितृत्वेनैवाऽन्यथासिद्धः। कुलालत्वेन तु जनक एवेति ध्येयम्। नन्वेवमा- काशादेर्घटादिकं प्रतीव संयोगादिकं प्रत्यपि हेतुता विलीयेत। तत्रापि शब्दं प्रति पूर्ववृत्तित्वग्रहोत्तरमेव संयोगादिकं प्रति पूर्ववृत्तित्वग्रहादिति चेत्। यद्धर्मे यद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वग्रहोत्तरकालमेव यद्धर्मा-

वच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वग्रहः तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नं प्रति तेन रूपेण हेतुतायामन्यथासिद्धिरित्यर्थात्। आकाशस्याप्याकाशत्वेन रूपेण संयोगत्वावच्छिन्नं प्रति हेतुत्वेऽन्यथासिद्धेरिष्टत्वात्। द्रव्यत्वेन रूपेण संयोगत्वावच्छिन्नं प्रति पूर्ववृत्तित्वग्रहस्तु शब्दत्वावच्छिन्ननिरूपितपूर्ववृत्तित्वग्रहोत्तरकालीनत्वाभावे गगनादीनां द्रव्यत्वेन रूपेण संयोगहेतुत्वं निष्प्रत्यूहम्। अथ सिद्धस्य गगनादेरष्टद्रव्यातिरिक्तद्रव्यत्वेन हेतुत्वोक्तावन्यथासिद्ध्यभावः, नहि शब्दपूर्ववृत्तित्वग्रहोत्तरमेव तद्ग्रह इति नियमः। किंच शब्दप्रत्यक्षे श्रोत्रत्वेन हेतुता विलीयेत। तत्र शब्दपूर्ववृत्तित्वग्रहोत्तरमेव तद्ग्रहादिति चेत्। तत्र पंचमान्यथासिद्धेरेव संभवात्। शब्दप्रत्यक्षस्थले तु कर्णविवरावच्छिन्नाकाशत्वेन हेतुत्वान्नानुपपत्तिः। नचैवं कार्यमात्रे कालदिशोर्हेतुत्वानुपपत्तिः। तत्रापि कालिकादिपरत्वापरत्वपूर्ववृत्तित्वग्रह एव तद्ग्रहादिति वाच्यं। विनापि कालिकादिपरत्वापरत्वपूर्ववृत्तित्वग्रहमाधारत्वेन कार्यसामान्ये हेतुत्वावधारणादिति समासः। नच आकाशस्य घटं प्रत्यहेतुत्वमिव शब्दं प्रत्यपि हेतुत्वानुपपत्तिः। तत्रापि शब्दपूर्ववृत्तित्वग्रहाधीनत्वादिति वाच्यम्। शब्दं प्रति जनकत्वे कत्वत्वस्य जनकतावच्छेदकत्वात्। खवत्वादिकमादाय विनिगमनाविरहेतु विशेषपदार्थस्यैव तथात्वं बोध्यम्।

दी०—अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कार्यसंभवे तत्सहभूतमन्यथासिद्धम्। यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य। एवं चाऽनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम्।

गं०—तृतीयाऽन्यथासिद्धिमाह। अन्यत्रेति। प्रकृतकार्यभिन्ने इत्यर्थः। क्लृप्तेति। लघुधर्मावच्छिन्नेत्यर्थः। नियतपूर्ववर्त्तिन एवेति। नियतपूर्ववृत्तिताश्रयेणैवेत्यर्थः। कार्यसंभवे इति। प्रकृतकार्यस्याप्युत्पत्तिनिर्वाहे इत्यर्थः। तत्सहभूतमिति। तद्भिन्नमित्यर्थः। तथाच प्रकृतकार्यसजातीयकार्यभिन्नकार्यनिरूपितलघुधर्मावच्छिन्ननियतपूर्ववृत्तिताशून्यत्वं तत्कार्यसजातीयनिरूपिताऽन्यथासिद्धत्वमिति फलितम्। उदाहरति। यथेति।

विजातीयतेजःसंयोगाद् युगपद्रूपादिचतुष्टयोत्पत्तिस्थले इत्यर्थः। अपाकज-गन्धसजातीयगन्धं प्रतीत्यर्थः। **रूपप्रागभावस्येति** अन्यथासिद्धत्वमिति शेषः। अपाकजगन्धस्थले गन्धं प्रति गन्धप्रागभावस्य हेतुत्वावश्यकत्वात् पाकस्थलेऽपि तत्संभवे रूपप्रागभावोऽन्यथासिद्ध इति भावः, इदमुप-लक्षणम्। यत्र पाकात्कदाचिद्रूपान्तरोत्पत्तिर्न जाता किन्तु गन्धान्तरोत्पत्तिरेव, तत्र रूपप्रागभावविरहात् गन्धप्रागभावस्यैव क्लृप्तनियतपूर्ववृत्तिताकत्वात् तेनैव रूपपरावृत्तिस्थलेऽपि गन्धोत्पत्तिसंभवे रूपप्रागभावोऽन्यथासिद्ध इति भावः। **एवं चेति**। अन्यथासिद्धत्वस्य त्रैविध्ये चेत्यर्थः।

अत्रेदं बोध्यम्। लघुत्वं त्रिविधम्। उपस्थितिकृतम्। शरीरकृतम्। संबन्धकृतं च। आद्यं गन्धं प्रति रूपप्रागभावाऽपेक्षया गन्धप्रागभावे। अभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वेन गन्धात्मककार्योपस्थित्यनन्तरं गन्ध-प्रागभावस्यैव शीघ्रमुपस्थितिः, नतु रूपप्रागभावस्य, तदुपस्थितेः रूपज्ञान-सापेक्षत्वादित्युपस्थितिकृतं लाघवम्।

द्वितीयन्तु प्रत्यक्षं प्रति अनेकद्रव्यत्वापेक्षया महत्त्वस्य कारणत्वे। अनेकद्रव्यत्वं च—अणुभिन्नद्रव्यत्वम्। तथाचाऽणुभिन्नद्रव्यत्वत्वापेक्षया महत्त्व-त्वजातेः कारणतावच्छेदकत्वे शरीरकृतलाघवमित्यर्थः।

तृतीयन्तु घटं प्रति दण्डत्वाऽपेक्षया दण्डस्य कारणत्वे। दण्डत्वस्य स्वाश्रयजन्यभ्रमिवत्तासंबन्धेन कारणत्वं स्यात्, दण्डस्य तु स्वजन्यभ्रमि-वत्तासंबन्धेन कारणत्वमिति संबन्धकृतं लाघवमिति।

## कार्यं प्रागभावप्रतियोगि।

न्या०—कार्यं लक्षयति। **कार्यमिति**। प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्। कार्योत्पत्तितः पूर्वम् 'इह घटो भविष्यति' इति या प्रतीतिर्जायते तत्प्रतीतिविषयीभूतो योऽभावः स प्रागभावः। घटादिरूपं कार्य्यम्।

दी०—कार्यलक्षणमाह **कार्यमिति**।

शं०—कार्यविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। उत्पत्तेः पूर्वं विद्यमानोऽभावः प्रागभावः। तत्प्रतियोगि कार्यमित्यर्थः। यस्याऽभावः स प्रतियोगी। तथा चोत्पत्तेः पूर्वं यस्य घटादेरभावः स एव घटादिः प्रतियोगीत्यर्थः। जन्यस्यैव प्रागभावो विद्यते "घटो भविष्यतीतिप्रतीतेः" नतु नित्यस्य "परमाणुर्भविष्यतीत्यप्रतीतेः" अतः कार्यमेव प्रागभावप्रतियोगीत्यर्थः।

**कारणं त्रिविधम्। समवाय्यसमवायिनिमित्तभेदात्। यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्।**

न्या०—कारणं विभजते—कारणं त्रिविधमिति। समवायिकारणं लक्षयति—यत्समवेतमिति। यस्मिन् समवेतं सत् समवायेन सम्बद्धं सत् कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः। उदाहरणं—यथा तन्तव इति। येषु तन्तुषु समवायेन सम्बद्धं सत् पटात्मकं कार्यमुत्पद्यते तन्तवः समवायिकारणमित्यर्थः। सामान्यलक्षणन्तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति। समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेः तादात्म्यसम्बन्धेनैव सत्त्वात्, समवायसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकपालत्वाद्यवच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः। समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्। द्रव्ये तु द्रव्यावयवाः समवायिकारणम्, अतो गुणादावपि द्रव्यमेव समवायिकारणम् इत्याशयेनाह—पटश्च स्वगतरूपादेरिति। समवायिकारणमित्यनुषज्यते।

दी०—कारणं विभजते । कारणमिति । समवायिकारणल
णमाह—यत्समवेतमिति । यस्मिन् समवेतमित्यर्थः ॥

गं०—मूले कारणमिति भावप्रधानो निर्देशः कारणत्वमिति याव
मूले । यत्समवेतमिति । यस्मिन् समवेतं यत्समवेतम् । सम
वृत्ति । तथाच कार्यं यस्मिन् समवायसंबन्धेन विद्यते वर्तमानं सदुत्प
तत्समवायिकारणमित्यर्थः । संबद्धं सदिति । वर्तमानं सदित्यर्थः ।
यवावयविनोः समवायात् । तन्तव इति । पटस्येत्यादिः । सामान्यलक्ष
णन्त्विति । अत्रेदं बोध्यम् । येन संबन्धेन कार्यं कारणे तिष्ठति स संब
कार्यतावच्छेदकसंबन्धः । कार्यता च तत्संबन्धावच्छिन्ना भवति । कार्या
करणे कारणं येन संबन्धेन तिष्ठति स संबन्धः कारणतावच्छेदकसंबन्धः
कारणता च तत्संबन्धावच्छिन्ना भवति । तदेवाह समवायसबन्धाव
च्छिन्नकार्यतेत्यादि । पटश्च स्वगतरूपादेरितीति । रूपाद्यात्मकं का
पटे समवायसबन्धेन वर्त्तमानं सदेवोत्पद्यते "गुणगुणिनोः समवायात्
अतः स्वगतरूपादिकं प्रति पटः समवायिकारणम् । तथाच समवायसंबन्धा
वच्छिन्नरूपत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धा च्छिन्नकारणत्वस्य प
सत्वाल्लक्षणसमन्वय इति ध्येयम् ।

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणमसमवायिकारणम् । यथा तन्तुसंयोगः पटस्य । तन्तुरूपं पटगतरूपस्य ।**

न्या०—असमवायिकारणं लक्षयति—कार्येणेति । असमवा
यिकारणं द्विविधं । कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं त
इत्येकम्, कारणेन सहैकस्मिन्नर्थे समवेतं सत यत् कारणं तदपरम
समवायिकारणमित्यर्थः । अत्र कारणेनेत्यस्य स्वसमवायिकारणे
त्यर्थः । जन्यद्रव्यमात्रे अवयवसंयोगस्यैवासमवायिकारणत्वात् पटः

त्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वमिति दर्शयन् प्रथममुदाहरति—यथा तन्तुसंयोगः पटस्येति। यथा तन्तुसंयोगः पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवायसम्बन्धेन विद्यमानत्वे सति कारणत्वात् पटात्मककार्यं प्रति तन्तुसंयोगोऽसमवायिकारणमित्यर्थः। द्वितीयसमवायिकारणं कारणेन सहेत्यादिना पूर्वोक्तं तदुदाहरति—तन्तुरूपमिति। कारणेन सह पटरूपसमवायिकारणीभूतपटेन सह, एकस्मिन्नर्थे तन्तुरूपेऽर्थे समवेतत्वे सति कारणत्वात् तन्तुरूपं पटगतरूपस्यासमवायिकारणमित्यर्थः।

सामान्यलक्षणन्तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवाय—स्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्ना कारणता तदाश्रयत्वमसमवायिकारणत्वमिति। द्रव्यासमवायिकारणीभूतावयवसंयोगादौ तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता या समवायसम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठाकारणता कपालद्वयसंयोगे वर्तते। एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वेऽसमवायिकारणे भवतः। आद्यपतनक्रियां प्रति आद्यस्यन्दनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात्। अवयविगुणभूतघटपटरूपादौ त्ववयवगुणीभूतकपालतन्तुरूपादेः स्वपदग्राह्यकपालतन्तुरूपादिसमवायिकपालतन्त्वादिसमवेतत्वसम्बन्धेनैव कारणत्वात् तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयविगुणकपाल-तन्तुरूपादौ वर्तते।

दी०—असमवायिकारणलक्षणमाह— कार्येणेति। कार्येणेत्येतदुदाहरति—तन्तुसंयोग इति। कार्येण पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः।

कारणेन सहेत्येतदुदाहरति—तन्तुरूपमिति। कारणेन पटेन स
एकस्मिन् तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकार
मित्यर्थः।

गं०—इत्येकमिति। इदमेव कार्यैकार्थप्रत्यासत्तिरित्युच्यते। अप
मिति। इदमेव कारणैकार्थप्रत्यासत्तिरित्युच्यते। प्रथममिति। कार्ये
सह एकस्मिन्नर्थे समवेतत्वे सति कारणमित्यर्थः। अत्र पटात्मकं कार्यं तन्
समवेतम् "अवयवावयविनोः समवायात्" तन्तुसंयोगोऽपि तन्तुषु समवे
गुणगुणिनोः समवायात्। तथाचाऽत्र कारणतावच्छेदकसंबन्धः कार्यता
च्छेदकसंबन्धश्च समवाय एवेति कारणता कार्यता च समवायसंबन्
वच्छिन्नैवेति बोध्यम्। पूर्वोक्तमिति। कारणेन सहैकस्मिन्नर्थे समवेत
सति कारणमित्यर्थः। स्वसमवायिकारणेनेति। स्वकार्यसमवायिका
वेति यावत्। स्वं—कारणम् प्रकृते च तन्तुरूपं स्वकार्यं—पटरूपम्
तत्समवायिकारणं पटः स च समवायेन तन्तुषु वर्त्तते। तन्तुरूपं
तन्तौ वर्त्तते। एवंचाऽत्र कारणतावच्छेदकसंबन्धः स्वसमवायिसमवेतत्वम्
स्वं—तन्तुरूपं तत्समवायीतन्तुः तत्समवेतत्वं पटे इति स्वसमवायिसम
तत्वसंबन्धेन तन्तुरूपं पटे वर्त्तते पटरूपमपि समवायेन पटे वर्त्तते अ
कार्यतावच्छेदकसंबन्धः समवाय एवेति ध्येयम्। दीपिकायामपि। कार्ये
पटेनेत्यस्य स्वकार्यसमवायिकारणेन पटेनेत्यर्थो बोध्यः। स्वं—तन्तुरूपम्।
च स्वसमवायिकारणेनेति यथाश्रुत एवास्तु स्वं—कार्यं-प्रकृते पटरूपमि
वाच्यम् स्वपदस्य कार्यपरत्वे "यथाश्रुतमूलादपि" कार्यतावच्छेदकसम्ब
एव स्वसमवायिसमवायो भविष्यतीति समवाय-स्व समवायिसमवायान्य
तरसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वमिति
र्यवसितार्थे "सामान्यलक्षणन्तु" इत्याद्यग्रिमग्रन्थविरोधापत्तेः। ह
कारणतायामेवाऽन्यतरसम्बन्धावच्छिन्नत्वं निविष्टं नतु कार्यतायामि
ध्येयम्। तयोः। गुरुत्वद्रवत्वयोः।

अथैवं तुरीतन्तुसंयोगस्य पटाऽसमवायिकारणत्वापत्तिः।[१], समवायेन पटेन सह तुरीतन्तुसंयोगस्य समवायेन एकस्मिन् तन्तौ सत्वात्। ननु तुरीतन्तुसंयोगस्य पटात्मककार्येण सह तन्तौ समवेतत्वेऽपि कारणत्वरूपविशेष्यदलविरहान्न पटाऽसमवायिकारणत्वापत्तिः। नच समवायेन पटत्वावच्छिन्नं प्रति तुरीसंयोगस्य हेतुतया तेन रूपेण तुरीपटसंयोगस्याऽपि कारणतया तदापत्तिर्युक्तैवेति वाच्यम्। तुरीशून्यदशायां पटोत्पादवारणाय संयोगेन तुरीत्वेनैव हेतुत्वात् तुरीसंयोगत्वापेक्षया तुरीत्वस्य कारणतावच्छेदकत्वे लाघवात्[२]। तथाच विशेष्यदलविरहात्कथं तदाऽऽपत्तिः। नचैवं तुरीतन्तुसंयो-

१ न च तुरीतन्तुसंयोगस्य पटाऽसमवायिकारणत्वे इष्टापत्तिरिति वाच्यम्। कार्यद्रव्यनाशं प्रति असमवायिकारणनाशस्य कारणत्वेन तुरीतन्तुसंयोगनाशात्पटनाशापत्तेः। द्वयणुकनाशान्यथानुपपत्त्या, सत्स्वपि तन्तुषु तत्संयोगाऽपगमेन पटनाशाऽन्यथानुपपत्त्या च असमवायिकारणनाशस्यैव द्रव्यनाशप्रयोजकत्वं, नतु समवायिकारणनाशस्य। समवायिकारणं विनापि क्षणद्वयं द्रव्यस्थितौ बाधकाभावात्। असमवायिकारणनाशकार्यद्रव्यनाशयोः कार्यकारणभावस्तु प्रतियोगितासम्बन्धेन द्रव्यनाशं प्रति स्वप्रतियोगिसमवायियावत्समवेतत्व स्वप्रतियोगिजन्यत्व कालिक एतत्त्रितयसम्बन्धेन नाशः कारणमिति। दण्डादिनिमित्तकारणनाशाद् घटनाशापत्तिवारणाय आद्यः सम्बन्धः। कपालपवनसंयोगनाशाद् घटनाशापत्तिवारणाय द्वितीयः सम्बन्धः। भाविकपालद्वयसंयोगनाशाद् घटनाशापत्तिवारणाय तृतीयसम्बन्धः। यावत्पदनिवेशात्तुरीतन्तुसंयोगनाशात्पटनाशापत्तिवारणमिति ध्येयम्।

२ यत्तु संयोगेन तुरीत्वेन हेतुत्वे कारणतावच्छेदकसंबन्धत्वकल्पनायाः अनेकनिष्ठतया गौरवम्, अतो लाघवात्समवायेन तुरीतन्तुसंयोगत्वेन हेतुत्वम्, गुरुभूतेऽप्येकस्मिन् कारणतावच्छेदकत्वकल्पनातोऽनेकत्र कारणतावच्छेदकसंबन्धत्वकल्पनायाः गरीयस्त्वात्। अतस्तुरीतन्तुसंयोगे पटाऽसमवायिहेतुत्वापादनं युक्तमेवेति। तन्न। कारणतावच्छेदकग्रहस्य प्राथमिकतया प्रथमग्रहे लघुभूतधर्मे कारणतावच्छेदकत्वनिर्णये सति तदुत्तरकल्पनायाः फलमुखतया दोषकरत्वाभावादिति।

गादेरसमवायिकारणत्वाभावेऽपि तुर्यादेर्हेतुतया तत्रैवाऽसमवायिहेतुत्वापत्तिरिति वाच्यम् । "एकार्थसमवेतत्वे सति" इत्यस्य समवायसंबन्धावच्छिन्नवृत्तित्वपरतया तत्र दोषाभावात् । अन्यथा तन्त्वादीनां तादात्म्येन पटेन सह तन्तौ वर्त्तमानतया हेतुतया चाऽतिप्रसंगादिति चेद् । एवमपि वेगस्याऽभिघाताऽसमवायिकारणत्वापत्तिर्दुर्वारैव[1] "अभिघातत्वं च संयोगत्वव्याप्यो जातिविशेषः । तदवच्छिन्ने च क्रियाया एवाऽसमवायिकारणत्वम्, न तु वेगस्य । सामान्यतः संयोगत्वावच्छिन्नं प्रत्येव क्रियात्वेनाऽसमवायिकारणत्वात् वेगस्य तु निमित्तमात्रत्वेन विशेष्यदलस्यापि सत्त्वात् । यद्यपि वेगस्य न साक्षादभिघातजनकत्वम्, किन्तु स्पन्दजननद्वारा । तत्राऽपि वेगजन्यतावच्छेदकं न स्पन्दत्वम्, विनापि वेगं नोदनेन क्रियोत्पादात्, अपि तु वेगजन्यतावच्छेदकतया सिद्धा क्रियात्वव्याप्या जातिरेव स्वीकार्या । तथा च तादृशजात्यवच्छिन्नं प्रति वेगत्वेन हेतुत्वम्, तादृशविजातीयक्रियात्वेन अभिघातत्वावच्छिन्नं प्रति च हेतुत्वमभ्युपगम्यते इति वेगस्याऽभिघातहेतुतायां मानाभावः । तथापि अभिघातत्वावच्छिन्नं प्रति विजातीयक्रियात्वेन वेगत्वेन वा हेतुहेतुमद्भाव इत्यत्र विनिगमकाभावेन वेगहेतुताया अपि सिद्धेः ।

नच वेगादिनाशेऽपि क्रिययाऽभिघातजननसन्देहात्सन्दिग्धव्यभिचारेण वेगत्वेन हेतुत्वाभावो निर्व्यूढ एवेति कथं विनिगमनाविरह इति वाच्यम् । एवमपि ज्ञाने इच्छाऽसमवायिकारणत्वापत्तेर्दुर्वारत्वादिति चेन्न ।। सामान्यलक्षणे आत्मविशेषगुणान्यत्वस्य विशेषणीयत्वात् । तथा च समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्ना-

---

१ नच वेगस्याऽभिघाताऽसमवायिकारणत्वे इष्टापत्तिरेव किं नेष्यते असमवायिकारणनाशस्य द्रव्यनाशं प्रत्येव हेतुतया वेगनाशादभिघातनाशापत्तिरशक्यैवेति वाच्यम् । असमवायिकारणमन्तरा क्षणत्रयं कार्यस्थितेरनिष्टतयाऽभिघातनाशापत्तेरेवात्रेष्टापत्तौ बाधकत्वात् । एवमेव ज्ञाननाशादिच्छानाशापत्तिरपि बोध्या । तत्राऽऽत्मविशेषगुणानां कुत्राऽप्यसमवायिकारणत्वं नास्तीति सिद्धान्तभङ्गोऽपि बोध्यः ।

ऽऽत्मविशेषगुणाऽवृत्तिकारणतावत्त्वमसमवायिकारणत्वं पर्यवसन्नम्। एवं विशेषलक्षणाक्रान्तपटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम्। तच्च तन्तुभिन्नाऽसमवेतत्वम्, अन्यथा हस्ततन्तुसंयोगभिन्नत्व-वेमतन्तुसंयोगभिन्नत्वाद्यनन्तनिवेशे गौरवापत्तेः।

एवम् च समवायसम्बन्धावच्छिन्नपटत्वावच्छिन्नकार्यतानिरूपितनिरुक्तान्यतरसम्बन्धावच्छिन्नतन्तुभिन्नाऽसमवेतनिष्ठकारणताश्रयत्वं पटाऽसमवायिकारणत्वं पर्यवसितम्। वस्तुतस्तु पटसमवायिनिष्ठाभावप्रतियोगितानवच्छेदकतन्तुसंयोगत्ववत्त्वं पटाऽसमवायिकारणत्वम् विशेषलक्षणे तुरीतन्तुसंयोगभिन्नत्वनिवेशे अन्यथा सिद्धिनिरूपितकतानवच्छेदकत्वनिवेशे वा गौरवात्। अन्यथा सिद्ध्यनिरूपकतावच्छेदकत्वनिवेशस्तु सामान्यलक्षणे एवेति ध्येयम्।

## तदुभयभिन्नं कारणं निमित्तकारणम्। यथा तुरीवेमादिकं पटस्य।

न्या०—निमित्तकारणं लक्षयति— तदुभयेति। समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः।

दी०—निमित्तकारणं लक्षयति— तदुभयभिन्नमिति। समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणमित्यर्थः।

गं०—निमित्तकारणं लक्षयतीति। निमित्तकारणविशेष्यकलक्षणत्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। तदुभयभिन्नमिति यथाश्रुतमूलात् समवायिकारणाऽसमवायिकारणोभयभिन्नत्वमित्यर्थो लभ्यते, एवं चोभयभेदस्य केवलान्वयित्वेन पटसमवायिकारणे तन्तौ—पटाऽसमवायिकारणे तन्तुसंयोगे च सत्त्वात्तत्र तत्राऽतिव्याप्तिरत आह। समवायिकारणभिन्नत्वे सतीति। समवायि-

कारणेऽतिव्याप्तिवारणाय प्रथमसत्यन्तम् । असमवायिकारणेऽतिव्याप्तिवारणाय द्वितीयसत्यन्तम् । पारिमाण्डल्यादावतिव्याप्तिवारणाय[1] विशेष्यदलम् उदाहरति । मूले । यथेति । आदिना तुरीतन्तुसंयोगादेः परिग्रहः।

ननु घटनिमित्तकारणे दण्डादावव्याप्तिः, तस्य स्वगतरूपादिकं प्रति समवायिकारणत्वेन समवायिकारणभिन्नत्वविरहात्, एवं पटनिमित्तकारणे तुरीतन्तुसंयोगेऽपि तस्य तुरीपटसंयोगं प्रति असमवायिकारणत्वेन तद्भिन्नत्वविरहात् । नच तत्तत्कार्यसमवायिकारणभिन्नत्वे सति तत्तत्कार्याऽसमवायिकारणभिन्नत्वे सति तत्तत्कार्यकारणत्वमित्युक्तौ न दोष इति वाच्यम् । तथापि ध्वंसं प्रति निमित्तकारणे प्रतियोग्यादावव्याप्तेः, तस्य समवायिकारणाऽसमवायिकारणयोरप्रसिद्धेरिति चेन्न । समवायिकारणत्वभिन्नत्वे सति असमवायिकारणत्वभिन्नत्वे सति कारणत्वस्यैव निमित्तकारणत्वात्[2] । तथा च तन्तुसंयोगनिष्ठाकारणता निरूपकभेदेन भिन्नैवेति नोक्तदोषः । वस्तुतस्तु वस्तुविशिष्टत्वं निमित्तकारणत्वम् । वै० स्वकारणत्व–स्वाभाववत्त्वोभयसम्बन्धेन । स्वाभावश्च समवायिकरणत्व–असमवायिकारणत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकः । तेन नाऽननुगमो नाप्यप्रसिद्धिरिति ध्येयम् ।

यद्वा यद्धर्मावच्छिन्नकार्यतानिरूपितसमवायिकारणताशून्यत्वविशिष्टयद्धर्मावच्छिन्नकार्यतानिरूपिताऽसमवायिकारणताशून्यत्वसमानाधिकरणयद्धर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वं तद्धर्मावच्छिन्नं प्रति तस्य निमित्तत्वमित्यर्थः । अस्ति चेश्वरस्य जन्यत्वावच्छिन्नकार्यतानिरूपितसम-

---

१ पारिमाण्डल्यं परमाणुपरिमाणं द्व्यणुकपरिमाणं च । तत्तु न कस्यापि कारणमिति परिमाणनिरूपणाऽवसरे स्पष्टं व्याख्यातम् ।

२ एतेन ईश्वरघटसंयोगे ईश्वरस्य निमित्तकारणत्वाऽनुपपत्तिः, तस्य द्रव्यत्वेन संयोगसमवायिकारणतया समवायिकारणभिन्नत्वविरहात् । इष्टापत्तौ तु कार्यमात्रे ईश्वरस्य निमित्तत्वसिद्धान्तापलापापत्तिरिति पूर्वपक्षः समाहितः, कारणतायाः परस्परभेदात् ।

वायिकारणताशून्यत्वविशिष्टजन्यत्वावच्छिन्नकार्यतानिरूपिताऽसमवायिकार-णत्वशून्यत्वसमानाधिकरणजन्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्व-मिति । नचैवं जन्यत्वावच्छिन्नकार्यतानिरूपितसमवायिकारणताया अप्रसि-द्धतया तच्छून्यस्य च सुतरामप्रसिद्धत्वात्, एवमसमवायिकारणताशून्य-त्वमपीत्यव्याप्तिः । दण्डादौ तु घटनिष्ठघटत्वावच्छिन्नकार्यतानिरूपितसम-वायिकारणतायाः घटत्वावच्छिन्नकार्यतानिरूपिताऽसमवायिकारणतायाश्च कपालतत्संयोगादौ प्रसिद्धतया तच्छून्यत्वरूपनिमित्तत्वं सुलभमिति चेत् । अत्रोच्यते । यद्यद्धर्मावच्छिन्नकार्यतानिरूपितसमवायिकारणत्वं यद्यद्धर्माव-च्छिन्नकार्यतानिरूपिताऽसमवायिकारणत्वं प्रत्येकं तत्तन्निष्ठाभावप्रतियोगिताव-च्छेदकं यद्यद्धर्मावच्छिन्नकार्यतानिरूपितयद्यद्धर्मावच्छिन्नकारणत्वत्वं तद्धर्माश्रयं प्रति तद्धर्माश्रयस्य निमित्तत्वमित्यर्थात्, अस्ति च घटत्वावच्छिन्नकार्यतानिरू-पितसमवायिकारणत्ववन्निष्ठाभावप्रतियोगितावच्छेदकं, घटत्वावच्छिन्नकार्य-तानिरूपितदण्डत्वावच्छिन्नकारणत्वत्वमिति दण्डादौ निमित्तत्वम् । अस्ति चेश्वरस्येश्वरसंयोगे, तत्र संयोगत्वावच्छिन्नकार्यतानिरूपितसमवायिकारणत्व-वत्पटनिष्ठाभावप्रतियोगितावच्छेदकं जन्यत्वावच्छिन्नकार्यतानिरूपितेश्वरत्वाव-च्छिन्नकारणत्वत्वमिति तद्धर्माश्रयसंयोगं प्रति तद्धर्माश्रयस्येश्वरस्य निमित्तत्वं निर्व्यूढमिति मामकीनोऽयं नूतनः पन्थाः ।

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ।**

न्या०—करणलक्षणमुपसंहरति—तदेतदिति । यदसाधारण-मिति । व्यापारवत्त्वे सतीत्यपि पूरणीयम् । अन्यथा तन्तुकपालसं-योगयोरतिव्याप्तिः । तन्तुकपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्व-घटत्वावच्छिन्नं प्रति कारणत्वादसाधारणत्वमस्त्येवेत्यतस्तत्र करणत्व-वारणाय व्यापारवत्त्वे सतीति करणलक्षणे विशेषणं देयम् ।

व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम् । भवति हि दण्ड-जन्यत्वेसति दण्डजन्यघटजनकत्वाद् भ्रम्यादेर्दण्डव्यापारत्वम् । एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वं, कपालत-न्तुजन्यत्वे सति कपालतन्तुजन्यघटपटजनकत्वात् । करणलक्षणेऽ-साधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्कारणत्वस्य सत्वात्, अतस्तत्रातिव्याप्तिवारणायासाधारणेति विशेषणम् ।

दी०—करणलक्षणमुपसंहरति । तदेतदिति ।

गं०—मूले । तदेतदिति । तत्तल्लक्षणलक्षितं अनुपदं निरुक्तं त्रिविधं कारणत्वं तन्मध्ये इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्याऽसाधारणकारणत्वेऽन्वयः । तथा च निरुक्तकारणतात्रयघटकाऽसाधारणकारणत्वमेव करणत्वमित्यर्थः । अन्यथा । व्यापारवत्त्वे सतीति विशेषणानुपादाने । अतिव्याप्तिरिति । चक्षुःसंयोग-भ्रम्यादिरूपाऽसाधारणव्यापारमात्रेऽतिव्याप्तिरिति यावत् । असाधारणत्वमुपपादयति । तन्तुकपालसंयोगयोरपीति । तन्तुसंयोगस्य कार्यत्वव्याप्यपटत्वावच्छिन्नकार्यतानिरूपितकारणतावत्वात्, कपालसंयोगस्य च कार्यत्वव्याप्यघटत्वावच्छिन्नकार्यतानिरूपितकारणतावत्वादिति यावत् । तत्र । तन्तुसंयोगे कपालसंयोगे चेत्यर्थः ।

## तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ।

न्या०—षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह । तत्रेति । प्रमाभूतेषु प्रत्यक्षात्मकं यद् ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति व्यापारवदसाधारणकारणमिन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् । आद्यसन्निकर्षातिरिक्तचतुर्विधसन्निकर्षाणां समवायरूपत्वेन व्यापारत्वं न संभवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षजननीये इन्द्रियव्यापारता बोध्या । मानसप्रत्यक्षे तु आत्ममनःसंयोगस्यैव सा बोध्या ।

दी०—तत्रेति। प्रमाणचतुष्टयमध्ये इत्यर्थः।

गं०—मूले। प्रत्यक्षज्ञानकरणमिति। अत्र प्रत्यक्षशब्दस्य प्रमाणे प्रमितौ च प्रयोगाल्लक्षणवाक्यघटकप्रत्यक्षपदं प्रत्यक्षप्रमितिपरम्। नतु प्रमाणपरमिति स्फुटीकरणाय ज्ञानपदम्। नतु प्रत्यक्षज्ञानत्वेन लक्षणे प्रवेशः ज्ञानत्वांशस्य व्यर्थत्वात्। नच प्रत्यक्षपदस्य प्रमाणप्रमितिसाधारणत्वे का क्षतिरिति वाच्यम्। तथा सति चक्षुरादिनिरूपितकारणताश्रयेऽतिव्याप्तेरिति ध्येयम्। अनुमानादावतिव्याप्तिवारणाय प्रत्यक्षेति। विषयतासंबन्धेन प्रत्यक्षं प्रति संयोगसंयुक्तसमवायाद्यन्यतमसंबन्धेनेन्द्रियाणां कारणतया न कार्यकारणयोर्वैयधिकरण्यम्। एवं च विषयतासंबन्धावच्छिन्नप्रत्यक्षनिष्ठकार्यतानिरूपितसंयोगाद्यन्यतमसंबन्धावच्छिन्नकारणताश्रयत्वं प्रत्यक्षप्रमाणस्य लक्षणं बोध्यम्। व्यापारवदिति। व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम्, यथा संयोगे इन्द्रियजन्यत्वं इन्द्रियजन्यप्रत्यक्षजनकत्वमपीति लक्षणसमन्वयः। ननु समवायस्य नित्यत्वेन संयुक्तसमवायादीनां कथं व्यापारत्वम्, इत्यत आह। इन्द्रियमनःसंयोगस्यैवेति।

**ज्ञानाऽकरणकं ज्ञानं प्रत्यक्षम्। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद् द्विविधम्। निर्विकल्पकं सविकल्पकं चेति।**

न्या०—प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह। ज्ञानाकरणकमिति। द्योपकलक्षणमिदम्। ज्ञानं व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानं च कारणं येषां ते ज्ञानकरणकाः, अनुमित्युपमितिशाब्दाः। ज्ञानकरणकं न भवतीति ज्ञानाऽकरणकम्, तत्त्वं प्रत्यक्षलक्षणम्। इदं लक्षणमीश्वरप्रत्यक्षसाधारणम्। ईश्वरप्रत्यक्षस्याऽजन्यत्वात्, जन्यप्रत्यक्षे च इन्द्रियाणामेव करणत्वं नतु ज्ञानस्येति तयो-

रुभयोः संग्रहः । इन्द्रियार्थसन्निकर्षेति । जन्यप्रत्यक्षस्यैव लक्षण-मित्यभिप्रायेणेदं लक्षणम् । प्रत्यक्षं विभजते । निर्विकल्पकमिति ।

दी०—प्रत्यक्षज्ञानस्य लक्षणमाह । इन्द्रियेति । इन्द्रियं-चक्षुरादिकम्–अर्थो घटादिः, तयोः सन्निकर्षः संयोगादिः तज्जन्य-ज्ञानमित्यर्थः । तद्विभजते । तद् द्विविधमिति ।

गं०—ईश्वरप्रत्यक्षसाधारणमिति । ईश्वरप्रत्यक्षस्याऽजन्यत्वे ज्ञानकरणकभिन्नत्वसत्वाल्लक्षणसमन्वयादितिभावः । तयोः । ईश्वरप्रत्यक्ष-जन्यप्रत्यक्षयोः । दीपिकायां । तज्जन्यज्ञानमिति । इन्द्रियार्थसन्निकर्ष-जन्यत्वे सति ज्ञानत्वमित्यर्थः । अयं घट इत्याकारकं यद्ज्ञानं तदेव प्रत्यक्ष-मित्यर्थः । नच इन्द्रियार्थसन्निकर्षजन्यत्वमात्रमेव कुतो नोक्तमिति वाच्यम् । इन्द्रियार्थसन्निकर्षध्वंसेऽतिव्याप्तेः, तस्याऽपि इन्द्रियार्थसन्निकर्षजन्यत्वात् । नचेन्द्रियार्थसन्निकर्षत्वावच्छिन्नकारणतानिरूपितकार्यतावत्त्वमित्युक्तौ न दोषः, प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्यसंबन्धेन प्रतियोगित्वेनैव प्रति-योगिनः कारणत्वम्, नतु सन्निकर्षत्वेनेति वाच्यम् । एतादृशार्थलाभायैव ज्ञानपदोपादानात् । प्रत्यक्षं विभजते इति । प्रत्यक्षम्—प्रत्यक्षज्ञानम् । इदमुपलक्षणम् । चाक्षुषप्रत्यक्षे आलोकसंयोगः उद्भूतरूपं च कारणम् । तथा च द्रव्यवृत्तिलौकिकविषयतासंबन्धेन द्रव्यचाक्षुषं प्रति समवायसंबन्धेन तयोः कारणत्वम् । द्रव्यसमवेतवृत्तिलौकिकविषयता-संबन्धेन[1] द्रव्यसमवेतरूपादिचाक्षुषं प्रति स्वाश्रयसमवायसंबन्धेन तयोः कारणत्वम् । द्रव्यसमवेतसमवेतवृत्तिविषयतासंबन्धेन द्रव्यसमवेतसमवेत-रूपत्वादिचाक्षुषं प्रति तयोः स्वाश्रयसमवेतसमवायसंबन्धेन तयोः कारण-त्वम् स्व० आलोकसंयोगः उद्भूतरूपं चेति । एवं त्वाचप्रत्यक्षे उद्भूतस्पर्शः

१ विषयता च विषयनिष्ठोधर्मविशेषः । विषयिता च ज्ञाननिष्ठो धर्मविशेषः । विषयतासंबन्धेन ज्ञानेच्छाकृतयो विषये वर्तन्ते । विषयाश्च विषयितासंबन्धेन ज्ञानेच्छाकृतिषु इति ।

कारणम् । तथा च द्रव्यवृत्तिविषयतासंबन्धेन द्रव्यस्पार्शनप्रत्यक्षं प्रति समवायसंबन्धेनोद्भूतस्पर्शः कारणम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन द्रव्यसमवेतस्पार्शनं प्रति स्वाश्रयसमवायसंबन्धेनोद्भूतस्पर्शः कारणम् । द्रव्यसमवेतसमवेतवृत्तिविषयतासंबन्धेन द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षं प्रति स्वाश्रयसमवेतसमवायसंबन्धेनोद्भूतस्पर्शः कारणम् ।

लौकिकप्रत्यक्षमात्रे महत्वं कारणम्, महत्त्वं च परिमाणरूपम् । महत्त्वत्वं जातिविशेषः, प्रत्यक्षकारणतावच्छेदकतया सिद्धः । तथाच द्रव्यवृत्तिलौकिकविषयतासंबन्धेन द्रव्यप्रत्यक्षं प्रति समवायसंबन्धेन महत्त्वं कारणम् द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन द्रव्यसमवेतगुणकर्मसामान्यप्रत्यक्षे स्वाश्रयसमवायसंबन्धेन महत्त्वं कारणम् । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन द्रव्यसमवेतसमवेतरूपत्वादिप्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेन महत्वं कारणम् । स्वं—महत्वम् ।

ज्ञानसामान्यं प्रति तु विजातीयाऽऽत्ममनःसंयोगः कारणम् । वैजात्यं च परात्मव्यावृत्तत्वम् । एवं त्वङ्मनःसंयोगोऽपि कारणम् । अन्यथा सुषुप्तिकाले ज्ञानोत्पादप्रसंगात्, अस्माकं तु पुरीतन्नामकनाड्यां त्वगिन्द्रियाऽभावेन त्वङ्मनःसंयोगाभावात्सुषुप्तिकाले न ज्ञानोत्पादप्रसंगः । पुरीतत्नाड्यां मनः प्रवेशो हि सुषुप्तिरिति ध्येयम् ।

चर्ममनः संयोगस्य ज्ञानसामान्ये कारणत्वमित्यपि केचित् ।

वस्तुतस्तु पराऽऽत्मनःपरेण मनसा, सुषुप्तिकाले स्वीयात्मनः स्वीयमनसा च प्रत्यक्षापत्तिवारणाय परात्मव्यावृत्तपुरीतत्वहिर्देशावच्छिन्नात्ममनःसंयोगस्यैव कारणत्वं कल्प्यते । तथा च तेनैवाऽतिप्रसंगवारणे त्वङ्मनःसंयोगस्य चर्ममनः संयोगस्य वा ज्ञानसामान्ये हेतुत्वं न प्रामाणिकमिति ध्येयम् ।

## निष्प्रकारकं ज्ञानं निर्विकल्पकम् ।

न्या०—तल्लक्षयति । निष्प्रकारकमिति । प्रकारताशून्यज्ञानत्वमेव निर्विकल्पकत्वमित्यर्थः । निर्विकल्पके चतुर्थविषयता स्वीक्रि-

यते। त्रिविधविषयतामध्ये एकाऽपि तत्रनास्ति। अतो विशेष्य-शून्यज्ञानत्वं संसर्गताशून्यज्ञानत्वमित्यपि लक्षणं संभवति।

दी०—निर्विकल्पकस्य लक्षणमाह। निष्प्रकारकमिति। विशेषणविशेष्यसंबन्धानवगाहिज्ञानमित्यर्थः।

ननु निर्विकल्पके किं प्रमाणमिति चेन्न। गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डीतिज्ञानवत्, इत्यनुमानस्य प्रमाणत्वात्। विशेषणज्ञानस्यापि सविकल्पत्वेऽनवस्थाप्रसंगान्निर्विकल्पकसिद्धिः।

गं०—तल्लक्षयतीति। निर्विकल्पकं लक्षयतीत्यर्थः। निर्विकल्पकविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति यावत्। दीपिकायां। लक्षणमाहेति। निर्विकल्पकविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापाराऽनुकूलव्यापाराऽनुकूलकृतिमान् मूलकार इति बोधः। विशेषणविशेष्यसंबन्धानवगाहिज्ञानमिति। विशेषणं च विशेष्यं च संबन्धश्चेति विशेषणविशेष्यसंबन्धाः,ताननवगाहते इति व्युत्पत्त्या विशेषणानवगाहिज्ञानं विशेष्यानवगाहिज्ञानं संसर्गानवगाहिज्ञानं वा निर्विकल्पकस्वरूपम्। यद्यपि निर्विकल्पके घटघटत्वयोः समवायस्य च भानं संभवतीति विशेषणाद्यनवगाहित्वं दुर्घटम्। तथापि प्रकारत्वानिरूपकत्वं-विशेष्यत्वानिरूपकत्वं-संसर्गत्वानिरूपकत्वं वा लक्षणं बोध्यम्। तत्र घट-घटत्वसमवायानां विशेष्यतया-प्रकारतया संसर्गतया च भानास्वीकारादित्याह। चतुर्थविषयता स्वीक्रियते इति। निर्विकल्पके प्रमाणाऽभावात् प्रत्यक्षस्य द्वैविध्यमप्रमाणिकमित्याक्षिपति। नन्विति। किं मानमिति। तस्याऽतीन्द्रियतया प्रत्यक्षप्रमाणाऽसंभवादिति भावः। विशिष्टज्ञानमिति सावधारणम्। विशिष्टज्ञानमेवेत्यर्थः। ननु विशिष्टवैशिष्ट्यावगाहिज्ञानमिति यावत्। ज्ञानाकारमाह। गौरिति। निरवच्छिन्नगोत्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्नविशेष्यताशालिज्ञानमिति यावत्

विशेषणज्ञानजन्यमिति । समवायसंबन्धावच्छिन्नविशेषणज्ञाननिष्ठ-कारणतानिरूपितकार्यतावदित्यर्थः । विशिष्टज्ञानत्वादिति ज्ञानीय-प्रकारतानिरूपकत्वादित्यर्थः । अयं भावः । विशिष्टबुद्धौ विशेषणज्ञानं कारणम् । एवं च घट इत्याकारकविशिष्टबुद्धावपि विशेषणीभूतघटत्वज्ञानस्य कारणतया घटत्वज्ञानार्थं निर्विकल्पकस्वीकार आवश्यकः । अन्यथा "महत्वा-वच्छिन्नोद्भूतरूपावच्छिन्नाऽऽलोकसंयोगावच्छिन्न" चक्षुः संयोगानन्तरं घट• इत्याकारकप्रत्यक्षं न स्यात् , कारणीभूत "घटत्वात्मक" विशेषणज्ञाना-भावात् । नच घटत्वाऽप्रकारकं केवलघटविषयकप्रत्यक्षमेवाऽस्त्विति वाच्यम् । अनुल्लिख्यमानजात्यखण्डोपाध्यतिरिक्तपदार्थविषयकज्ञानस्य किंचि-द्धर्मप्रकारकत्वनियमात् तादृशप्रत्यक्षोत्पत्त्यसंभवात् । तथाच आदौ चक्षुरादि-सन्निकर्षः ततो विशेषणज्ञानात्मकं घटत्वनिर्विकल्पकम् । ततो घट इत्याकारकं सविकल्पकमिति स्थितिः ।

अथ निर्विकल्पकस्याऽतीन्द्रियत्वे किं मानमिति चेत् । यत्र यत्र ज्ञान-विषयकप्रत्यक्षत्वं, तत्र तत्र विषयविषयकत्वमिति व्याप्तिः । यथा सविकल्प-कस्य प्रत्यक्षं भवति घटमहं जानामीति प्रतीतेः । इदमेव विशिष्टवैशिष्ट्याव-गाहिज्ञानमित्युच्यते । विशिष्टवैशिष्ट्यावगाहिबुद्धौ च विशेषणतावच्छेदकप्र-कारकं ज्ञानं कारणम् । विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते । घटमहं जानामीति प्रतीतौ आत्मा विशेष्यः—तत्र ज्ञानं विशेषणम्–तत्र विषयितासंबन्धेन घटः प्रकारः "प्रकारविशेषणपदयोः पर्यायता । प्रकारत्वं विशेषणताव्याप्यधर्म इति केचित् , उभयथाऽपि प्रकारत्वं विशेषणत्वं न व्यभिचरति" घटे घटत्वं प्रकारः स एव विशेषणतावच्छेदकम् । निर्वि-कल्पके च घटत्वादिकं न प्रकारः, तथा च विशेषतावच्छेदकीभूतघटत्वज्ञानरूप-कारणविरहान्न निर्विकल्पस्य प्रत्यक्षम् , किन्तु तदतीन्द्रियमेवेति सिद्धान्तः ।

**सप्रकारकं ज्ञानं सविकल्पकम् । यथा डित्थोऽ-यम् । ब्राह्मणोऽयम् । श्यामोऽयमिति ।**

न्या०—सविकल्पकं लक्षयति । सप्रकारकमिति । विषयता ज्ञाननिरूपितत्वात्, ज्ञानस्य विषयतानिरूपकत्वेन प्रकारतानिरूपक ज्ञानत्वं सविकल्पकस्य लक्षणम् । एवं विशेष्यतानिरूपकज्ञानत्वं संसर्गतानिरूपकज्ञानत्वमित्यपि लक्षणं संभवति । उदाहरणम् यथेति । इदन्त्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानं ब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः ।

दी०—सविकल्पकं लक्षयति । सप्रकारकमिति । नामजात्यादि विशेषणविशेष्यसंबन्धावगाहिज्ञानमित्यर्थः । सविकल्पकमुदाहरति यथेति ।

गं०—सविकल्पकं लक्षयतीति । सविकल्पकविशेष्यकलक्षणत्व प्रामाण्यप्रकारकज्ञानाकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। विषयता त्रिविधा । प्रकारताऽऽख्या– विशेष्यताऽऽख्या–संसर्गताऽऽख्या च विषयिताऽपि त्रिविधा । प्रकारिताऽऽख्या–विशेष्यिताऽऽख्या–संसर्गिताऽऽख्या च । विषयता ज्ञाननिरूपिता भवति । ज्ञानं विषयतानिरूपकं भवति इममर्थमेवाह । विषयताया इति । एवं विषयताविषयितयोर्निरूप्य निरूपकभावः । यथा प्रकारताप्रकारितयोः । विशेष्यताविशेष्यितयोः संसर्गतासंसर्गितयोः । तथा च प्रकारतानिरूपितप्रकारितावत्त्वमित्यादीन्य लक्षणान्यूहनीयानि । डित्थोऽयमिति । इदं च नामप्रकारकज्ञानमात्रोप लक्षकम् । डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृग इति कोषः अत्र प्रथमान्तेदं शब्दार्थः "काष्ठमयो हस्ती" विशेष्यः । विशेष्यतानिरू प्यवृत्तिर्भवति । डित्थत्वं प्रकारः । प्रकारता तन्निष्ठैवेति । प्रकारताविशेष्य तयोश्च निरूप्यनिरूपकभावः । ब्राह्मणोऽयमिति । इदं च जातिप्रकारक ज्ञानमात्रोपलक्षकम् । इदन्त्वावच्छिन्नविशेष्यतानिरूपितब्राह्मणत्वप्रकारता शालिज्ञानमित्यर्थः । श्यामोऽयमिति । इदं च गुणप्रकारकज्ञानमात्रोप लक्षकम् । इदन्त्वावच्छिन्नविशेष्यतानिरूपितश्यामत्वनिष्ठप्रकारताशालिज्ञान

मित्यर्थः। इदमुपलक्षणम्। अयं भाव इत्याकारकं भावत्वरूपोपाधिप्रकारकं ज्ञानमपि सविकल्पकं बोध्यम्। दीपिकायां। नामजात्यादिरूपं यद्विशेषणं विशेष्यं च संबन्धश्चेति द्वन्द्वः। तानवगाहते इति व्युत्पत्तिरिति ध्येयम्।

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः। संयोगः-संयुक्तसमवायः--संयुक्तसमवेतसमवायः-समवायः-समवेतसमवायो विशेषणविशेष्यभावश्चेति।**

न्या०—चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान् विभजते—संयोग इत्यादि। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगस्य[1] हेतुत्वम्। द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य[2] हेतुत्वम्। द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम्। द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि घ्राणरसनश्रवणानि गुणग्राहकाणि। अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचत्वावच्छिन्नं[3] प्रति त्वक्संयोगस्य हेतुता। एवं द्रव्यसमवेतत्वाचत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतुता। द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता। एवमात्ममानसप्रत्यक्षे मनः-

१ समवायेनेति शेषः।

२ स्वरूपसंबन्धेनेति शेषः।

३ अत्र महत्त्वावच्छिन्नत्वं उद्भूतस्पर्शावच्छिन्नत्वं च देयम्।

संयोगस्य हेतुता। आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्त- समवायस्य हेतुता। आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता। रसनघ्राणयोस्तु रसगन्ध- तद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः सन्निकर्षयोरेव तत्र हेतुता बोध्या।

न्या०—श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण समं शब्दस्य समवायः सन्निकर्षः। शब्दवृत्तिशब्दत्व- कत्व-खत्वादिजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य च हेतुता बोध्या।

दी०—इन्द्रियार्थसन्निकर्षान् विभजते। प्रत्यक्षेति।

गं०—इन्द्रियार्थसन्निकर्षं विभजते इति। इन्द्रियार्थसन्निकर्ष- त्वावच्छिन्नविशेष्यकइन्द्रियार्थसन्निकर्षत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापार- मान् मूलकार इति बोधः। मूले प्रत्यक्षज्ञानहेतुरिति। प्रत्यक्षात्मकं यद् ज्ञानं तस्य हेतुरित्यर्थः। इन्द्रियार्थसन्निकर्ष इति। इन्द्रियं च अर्थश्च इन्द्रियार्थौ, तयोः सन्निकर्ष इत्यर्थः। सन्निकर्षः—संबन्धः।

द्रव्यप्रत्यक्षं प्रति इन्द्रियसंयोगः कारणम्। नच द्रव्य, प्रत्यक्षस्य ज्ञानरूपतया समवायेनाऽऽत्मवृत्तित्वात्, समवायेन इन्द्रियसंयोगस्य विषय- निष्ठस्याऽऽत्मनि असंभवात्, कथं कार्यकारणभाव इति वाच्यम्। विषय- तायाः कार्यतावच्छेदकसंबन्धत्वेनाऽदोषात्। तथा च द्रव्यवृत्तिविषयता- संबन्धेन प्रत्यक्षत्वावच्छि . प्रति इन्द्रियसंयोगः कारणम्। एवं द्रव्य- समवेतवृत्तिविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियसंयुक्तसमवायः कारणम्। एवं द्रव्यसमवेतसमवेतवृत्तिविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियसंयुक्तसमवेतसमवायः कारणमिति सामान्यकार्यकारणभावः

१ अत्र "महत्त्वावच्छिन्नत्वनिवेशे प्रयोजनाभावेन" केवलमनःसंयोगस्येत्यर्थः।

प्राचीनैः स्वीक्रियते। परन्तु एतादृशकार्यकारणभावे परस्परजन्ये व्यभिचारः, चाक्षुषस्थले त्वगिन्द्रियरूपकारणाभावात्। एवमन्धकारे घटचक्षुःसंयोगात्स्पार्शनापत्तिश्चेति प्राचीनमते दोषमनुसन्धाय विशिष्यैव कार्यकारणभावमाह। बोधिन्यां। द्रव्यवृत्तीति। नच विशिष्यकार्यकारणभावस्याऽवश्यकत्वेऽपि यद्विशेषयोरिति न्यायेन सामान्यकार्यकारणभावोप्यावश्यक इति वाच्यम्। तादृशनियमे मानाभावात्। नच प्रत्यक्षसामान्याभावं प्रति इन्द्रियसंयोगत्वावच्छिन्नप्रतियोगिताकाभावस्य एकस्यैव प्रयोजकत्वे लाघवमेव मानमिति वाच्यम्। घ्राणेन्द्रियादिसंयोगसत्वेऽपि द्रव्यनिष्ठलौकिकविषयतया प्रत्यक्षसामान्याभावसत्वेन तादृशनियमस्य तत्र प्रयोजकत्वाऽसंभवादिति ध्येयम्।

अथैवं विशिष्यकार्यकारणभावस्यैवाऽऽवश्यकत्वे आत्मप्रत्यक्षानुरोधेन मनःसंयोगस्य कारणत्वमस्तु। एवमात्मसमवेतमानस"ज्ञानादि"प्रत्यक्षानुरोधेन मनःसंयुक्तसमवायस्यापि कारणत्वमस्तु। परन्तु चक्षुःसंयोगस्य चक्षुःसंयुक्तसमवायस्य वा कारणत्वे मानाभावः। रूपत्वादिचाक्षुषानुरोधेन "चक्षुः"संयुक्तसमवेतसमवायस्य कारणतायाः आवश्यकतया चक्षुःसंयोगस्य चक्षुःसंयुक्तसमवायस्याऽन्यथासिद्धत्वात् तयोः पृथक्सन्निकर्षत्वमनावश्यकम्। "चक्षुः"संयुक्तसमवेतसमवायेनैव घटादेः घटसमवेतरूपादेर्वा चाक्षुषप्रत्यक्षसंभवः। तथाहि। चक्षुःसंयुक्तः कपालिकादिः—तत्समवेतः कपालादिः तत्र घटस्य समवायसत्वात्। एवं चक्षुःसंयुक्तः कपालादिः तत्संयुक्तो घटादिः तत्र रूपस्य समवायादिति चेन्न। केवलं चक्षुःसंयुक्तसमवेतसमवायस्य कारणत्वे परमाणुनीले नीलत्वस्य चाक्षुषप्रत्यक्षाऽऽपत्तिः। नच नीलत्वे महत्वोद्भूतरूपयोरभावान्न तदापत्तिरिति वाच्यम्। नीलत्वं जातिः सा परमाणुनीले घटनीले चैकैव तत्र स्वाश्रयसमवेतसमवायसंबन्धेन महत्वस्य उद्भूतरूपस्य च सत्वात्। स्वं महत्वं तदाश्रयो घटः तत्समवेतं नीलरूपम् तत्समवायस्य नीलत्वे सत्वात् "तदेव नीलत्वं परमाणुनीले वर्तते इति घटनीलमादाय परमाणुनीले महत्वं बोध्यम्"। एवं स्वं०

उद्भूतरूपं तदाश्रयो घटः परमाणुर्वा तत्समवेतं नीलं तत्समवायस्य नीलत्वे सत्वात् । "परमाणुरूपस्यापि उद्भूतत्वात्" एवं वायवीयसंयोगसमवेतसत्तायाश्चाक्षुषप्रत्यक्षं स्यात्, वायोर्महत्त्ववत्त्वेन स्वाश्रयसमवेतसमवायसंबन्धेन सत्तायां महत्त्वस्य सत्वात्; स्वाश्रयघटादिकमादाय तत्संबन्धेनोद्भूतरूपस्य च सत्वात् । अतः चक्षुःसंयुक्तसमवेतसमवायसंबन्धघटकचक्षुःसंयोगांशे[1] सामानाधिकरण्यसंबन्धेन उद्भूतरूपावच्छिन्नत्वं[2] महत्त्वावच्छिन्नत्वं च विशेषणीयम् । तथा च नोक्तापत्तिः । चक्षुःपरमाणुसंयोगे उद्भूतरूपावच्छिन्नत्वसत्वेऽपि महत्त्वावच्छिन्नत्वाभावेन वायुचक्षुःसंयोगे महत्त्वावच्छिन्नत्वसत्वेऽपि उद्भूतरूपावच्छिन्नत्वाभावेन च विशिष्टसंबन्धाभावात् । एवं च "परमाणौ महत्वाभावेन" महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य त्रसरेणावभावात् तच्चाक्षुषानुपपत्तिरतः संयोगे प्रत्यासत्तित्वमावश्यकम्, एवं महत्वावच्छिन्नचक्षुःसंयोगस्य चक्षुःसंयुक्तसमवेतसमवायस्य च त्रसरेणुरूपेऽभावाच्चाक्षुषानुपपत्त्या चक्षुःसंयुक्तसमवा

---

टि० १ नच सामानाधिकरण्यसंबन्धेन चक्षुःसंयोगे उद्भूतरूपावच्छिन्नत्वनिवेशे गौरवात् संयुक्ते एव समवायेन उद्भूतरूपावच्छिन्नत्वं निवेश्यतां लाघवादिति वाच्यम् यत्र घटे पृष्ठावच्छेदेनाऽऽलोकसंयोगः चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षापत्तेः आलोकसंयोगावच्छिन्नत्वं सामानाधिकरण्यसंबन्धेन चक्षुःसंयोगे एव निवेशनीयम् सामानाधिकरण्यं चाऽत्र स्वावच्छेदकावच्छिन्नत्वरूपम् । तेन नोक्तदोषतादवस्थ्यम् "संयुक्तांशे विशेषणत्वे उक्त स्थले घटप्रत्यक्षापत्तितादवस्थ्यात्" । नचाऽऽलोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणमस्तु, महत्वावच्छिन्नत्वम्, उद्भूतरूपावच्छिन्नत्वं च चक्षुःसंयुक्ते एव विशेषणमस्तु सम्बन्धे लाघवादिति वाच्यम् । अर्धजरतीयन्यायापत्तेः वस्तुतस्तु उक्तविशेषणद्वयं संयुक्ते एव, आलोकसंयोगावच्छिन्नत्वं संयोगे एव । उक्त विशेषणत्रयस्वीकारे विनिगमनाविरहेण गुरुभूतकार्यकारणभावाधिक्यप्रसंगादिति केचित्

२ उद्भूतरूपावच्छिन्नत्वं च सामानाधिकरण्यसंबन्धेन उद्भूतरूपविशिष्टत्वम् एवं महत्त्वावच्छिन्नत्वमपि ।

स्यापि प्रत्यासत्तित्वमावश्यकमिति ध्येयम् । द्रव्यग्राहकाणीति । द्रव्यविषयकप्रत्यक्षजनकानीत्यर्थः । एवमिति । द्रव्यसमवेतवृत्तिविषयता-संबन्धेनेति शेषः ।

स्पार्शनप्रत्यक्ष इति । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेनेति शेषः । एवमिति । क्रमेण द्रव्यवृत्तिविषयतासंबन्धेन द्रव्यसमवेत-वृत्तिविषयतासंबन्धेन द्रव्यसमवेतसमवेतवृत्तिविषयतासंबन्धेन चेति शेषः । द्वितीयतृतीययोरिति । संयुक्त[१]समवाय-संयुक्तसमवेतसमवाययोरित्यर्थः । न तु संयोगस्य, तयोर्द्रव्यग्राहकत्वाभावात् ।

## चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ।

दी०—संयोगसन्निकर्षमुदाहरति । चक्षुषेति । द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्ष इत्यर्थः । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन ततः प्रत्यक्षज्ञानमुत्पद्यते ।

गं० मूले । घटप्रत्यक्षजनने इति । घटस्य प्रत्यक्षं घटप्रत्यक्षम्, विषयित्वं षष्ठ्यर्थः । घटविषयकप्रत्यक्षमित्यर्थः । अयं घट इत्याकारकं घट-विषयकप्रत्यक्षं यदा चक्षुरिन्द्रियेण जन्यते तदा संयोगः इन्द्रियार्थसन्नि-कर्षः । इन्द्रियं चक्षुः अर्थो घटः अनयोः संयोगः संबन्धः । अवयवावयवि-भिन्नद्रव्ययोरेव संयोग इति नियमात् । अत्र चक्षुःपदमिन्द्रियमात्रोपलक्षकम् । इन्द्रियेणेत्यर्थः । घटपदं द्रव्यमात्रोपलक्षकम् । द्रव्यप्रत्यक्षे इत्यर्थः । तथा च द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति संयोगसंब-न्धेन चक्षुः कारणम् । एवं तादृशविषयतासंबन्धेन त्वाचत्वावच्छिन्नं प्रति संयोगसंबन्धेन त्वक् कारणम् । एवं तादृशविषयतासंबन्धेन मानस, आत्म-प्रत्यक्ष, त्वावच्छिन्नं प्रति संयोगसंबन्धेन मनः कारणमित्यर्थः । द्रव्यप्रत्यक्षे चक्षुस्त्वङ्मनांसि कारणानि । प्रत्यक्षे क्रममुपपादयति । आत्मा मनसा

१ अत्रापि घ्राणसंयोगे रसनासंयोगे च महत्त्वावच्छिन्नत्वं देयम् । अन्यथा परमाणुरसगन्धयोः तत्समवेतरसत्वगन्धत्वयोश्च रासनघ्राणजप्रत्यक्षाऽऽपत्तेः ।

संयुज्यते इति। मन इन्द्रियेणेति। संयुज्यते इत्यनेनाऽन्वयः। इन्द्रि- मर्थेनेति। अस्यापि संयुज्यते इत्यनेनाऽन्वयः। नचाऽऽत्मप्रत्यक्षे आत्म- नःसंयोगमात्रस्य हेतुतया तत्प्रत्यक्षानुपपत्तिः, तत्रेन्द्रियमनःसंयोगविरहस्य विषयेन्द्रियसंयोगाभावाच्चेति वाच्यम्। आत्मप्रत्यक्षसंग्रहाय आत्मा मनः संयुज्यते ततः प्रत्यक्षज्ञानमुत्पद्यते इति योजनयाऽनुपपत्तिविरहादिति।

**घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः चक्षुःसंयुक्ते घटे रूपस्य समवायात्।**

दी०—संयुक्तसमवायमुदाहरति। घटरूपेति। तत्र युक्तिमाह चक्षुःसंयुक्ते इति।

गं०—मूले। घटरूपप्रत्यक्षजनने इति चक्षुषा इत्यनुषज्यते घटे रूपं घटरूपम्, समवेतत्वं सप्तम्यर्थः। घटसमवेतरूपमित्यर्थः घटरूप- प्रत्यक्षं घटरूपप्रत्यक्षम्, विषयकत्वं षष्ठ्यर्थः। तथा च घटसमवेतरूप- विषयकं "घटे रूपं" इत्याकारकं ज्ञानं यदा चक्षुषा जन्यते तदा संयुक्तसम- वायः इन्द्रियार्थसन्निकर्षः। इन्द्रियं चक्षुः अर्थो घटरूपम्, अनयोः सं- न्धः संयुक्तसमवायः। तत्र। संयुक्तसमवायस्य सन्निकर्षत्वे। युक्तिमाह हेतुमाहेत्यर्थः। मूले। चक्षुःसंयुक्ते घटे इति। चक्षुःसंयुक्तो घटः तस्मिन् रूपस्य समवायादित्यर्थः।

मूले घटपदं द्रव्यमात्रोपलक्षकम्। रूपपदं समवेतमात्रोपलक्षकम् एवं चक्षुःसंयुक्ते इत्यत्र चक्षुःपदमिन्द्रियमात्रोपलक्षकम्। घटपदं द्रव्यमा- त्रोपलक्षकम्। रूपपदं द्रव्यसमवेतमात्रोपलक्षकम्।

तथा च द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति- स्व, संयुक्तसमवायसंबन्धेन चक्षुः कारणम्। एवं तादृशविषयतासंबन्धेन स्पार्शनत्वावच्छिन्नं प्रति उक्तसंबन्धेन त्वगिन्द्रियं कारणम्। एवं तादृशवि- षयतासंबन्धेन मानस, सुखादिप्रत्यक्ष, त्वावच्छिन्नं प्रति निरुक्तसंबन्धेन मनः

कारणम् । एवं तादृशसंबन्धेन घ्राणज "गन्धप्रत्यक्ष" त्वावच्छिन्नं प्रति उक्त-संबन्धेन घ्राणेन्द्रियं कारणम् । एवं तादृशसंबन्धेन रासनरसप्रत्यक्षत्वावच्छिन्नं प्रति रसः कारणमिति विशिष्यैव कार्यकारणभावः । केवलं श्रोत्रेन्द्रियस्य नायं सन्निकर्ष इति ध्येयम् ।

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः । चक्षुःसंयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात् ।**

दी०—संयुक्तसमवेतसमवायमुदाहरति । रूपत्वेति ।

गं०—मूले रूपत्वसामान्यप्रत्यक्षे इति । रूपत्वं यत्सामान्य तस्य प्रत्यक्षे इत्यर्थः । रूपत्वसामान्यविषयकप्रत्यक्षे इति यावत् । अत्रापि चक्षुषा इत्यनुषज्यते । तथा च घटरूपे रूपत्वमित्याकारकप्रत्यक्षे संयुक्त-समवेतसमवायः सन्निकर्षः । चक्षुःसंयुक्ते घटे इति । चक्षुःसंयुक्तो घटः तत्समवेतं, रूपम्, तस्मिन् रूपत्वस्य समवायो वर्त्तते, जातिव्यक्त्योः समवायादिति ।

अत्रापि रूपत्वपदं जातिमात्रोपलक्षकम् । द्रव्यसमवेतसमवेतप्रत्यक्षे इति यावत् । एवं चक्षुःपदं श्रोत्रं विहायेन्द्रियमात्रोपलक्षकम् । घटपदं द्रव्य-मात्रोपलक्षकम्, रूपपदं द्रव्यसमवेतमात्रोपलक्षकम् । रूपत्वपदं तत्समवेत-मात्रोपलक्षकम् ।

तथा च द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुष "रूप-त्वप्रत्यक्ष" त्वावच्छिन्नं प्रति स्वसंयुक्तसमवेतसमवायसंबन्धेन चक्षुः कारणम् । एवं तादृशसंबन्धेन स्पार्शनस्पर्शत्व"प्रत्यक्ष"त्वावच्छिन्नं प्रति तादृशसं-बन्धेन त्वगिन्द्रियं कारणम् । एवं तादृशसंबन्धेन मानस"सुखत्वप्रत्यक्ष" त्वावच्छिन्नं प्रति तादृशसंबन्धेन मनः कारणम् । एवं तादृशसंबन्धेन घ्राणज "गन्धत्वप्रत्यक्ष"त्वावच्छिन्नं प्रति उक्तसंबन्धेन घ्राणेन्द्रियं कारणम् । एवं

तादृशसंबन्धेन रसनेन्द्रियजन्य "रसत्वविषयक" प्रत्यक्षत्वावच्छिन्नं प्रति तादृशसंबन्धेन रसनेन्द्रियं कारणमिति।

**श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात्, शब्दस्याऽऽकाशगुणत्वात्, गुणगुणिनोश्च समवायात्।**

दी०—समवायमुदाहरति। श्रोत्रेणेति। तदुपपादयति। कर्णेति।

गं०—मूले। श्रोत्रेण। श्रोत्रेन्द्रियेण। **शब्दसाक्षात्कारे** इति। शब्दस्य साक्षात्कारः, शब्दसाक्षात्कारः, तस्मिन्। षष्ठ्यर्थौ विषयकत्वम्, साक्षात्कारः प्रत्यक्षात्मकं ज्ञानम्। एवं च "अयं शब्दः" इत्याकारकं शब्दविषयकं ज्ञानं यदा श्रोत्रेन्द्रियेण जायते तदा समवायः इन्द्रियार्थसन्निकर्षः। श्रोत्रमिन्द्रियम्, अर्थः शब्दः, अनयोः संबन्धः समवायः। दीपिकायां तदुपपादयतीति। तत् समवायस्य सन्निकर्षत्वम्। कर्णविवरवर्त्याकाशस्य कर्णविशिष्टाकाशस्य। **श्रोत्रत्वात्।** श्रोत्रेन्द्रियत्वात्। तथा च शब्द आकाशे एव वर्तते। श्रोत्रन्तु आकाशमेवेति शब्दस्य समवायेन श्रोत्रे सत्त्वात् तदुपपत्तिरिति ध्येयम्।

एवं च शब्दवृत्तिलौकिकविषयतासंबन्धेन श्रावण 'शब्दप्रत्यक्ष', त्वावच्छिन्नं प्रति श्रोत्रावच्छिन्न[1]समवायसंबन्धेन श्रोत्रेन्द्रियं कारणम्। श्रोत्रावच्छिन्नत्वं च श्रोत्रानुयोगिकत्वविशिष्टसमवायः। यः शब्दो यदवच्छेदेनोत्पद्यते, स शब्दः तद्देशानुयोगिकत्वविशिष्टसमवायवानित्यनुभवानुरोधात्कर्णविवरावच्छेदेनोत्पद्यमानशब्दस्यैव कर्णविवरानुयोगिकत्वविशिष्टसमवायवत्त्वं न तु देशान्तरावच्छेदेनोत्पद्यमानशब्दस्येति न श्रोत्रदेशेऽनुत्पन्नशब्दस्य समवायेन श्रावणत्वापत्तिरिति ध्येयम्।

दी०—ननु दूरस्थशब्दस्य कथं श्रोत्रसंबन्ध इति चेन्न।

---

१ अत्रापि महत्त्वावच्छिन्नत्वं न देयम्, प्रयोजनाभावात्।

वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य श्रोत्रसंबन्धात् प्रत्यक्षत्वसंभवात् ।

शं०—ननु श्रोत्रावच्छिन्नसमवायस्य संसर्गत्वे भेर्याद्यवच्छेदेनोत्पन्नशब्दस्य भेर्याद्यवच्छिन्नसमवायवत्त्वम् नतु श्रोत्रावच्छिन्नसमवायवत्त्वम्, श्रोत्रावच्छेदेन प्रथमशब्दस्योत्पत्यभावात् एवं च सन्निकर्षविरहात् शब्दस्य प्रत्यक्षानुपपत्तिरित्याशंकते । नन्वित्यादिना । **दूरस्थशब्दस्येति** । कर्णभिन्नदेशावच्छेद्यशब्दस्येत्यर्थः । **कथं श्रोत्रसंबन्ध इति** । कथं कर्णावच्छेद्यत्वमित्यर्थः । तथा च कस्यापि शब्दस्य कर्णावच्छेद्यत्वाऽभावाच्छब्दस्य प्रत्यक्षानुपपत्तिरिति भावः । **वीचीतरङ्गन्यायेनेति** यथा आद्यवीची सर्वदिगवच्छेदेन तरङ्गान्तरं जनयति, स तरङ्गः तरङ्गान्तरं जनयति, तथा भेर्याद्यवच्छेदेन जायमानशब्दोऽपि सर्वदिगवच्छेदेन शब्दान्तरं जनयति, सोऽपि शब्दः शब्दान्तरं जनयति इति रीत्या कर्णविवरावच्छेदेनोत्पन्नशब्दो गृह्यते "अयमेव वीचीतरङ्गन्यायेनोत्पत्तिक्रमः" । कदम्बमुकुलन्यायेनोत्पत्तिप्रकारमाह । **कदम्बमुकुलन्यायेनेति** । यथा आदिमं कदम्बमुकुलं नालकाधिकरणविशेषे सर्वदिगवच्छेदेन एकदैवाऽनेकमुकुलानि जनयति तथा भेरीमृदङ्गाद्यवच्छेदेन जायमानः प्रथमशब्दः सर्वदिगवच्छेदेन दशशब्दान् जनयति तादृशदशशब्दाः शब्दान्तरान् जनयन्तीति । "अयमेव कदम्बमुकुलन्यायेनोत्पत्तिक्रमः" । वाकारोऽनास्थायाम् । दशशब्दानां तत्प्रागभावानां तद्धेतुहेतुमद्भावे च कल्पनागौरवादिति ध्येयम् । आद्यशब्दस्तु अतीन्द्रिय एवेति । **श्रोत्रदेशे जातस्येति**। कर्णविवरावच्छेदेन जायमानशब्दस्येत्यर्थः । **श्रोत्रसंबन्धादिति** । श्रोत्रावच्छिन्नसमवायरूपसन्निकर्षसत्वादित्यर्थः । **प्रत्यक्षत्वसंभवादिति** । तथा च शब्दस्याऽतीन्द्रियत्वमप्रामाणिकमिति भावः ।

**शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ।**

दी०—समवेतसमवायमुदाहरति । शब्दत्वेति ।

गं०—मूले । शब्दत्वसाक्षात्कारे इति । श्रोत्रेणेत्यनुपज्यते । शब्दत्वस्य साक्षात्कारः, शब्दत्वसाक्षात्कारः । तस्मिन् । एवं च शब्दत्व-विषयकप्रत्यक्षे इत्यर्थः । एवं च शब्दे शब्दत्वमित्याकारकशब्दत्वविषयक-ज्ञाने समवेतसमवायः इन्द्रियार्थसन्निकर्षः । इन्द्रियं श्रोत्रं, अर्थः शब्दत्वं तयोः संबन्धः समवेतसमवायः । समवेतस्य श्रोत्रावच्छिन्नसमवेतस्य समवाय इत्यर्थः । अस्य सन्निकर्षत्वमुपपादयति । श्रोत्रसमवेते इति । शब्दसमवेतशब्दत्वे श्रोत्रसमवेतसमवायसत्त्वादित्यर्थः । तथा च शब्द-समवेतवृत्तिलौकिकविषयतासंबन्धेन श्रोत्रेण "शब्दत्वप्रत्यक्ष"त्वावच्छिन्नं प्रति श्रोत्रावच्छिन्नसमवेतसमवायसंबन्धेन श्रोत्रं कारणम् ।

**अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः। भूतलं घटाऽभाववदित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ।**

न्या०—अभावप्रत्यक्षे इति । विशेषणविशेष्यभावो नाम विशेषणतासन्निकर्षः । पंचविधसन्निकर्षेषु मध्ये संयोगस्थाने संयुक्त-पदं, समवायस्थाने समवेतपदं च घटयित्वा अभावस्थले निर्वाह्यम् । तथाहि द्रव्याधिकरणकाऽभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता, द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता, द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसम-वेतविशेषणताच सन्निकर्षः । तत्र घटे पटत्वाभावः संयुक्तविशेषणतया गृह्यते । घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेषण-

---

टि०—१ सा च न प्रकारतारूपा, अतो भूतले घटाभाव इत्यत्रापि विशेषणतयैव सन्निकर्षः । नातः षड्विधत्वहानिरिति ध्येयम् ।

तया गृह्यते । घटसमवेतसमवेतरूपत्वादौ नीलत्वाभावश्च संयुक्तसम-वेतसमवेतविशेषणतया गृह्यते इति संक्षेपः ।

इति न्यायबोधिन्यां प्रत्यक्षपरिच्छेदः ।

दी०—विशेषणविशेष्यभावमुदाहरति । अभावेति । तदुपपा-दयति । घटाभाववदिति । भूतलं विशेष्यम् । घटाभावो विशेषणम् । भूतले घटाभावो नास्तीत्यत्र अभावस्य विशेष्यत्वं द्रष्टव्यम् ।

गं०—मूले । अभावस्य प्रत्यक्षमभावप्रत्यक्षम् । तस्मिन् । अभाव-विषयकप्रत्यक्षे इत्यर्थः । विशेषणं च विशेष्यं च विशेषणविशेष्ये तयोर्भावः । विशेषणभावः, विशेष्यभावश्चेत्यर्थः । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभि-संबध्यते इति न्यायात् । विशेषणता-विशेष्यता इति यावत् । यथा भूतलं-घटाभाववदिति ज्ञाने अभावस्य इन्द्रियसंबद्धविशेषणतासन्निकर्षः । इन्द्रियं चक्षुः—तत्संबद्धं-भूतलं तत्र विशेषणता घटाभावस्येति । संक्षेप इति । शब्दाभावः श्रोत्रावच्छिन्नविशेषणतया गृह्यते । गृह्यते च कादौ खत्वाभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया, कत्वे खत्वाभावः श्रोत्रावच्छि-न्नसमवेतसमवेतविशेषणतया, घटाभावे पटाभावः संयुक्तविशेषणविशेषण-तया, काऽभावे खत्वाभावः श्रोत्रावच्छिन्नविशेषणविशेषणतया । अभावस्तु सर्वत्र विशेषतयैव गृह्यते, परन्तु अधिकरणैः सह इन्द्रियाणां पृथक्-पृथक् संबन्धः उक्तदिशा कल्पनीय इति ध्येयम् । दीपिकायां भूतले घटो ना-स्तीत्यत्रेति । आधेयतासंबन्धावच्छिन्नभूतलनिष्ठप्रकारतानिरूपितघटाभाव-निष्ठविशेष्यताशालिप्रत्यक्षे इत्यर्थः । विशेष्यत्वमिति । इन्द्रियसंबद्धविशे-ष्यत्वमित्यर्थः । अत्रापि संबन्धः पूर्ववदूहनीयः । यद्यपि विशेषणता नाना-विधा तथापि विशेषणतात्वेन रूपेण सा एकविधैवेति न षड्विधत्वहानिः । न च संयुक्तसमवायादीनां चतुर्णां समवायत्वेनैकविधत्वात् षड्विधत्वहानि-स्तदवस्थैवेति वाच्यम् । स्वतन्त्रेच्छेन पृथक्-पृथक् कथनात् । वस्तुतस्तु संयोग-संयुक्तसमवाय-विशेषणताभेदेन सन्निकर्षस्त्रिविध एवेति ध्येयम् ।

दी०—एतेन अनुपलब्धेप्रमाणान्तरत्वं निरस्तम् । "यद्य
घटोऽभविष्यत् तदा भूतलमिवाऽद्रक्ष्यत् दर्शनाभावान्नास्ति" इ
तर्कितप्रतियोगिसत्वविरोध्यनुपलब्धेः सहकृतेन इन्द्रियेणैव अभा
ज्ञानोपपत्तौ अनुपलब्धेः प्रमाणाऽन्तरत्वाऽसंभवात् । अधिकरण
ज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तौ अनुपलब्धेः करण
स्याऽयुक्तत्वात् । विशेषणविशेष्यभावो विशेषणविशेष्यस्वरूपे
नातिरिक्तः संबन्धः ।

गं०—एतेन । विशेषणतायाः सन्निकर्षत्वस्वीकारेण । विशेषणतासं
कर्षबलादभावस्य प्रत्यक्षविषयत्वेनेति यावत् अनुपलब्धेरिति । योग्यानु
पलब्धेरिति यावत् । प्रमाणत्वम् । प्रत्यक्षाद्यतिरिक्तप्रमाणत्वम् । मीमांसकै
स्तु विशेषणतासन्निकर्षो न स्वीक्रियते । नच समवायप्रत्यक्षानुरोधेन स
स्वीकर्तव्य इति वाच्यम् । तैः समवायाऽनंगीकारात् एवं च सन्निकर्षाभा
दभावप्रत्यक्षाऽन्यथानुपपत्याऽनुपलब्धिनामकं प्रमाणान्तरं स्वीकार्यमिति
परन्तु विशेषणतायाः सन्निकर्षत्वस्वीकारेणैवाऽभावस्य प्रत्यक्षसंभवात्
मनुपलब्धेः प्रमाणान्तरत्वेनेति भावो नैयायिकानाम् । अनुपलब्धेरभावग्रा
हकत्वाभावे भूतलादौ घटवत्ताभ्रमदशायामपि घटाभावप्रत्यक्षापत्तिः, विशे
षणतासन्निकर्षसत्वात् । नचाऽभावग्राहकसन्निकर्षसत्वेऽपि घटवत्तानिश्चयस्य
प्रतिबन्धकत्वेन घटभ्रमदशायां न घटाभावप्रत्यक्षापत्तिरिति वाच्यम् । प्रति
वध्यतावच्छेदककोटौ लौकिकसन्निकर्षाऽजन्यत्वस्य निवेशनीयतया घटाभाव
प्रत्यक्षस्य लौकिकसन्निकर्षजन्यत्वेन प्रतिवध्यतावच्छेदकानाक्रान्तत्वादित्या
शंकां अभावप्रत्यक्षे योग्यानुपलब्धेः सहकारिकारणत्वं स्वीकृत्य परिहरति ।
यद्यत्रेति । भूतले यदि घटः स्यादित्यर्थः । तदा भूतलमिवेति । भूतल
प्रत्यक्षमिव घटप्रत्यक्षमपि स्यादित्यर्थः । दर्शनाभावादिति । तद्दर्शनाभा
वादित्यर्थः । तर्कितेति । तर्कितम् आपादितम् । यत्प्रतियोगिसत्वम्
तद्विरोध्यनुपलब्धीत्यर्थः । प्रतियोगिसत्वप्रसंजनप्रसंजितप्रतियोगिकत्वस्य

योग्यताविशिष्टो यः उपलब्ध्यभावः तत्सहकृतेनेन्द्रियेणेत्यर्थः। प्रतियोगिनो घटादेः सत्त्वप्रसंजनेन "यदि अत्र घटः स्यादित्यापादनेन" प्रसंजितः आपादितः "तर्हि घटोपलभ्येतेत्यापत्तिविषयीभूतः" प्रतियोगी "उपलब्धिरूपः प्रतियोगी" यस्य। तथा च प्रतियोग्युपलब्ध्यभावः अभावप्रत्यक्षे सहकारिकारणमित्यर्थः। **अभावज्ञानोत्पत्ताविति**। अभावनिष्ठलौकिकविषयताशालिप्रत्यक्षोत्पत्तौ। **अनुपलब्धेरिति**। योग्यानुपलब्धेरित्यर्थः। नन्वेतावता अभावप्रत्यक्षे इन्द्रियाणां करणत्वम्, अनुपलब्धेः सहकारित्वमित्यायातम्, तदपेक्षया अनुपलब्धेरेव करणत्वकल्पनं वरम्, एवमनुपलब्धिसहकृतेन्द्रियस्य करणत्वम्, इन्द्रियसहकृतानुपलब्धेर्वा इत्यत्र विनिगमनाविरहश्चेत्यत आह। **अधिकरणज्ञानार्थमिति**। अधिकरणं विना अभावग्रहानुत्पत्त्या अधिकरणग्रहार्थं इन्द्रियाणां कारणत्वस्यावश्यकतया क्लृप्तकारणेनेन्द्रियेणैवाऽभावग्रहोत्पत्तौ प्रमित्यन्तरकल्पनायाः प्रमाणान्तरकल्पनायाश्चाऽन्याय्यत्वादिति भावः। **करणत्वोपपत्ताविति**। घटाभावादिविषयकप्रमाकरणत्वसंभवे इत्यर्थः। **अनुपलब्धेरिति**। योग्यानुपलब्धेरित्यर्थः। **करणत्वायोगादिति**। करणत्वस्याऽप्रामाणिकत्वादिति भावः। इदमुपलक्षणम्। अनुपलब्धिर्ज्ञाता सती कारणम्, अज्ञाता वा। नाद्यः। अनुपलब्धेरपि उपलब्ध्यभावरूपतया तत्रापि अनुपलब्धेः कारणत्वं वाच्यम्, एवं तस्यापि अभावरूपतया तत्रापि तस्याः कारणत्वमितिरीत्याऽनवस्थाप्रसंगात्। न द्वितीयः। तथा सति अभावप्रत्यक्षस्य ज्ञानाऽकरणकत्वात्प्रत्यक्षत्वं निर्व्यूढमेवेति संक्षेपः। ननु त्वयाऽपि विशेषणविशेष्यभावाख्योऽतिरिक्तः संबन्धः कल्पनीय इत्यत आह। **विशेषणविशेष्यभाव इति**। विशेषणतासन्निकर्ष इत्यर्थः। **विशेषणविशेष्यस्वरूप एवेति**। अभावस्वरूपः अधिकरणस्वरूपोवेत्यर्थः। एवकारार्थं विवृणोति। **नातिरिक्तः पदार्थ इति**। विशेषणतासन्निकर्षो नाभावाधिकरणाभ्यामतिरिक्तः पदार्थ इत्यर्थः। एवं तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां संबन्धः इति विश्वनाथोक्तिरपि संगच्छते।

एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् । तत्कारण-मिन्द्रियम् । तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ।

इति तर्कसंग्रहे प्रत्यक्षपरिच्छेदः समाप्तः ।

दी०—प्रत्यक्षज्ञानमुपसंहरन् तस्य करणमाह । एवमिति । असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः । प्रत्यक्षमुप-संहरति । तस्मादिति ।

इति दीपिकायां प्रत्यक्षपरिच्छेदः ।

शं०—असाधारणकारणत्वादिति । कार्यत्वव्याप्यप्रत्यक्षत्वाव-च्छिन्नकार्यतानिरूपितकारणतावत्वादित्यर्थः । इन्द्रियाणि षट् । घ्राण-रसन-चक्षुः-त्वक्-श्रोत्र-मनांसि । करणभेदात् प्रत्यक्षप्रमाऽपि षड्विधा । घ्राणज-रासन-चाक्षुष-त्वाच-श्रौत्र-मानसभेदादिति ।

इदमत्रावधेयम् । प्रत्यक्षं द्विविधम् । लौकिकम्, अलौकिकं च । सन्निकर्षषट्कजन्यं लौकिकम्, तच्च व्याख्यातमेव । अलौकिकसन्निकर्ष-जन्यमलौकिकम् । अलौकिकसन्निकर्षस्त्रिविधः । सामान्यलक्षणा-ज्ञानलक्षणा-योगजभेदात् ।

लक्षणशब्दस्याऽर्थद्वयम्, स्वरूपो विषयश्च । आद्ये सामान्यमेवलक्षण-मिति व्युत्पत्तिः । सामान्यात्मकः संबन्धः इति यावत् । स च इन्द्रियसंब-द्धविशेष्यकज्ञानप्रकारीभूतः । यथा इन्द्रियं चक्षुः तत्संबद्धो घटः तद्विशेष्यकं घटः इत्याकारकं ज्ञानं तस्मिन् प्रकारीभूतं यद् घटत्वम्, तदेव निखिल-प्रत्यक्षे "घटाः इत्याकारके" कारणम् । तथा च विशेष्यतासंबन्धेन घट-प्रत्यक्षं प्रति समवायसंबन्धेन घटत्वं कारणमिति पर्यवसितः कार्यकारण-भावः । द्वितीये । सामान्यं विषयो यस्याः "ज्ञानव्यक्तेः" इति व्युत्पत्तिः । सामान्यविषयकज्ञानं संबन्धः । तथा च यावद्घटप्रत्यक्षे घटत्वं न कारणम्, किन्तु घटत्वज्ञानमिति फलितम् । तथा च समवायसंबन्धेन तद्धर्माव-यावद्घटविषयकप्रत्यक्षं प्रति समवायसंबन्धेन सामान्यविषयकज्ञानं हे

रिति कार्यकारणभावः । अथवा स्वीयप्रकारताश्रयतद्धर्मवत्त्वसंबन्धेन तत्पुरुषीयप्रत्यक्षत्वावच्छिन्नं प्रति स्वीयप्रकारताश्रयतद्धर्मवत्त्वसंबन्धेन तत्पुरुषीयज्ञानं हेतुरिति ।

ज्ञानलक्षणासन्निकर्षस्तु इन्द्रियसंयुक्तमनःसंयुक्ताऽऽत्मसमवेतस्मृतिविषयत्वरूपः । यथा सुरभिचन्दनमित्यत्र ।

योगश्चित्तवृत्तिनिरोधः, तेन जातः सर्वज्ञत्वादिरूपः योगजः सन्निकर्षः । यथा देशकालव्यवहितसूक्ष्मपदार्थविषयकप्रत्यक्षे । युक्त-युञ्जानयोगिभेदेन सन्निकर्षोऽपि द्विविधः । सर्वदा सर्वविषयकज्ञानवान् युक्तः । चिन्ताविशेषसहकारेण सर्वविषयकज्ञानवान् युञ्जान इति संक्षेपः ।

इति गंगायां प्रत्यक्षपरिच्छेदः ।

## अनुमितिकरणमनुमानम् ।

न्या०—अनुमानं लक्षयति । अनुमितीति । अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः । अनुमितिः फलम्, कार्यमित्यर्थः । परामर्शस्य व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्याऽनुमितिजनकत्वात्, तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम् अनुमितिकरणत्वमनुमानस्य लक्षणम् अनुमानं व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम् ।

दी०—अनुमानं लक्षयति अनुमितिकरणमिति ।

गं०—अनुमानं लक्षयतीति । उपजीवकत्वसंगत्या इति शेषः[1] । अनुमानविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः । मूले अनुमितिकरणमिति । अनुमितेः

---

१ संगतिसामान्यलक्षणादिकन्तु माथुर्यामवसेयम् ।

करणमनुमितिकरणम् । निरूपितत्वं षष्ठ्यर्थः तथाचाऽनुमितिनिष्ठकार्यतानि-रूपिताऽसाधारकारणत्वमनुमानप्रमाणस्य लक्षणम् । अनुमितौ व्याप्तिज्ञानं करणमिति । प्राचीनमतेन इदम् । वन्हिव्याप्यो धूम इति निश्चयं कृत्वा "वन्ह्यर्थी" कश्चित्पुरुषः पर्वतमगमत्, तत्र तस्य पर्वतो वन्हिमान्नवेति संशयो जातः । ततः पर्वतो धूमवानिति ज्ञानं प्रत्यक्षात्मकं पक्षधर्मताज्ञानं जातम् । ततो वन्हिव्याप्यो धूम इति व्याप्तिस्मरणम् । धूमज्ञानस्य व्याप्त्यनुभवजन्यो यो व्याप्तिसंस्कारः तस्योद्बोधकत्वात्, अतएव एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति व्युत्पत्तिरपि । अत्र एकसंबन्धिज्ञानं धूमज्ञानं अपरसंबन्धिनो वन्हिव्याप्तेः स्मारकम्, उद्बोधकविधया इति यावत् । ततश्च वन्हिव्याप्यधूमवान् पर्वत इति परामर्शः । ( परामर्शे च व्याप्तिज्ञानं कारणम् विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् ) । ततः व्याप्यनिश्चयेन व्यापकनिश्चयात्मिका" पर्वतो वन्हिमानित्यनुमिति जायते इति । तथा च परामर्शे व्याप्तिज्ञानजन्यत्वस्य व्याप्तिज्ञानजन्यानुमितिजनकत्वस्य च सत्वात्परामर्शस्य व्यापारत्वोपपत्तिः । तदेवाऽह । परामर्शस्येति । उपसंहरति । अनुमानं व्याप्तिज्ञानमिति । अनुमितिकरणत्वादिति यावत् । तदेव स्पष्टयति । एतस्येति व्याप्तिज्ञानस्येत्यर्थः । अनुमितिं प्रत्यसाधारणकारणतयेति अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणतयेत्यर्थः ।

## परामर्शजन्यं ज्ञानमनुमितिः ।

न्या०—परामर्शजन्यमिति । परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम् । अत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतः परामर्शजन्यत्वे सतीति विशेषणोपादानम् । परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय ज्ञानत्वोपादानम् ।

दी०—अनुमितेर्लक्षणमाह परामर्शेति ।

गं०—परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम् । सति सप्तमी विशिष्टार्थकतयाऽऽह । परामर्शजन्यत्वविशिष्टेति । वैशिष्ट्यं च सा

नाधिकरण्यसंबन्धेन । परामर्शध्वंसेऽतिव्याप्तिरिति । प्रतियोगिता-संबन्धेन ध्वसं प्रति तादात्म्येन प्रतियोगिनः कारणत्वात् । न च तथापि वन्हिव्याप्यधूमवान् पर्वत इति ज्ञानवानहमित्याकारकपरामर्शप्रत्यक्षेऽति-व्याप्तिः, "विषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्यसंबन्धेन विषयस्य कार-णतया" परामर्शविषयकप्रत्यक्षे परामर्शजन्यत्व-ज्ञानत्वोभयोः सत्त्वादिति वाच्यम् । समवायसंबन्धावच्छिन्नपरामर्शत्वावच्छिन्नकारणतानिरूपितसम-वायसंबन्धावच्छिन्नकार्यतावत्त्वस्य तदर्थत्वात् । परामर्शनिष्ठजनकतायां सम-वायसंबन्धावच्छिन्नत्वविरहात्, परामर्शध्वंसनिष्ठायां परामर्शप्रत्यक्षनिष्ठायां च जन्यतायां समवायसंबन्धावच्छिन्नत्वविरहान्नातिव्याप्तिः । न च ज्ञानत्व-रूपविशेष्यदलं व्यर्थमिति वाच्यम् । इष्टापत्तेः । एतादृशार्थलाभायैव ज्ञान-पदम् । न च वन्हिव्याप्यधूमवत्पर्वतवान् अयं देश इति विशिष्टवैशिष्ट्या-वगाहिबुद्धौ अतिव्याप्तिः, समवायेन विशिष्टबुद्धिं प्रति समवायेन विशेषण-ज्ञानस्य कारणतया जन्यतायां जनकतायां च समवायसंबन्धावच्छिन्नत्वस-त्त्वादिति वाच्यम् । परामर्शजन्यत्वे सति हेत्वविषयकज्ञानत्वस्यैव लक्षणार्थ-त्वात् । तादृशविशिष्टवैशिष्ट्यावगाहिबुद्धेर्हेतुविषयकत्वान्नातिव्याप्तिः । तथा च परामर्शजन्यहेत्वविषयकज्ञानवृत्यनुभवत्वव्याप्यजातिमत्त्वं अनु-मितेर्लक्षणम् । एवं व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । एवमनुमितित्व-जातिमत्त्वमप्यनुमितेर्लक्षणम् ।

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः । तज्जन्यं "पर्वतो वन्हिमान्" इति ज्ञानमनुमितिः ।**

न्या०—अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे । व्या-प्तिविशिष्टेति । व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं चेति कर्मधारयः । अत्र विशिष्टपदस्य प्रकारतानिरूपकपरत्वात्, पक्षधर्मतायाः ज्ञान-

मित्यत्र षष्ठ्या विषयत्वबोधनात्, धर्मतापदस्य संबन्धार्थकत्वात्
कर्मधारयसमासेन समस्यमानपदार्थयोरभेदसंसर्गलाभाच्च व्याप्ति
कारकाऽभिन्नं यत्पक्षसंबन्धविषयकं ज्ञानं तत्परामर्श इति लभ्यते
एवं सति "धूमो वन्हिव्याप्यः, आलोकवान् पर्वतः" इत्याकारक
मूहालंबने परामर्शलक्षणमस्तीत्यतिव्याप्तिः, तद्वारणाय पक्ष
विशेष्यतानिरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या व्याप्ति
निष्ठा प्रकारता तच्छालिज्ञानं परामर्श इति निष्कर्षः। एवाह
परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम्।

दी०—परामर्शं लक्षयति । व्याप्तीति । व्याप्तिविषयकं
त्पक्षधर्मताज्ञानं स परामर्श इत्यर्थः। परामर्शमभिनीय दर्शयति
यथेति। अनुमितिमभिनीय दर्शयति । तज्जन्यमिति । परामर्श
जन्यमित्यर्थः।

गं०—अनुमितिलक्षणघटकीभूतो यः परामर्शस्तल्लक्षणमाचष्टे। व्या
तीत्यर्थः। घटकत्वं च तद्विषयिताव्यापकविषयिताकत्वम्। मूले व्याप्ति
विशिष्टेति। व्याप्त्या विशिष्टः व्याप्तिविशिष्टः व्याप्तिमानित्यर्थः। त
व्याप्तिविशिष्टश्चासौ पक्षधर्मश्चेति व्याप्तिविशिष्टपक्षधर्मः, तस्य भा
व्याप्तिविशिष्टपक्षधर्मत्वम्, तस्या ज्ञानमिति व्युत्पत्त्या व्याप्तिविशिष्टत्वस
नाधिकरणपक्षधर्मताविषयकनिश्चयत्वं लक्षणमिति लभ्यते। तच्च वन्हिव्या
धूमवान् ह्रदः इति भ्रमात्मकपरामर्शेऽव्याप्तम् तत्र पक्षधर्मताविशेष्य वि
शिष्टनिश्चयत्वाऽसत्वात् । एवं वन्हिव्याप्यह्रदत्ववान् ह्रद इति परा
चाऽव्याप्तम्, तत्र पक्षधर्मताविषयकनिश्चयत्वसत्त्वेऽपि पक्षधर्मत्वे व्याप्ति
विशिष्टत्वसामानाधिकरण्याभावात्। यदि च व्याप्तिविशिष्टश्च पक्षधर्म
व्याप्तिविशिष्टपक्षधर्मौ तयोर्भावः व्याप्तिविशिष्टपक्षधर्मता तस्याः ज्ञान
मितिव्युत्पत्त्या व्याप्तिविशिष्टत्वपक्षधर्मत्वोभयविषयकं ज्ञानमित्यर्थः, तदा

व्याप्तिवारणेऽपि वन्हिव्याप्यो धूमः आलोकवान् पर्वत इति ज्ञानेऽति-व्याप्तिरित्यत आह। **व्याप्तिविशिष्टं चेति**। तथा च विशिष्टपदस्य विषयोऽर्थः। व्याप्तिप्रकारकमित्यर्थः। प्रकारतासंबन्धेन व्याप्तिविशिष्टमिति यावत्। अथवा व्याप्त्या विशिष्टः व्याप्तिविशिष्टः हेतुः, व्याप्तिविशिष्टस्य पक्षधर्मता इति व्याप्तिविशिष्टपक्षधर्मता, तस्या ज्ञानमिति व्युत्पत्तिः। षष्ठ्यर्थो विषयकत्वम्, तथा च व्याप्तिविशिष्टविषयकपक्षधर्मताज्ञान-मित्यर्थ इति।

नन्वत्र धर्मतापदस्य वृत्तित्वार्थकत्वे व्याप्तिविशिष्टहेतुविशेष्यकपक्षवृत्ति-त्वप्रकारकज्ञानं परामर्श इत्यर्थो लभ्यते। वन्हिव्याप्यधूमः पर्वते "वन्हि-व्याप्यधूमः पर्वतवृत्तिः", इति ज्ञानस्यैव परामर्शत्वमायातम्, न तु वन्हि-व्याप्यधूमवान् पर्वत इति ज्ञानस्य, अस्य पर्वतवृत्तित्वाऽप्रकारकत्वादित्यत आह। **धर्मतापदस्य संबन्धार्थकत्वादिति**। तथा च साध्यव्याप्य-हेतु—पक्षोभयसंबन्धावगाहि ज्ञानं परामर्श इति मूलार्थः। एवं च वन्हि-व्याप्यधूमवान् पर्वत इति ज्ञानस्यापि लाभः। **परामर्शलक्षणमस्तीति**। तथा च तादृशसमूहालंबनज्ञानादनुमित्यापत्तिरिति भावः। **तद्वारणा-येति**। **अत्रेदं बोध्यम्**। अन्तराभासमानविषयतयोः केषांचिन्मते अभेदः, केषांचिन्मते अवच्छेद्याऽवच्छेदकभावः। यथा वन्हिव्याप्यधूमवान् पर्वत इति ज्ञानीयपर्वतनिष्ठविशेष्यतानिरूपितप्रकारता धूमेऽस्ति एवं वन्हिव्याप्ति-निष्ठप्रकारतानिरूपितविशेष्यताऽपि धूमेऽस्तीति तयोरभेदः इत्येकं मतम्, अवच्छेद्यावच्छेदकभावः इत्यपरम्। तथा च साध्यव्याप्तिनिष्ठप्रकारतानि-रूपितविशेष्यत्वावच्छिन्न"हेतुनिष्ठ"प्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालि ज्ञानम्, साध्यव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्न"हेतुनिष्ठ"प्रकार-तानिरूपितपक्षनिष्ठविशेष्यताशालि ज्ञानं वा परामर्शः। विशेष्यताप्रकार-तयोः परस्परं निरूप्यनिरूपकभावे विनिगमकाभावादाह। **पक्षनिष्ठेति**। तथा च पक्षनिष्ठविशेष्यतानिरूपिता या हेतुनिष्ठा प्रकारता तादृशप्रकारत्वा-वच्छिन्ना "तादृशप्रकारत्वाभिन्ना वा" या विशेष्यता तन्निरूपितव्याप्ति-

निष्ठप्रकारताशालिज्ञानमित्यर्थः । दीपिकायां । परामर्शमभिनीय दर्शयतीति । परामर्शलक्षणमुक्त्वा स्वरूपं दर्शयतीत्यर्थः । अनुमितिमभिनीय दर्शयतीति । अनुमितिलक्षणमुक्त्वा स्वरूपं दर्शयतीत्यर्थः ।

न्या०—अनुमितिपरामर्शयोर्विशिष्यकार्यकारणभावश्चेत्थम् पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसंबन्धावच्छिन्नवन्हित्वावच्छिन्नविधेयताकानुमितिं प्रति वन्हिव्याप्तिप्रकारतानिरूपिता या धूमत्वावच्छिन्ना प्रकारता तन्निरूपिता या पर्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः कारणम् । स च निर्णयः वन्हिव्याप्यधूमवान्पर्वत इत्याकारको बोध्यः ।

गं०—धूमत्वावच्छिन्ना प्रकारतेति । धूमत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना या प्रकारतेति यावत् । धूमत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वाभिन्नप्रकारतेति वाऽर्थः । तेन प्रकारतायां प्रकारतानिरूपितत्वविरहेऽपि न क्षतिः ।

अत्रेदं वक्तव्यम् । कार्यकारणभावो विषयनिष्ठप्रत्यासत्त्या आत्मनिष्ठप्रत्यासत्त्या च । आद्यो यथा विशेष्यतासंबन्धेन तत्पुरुषीयतद्विधेयकानुमितिं प्रति विशेष्यतासंबन्धेन तत्पुरुषीयतद्विधेयव्याप्यहेतुप्रकारकनिश्चयः कारणम् । विशेष्यस्य संसर्गतया भानेन विशेष्यस्य कार्यतावच्छेदककोटौ कारणतावच्छेदककोटौ वा न निवेशः । परन्तु तत्पुरुषीयत्वनिवेश आवश्यकः अन्यथा चैत्रस्य परामर्शात् मैत्रस्याऽनुमित्यापत्तेरिति ध्येयम् ।

द्वितीयो यथा समवायेनाऽनुमितिं प्रति समवायेन परामर्शः कारणम् अयमेव सामान्यकार्यकारणभावः । परन्तु वन्हिव्याप्यधूमवान् पर्वतः इति परामर्शोत्तरं घटवद्भूतलमित्यनुमित्यापत्तिवारणाय विषयनिवेश आवश्यकः । अयमेव विशिष्यकार्यकारणभावः । तत्प्रकारमाह । पर्वतत्वावच्छिन्नोद्देश्यतेत्यादिना । उद्देश्यत्वं च स्वरूपसंबन्धविशेषः । तच्च विशेष्यतानियतम्, पर्वते वन्हिरित्यत्र पर्वतेऽपि सत्वात्, किन्तु उद्देश्

मात्रवृत्तीति । इदमुपलक्षणम् । वन्हिव्याप्यधूमवान् पर्वत इति परामर्शा-दतीताऽनागतानुमितिवारणाय तत्तदनुमितिं प्रति तत्तत्परामर्शत्वेनाऽपि कारणत्वं वाच्यम् । एवं पर्वतो वन्हिमानित्यनुमितिं प्रति वन्हिव्याप्य-धूमवान् पर्वतः, वन्हिव्याप्याऽऽलोकवान् पर्वतः, वन्हिव्याप्येन्धनवान् पर्वत इति नाना परामर्शानां कारणतया परस्परजन्ये व्यभिचारवारणाय तत्तत्परामर्शाऽव्यवहितोत्तरानुमितिं प्रति तत्तत्परामर्शत्वेन कारणत्वम् । तथा च स्वाव्यवहितोत्तरत्व-स्वसामानाधिकरण्योभयसंबन्धेन तत्तत्परामर्शविशि-ष्टानुमितिं प्रति तत्तत्परामर्शः कारणमित्यन्यत्र विस्तरः ।

दी०—ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः, स्थाणुपुरुषसंशयान-न्तरं "पुरुषत्वव्याप्यकरादिमानयमिति" परामर्शे सति 'पुरुष एवेति' प्रत्यक्षजननात् । न च तत्राऽनुमितिरेवेति वाच्यम् । पुरुषं साक्षा-त्करोमीत्यनुव्यवसायविरोधादिति चेन्न । पक्षतासहकृतपरामर्शज-न्यत्वस्य विवक्षितत्वात् । सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । साध्यसिद्धिरनुमितिप्रतिबन्धिका । सिद्धिसत्त्वेऽपि अनुमि-नुयाम् इतीच्छायामनुमितिदर्शनात्, सिषाधयिषा उत्तेजिका । तत-श्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत् सिषाधयिषावि-रहविशिष्टसिद्ध्यभावस्याऽप्यनुमितिकारणत्वम् ।

गं०—परामर्शजन्यं ज्ञानमिति यथाश्रुतमाक्षिपति । नन्विति । संशयोत्तरप्रत्यक्षे इति । अयं स्थाणुर्वा पुरुषो वेति संशयोत्तरं "अयं पुरुष" इति प्रत्यक्षे इत्यर्थः । इदमुपलक्षणम् । अयं न पुरुष इति विपरीतनिश्चयोत्तरप्रत्यक्षेऽपि बोध्या । संशयसत्त्वे "विपरीतनिश्चयसत्त्वे वा" सत्यपि सन्निकर्षादौ व्याप्यदर्शनं विना प्रत्यक्षनिश्चयानुत्पत्त्या प्रत्यक्षं प्रत्यपि व्याप्यदर्शनस्य हेतुत्वेन प्रत्यक्षस्याऽपि परामर्शजन्यत्वादतिव्याप्तिः । तत्रेति । प्रात्यक्षिकपरामर्शोत्तरमित्यर्थः । अनुमितिरेवेति । अनुमिति-

रेवोत्पद्यते न प्रत्यक्षमित्यर्थः। तथाच संशयोत्तरप्रत्यक्षे अनुमितिसामग्र्या अपि सत्त्वेन अनुमितिरेवेति लक्ष्यतयाऽतिव्याप्तिरिष्टैवेति भावः। अनुव्यवसायविरोधादिति। संशयोत्तरप्रत्यक्षस्याऽनुमितित्वोपगमे तदुत्तरं साक्षात्करोमीति प्रतीतिर्न स्यात्, किन्तु अनुमिनोमीति स्यादिति भावः। इदमुपलक्षणम्। समानविषयकानुमितिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वेन पुरुषत्वे चक्षुःसंयुक्तसमवायरूपलौकिकसन्निकर्षसत्त्वात् पुरुषत्वस्य प्रत्यक्षमेव जायते इत्यपि बोध्यम्। पक्षतासहकृतेति। तथा च पक्षताजन्यत्वे सति परामर्शजन्यत्वमनुमितेर्लक्षणम्। तथा च तादृशप्रत्यक्षस्य परामर्शजन्यत्वेऽपि पक्षताजन्यत्वाभावान्नातिव्याप्तिः। पुरुषत्वस्यानुमितिर्मे जायतामितीच्छासत्त्वे तु अनुमितिरेव भवति। समानविषयकानुमितिं प्रति "अनुमित्साविरहविशिष्ट" प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वादिति ध्येयम्। अनुमितिं प्रति साध्यनिश्चयः प्रतिबन्धकः। सिद्धिसत्त्वेऽपि सिषाधयिषासत्त्वेऽपि अनुमित्युत्पादात् सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणम्। सिद्धिः साध्यनिश्चयः। उत्तेजिकेति। उत्तेजकत्वं च प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वम्। प्रतिबन्धकत्वं च कारणीभूताभावप्रतियोगित्वम्। एतत्तत्त्वमग्रे वक्ष्यते।

**यत्र यत्र धूमस्तत्र तत्राऽग्निरिति साहचर्यनियमो व्याप्तिः।**

न्या०—यत्र यत्रेति। यत्रपदवीप्सावशाद् धूमाधिकरणे यावति वह्निमत्त्वलाभात्। यावत्पदमहिम्ना धूमव्यापकत्वं वन्हौ लब्धम्। तदेव स्पष्टयति साहचर्यनियम इति। एतदर्थस्तु नियतसाहचर्यं व्याप्तिरिति। नियतत्वं व्यापकत्वम्। साहचर्यं नाम सामानाधिकरण्यम्। तथा च धूमव्यापकवन्हिसामानाधिकरण्यं व्याप्तिरित्यर्थः। अत्र धूमव्यापकत्वं नाम धूमसमानाधिकरणाऽत्यन्ताभावप्रतियोगि-

तानवच्छेदकधर्मवत्त्वम्। तादृशधर्मो वन्हौ वन्हित्वम्। तथाहि। धूमाधिकरणे पर्वतमहानसचत्वरादौ वर्त्तमानोऽभावः घटत्वावच्छिन्न-प्रतियोगिताकाभावो न तु वन्हित्वावच्छिन्नप्रतियोगिताकोऽभावः, कुतः, पर्वतादौ वन्हेः सत्वात्, एवं सति धूमाधिकरणे पर्वतादौ वर्त्तमानस्य घटाभावस्य प्रतियोगितावच्छेदकं घटत्वम्, पटाभावस्य प्रतियोगितावच्छेदकं पटत्वम्, अनवच्छेदकं वन्हित्वम्, तादृशं वन्हित्वं वन्हौ वर्त्तते, अतो धूमव्यापकत्वं वन्हौ वर्त्तते तथा च धूमव्यापकवन्हिसामानाधिकरण्यं व्याप्तिरिति फलितमिति। इयमन्वयव्याप्तिः सिद्धान्तानुसारेण।

दी०—व्याप्तेर्लक्षणमाह। यत्रेति। यत्रधूमस्तत्राग्निरिति व्याप्तेरभिनयः। साहचर्यनियम इति लक्षणम्। साहचर्यं सामानाधिकरण्यम्। तस्य नियमः, हेतुसमानाधिकरणात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः।

गं०—सहचरत इति सहचरौ समानाधिकरणौ, एकाधिकरणवृत्ती, तयोर्भावः साहचर्यं सामानाधिकरण्यम्, एकाधिकरणवृत्तित्वमिति यावत्। यत्र यत्र धूमस्तत्र तत्राग्निरिति। यत्र यत्र हेतुस्तत्र तत्र साध्यमित्यर्थः व्याप्तेरभिनय इति। व्याप्तेः स्वरूपमित्यर्थः। व्याप्तिलक्षणस्य सद्धेतुमात्रं लक्ष्यम्। व्याप्तिपक्षधर्मताविशिष्टो हेतुः सद्धेतुः। व्याप्तिलक्षणस्याऽसद्धेतुमात्रं अलक्ष्यम्। असद्धेतुश्च व्याप्तिपक्षधर्मत्वाभाववान् हेतुः। तेन धूमवान् वन्हेरित्यत्र वन्हौ पक्षधर्मतासत्वेऽपि व्याप्त्यभावान्न सद्धेतुत्वम्, ह्रदो वन्हिमान् धूमादित्यत्र धूमे व्याप्तिसत्वेऽपि पक्षधर्मताविरहान्न सद्धेतुत्वम्। व्याप्तिलक्षणमाह। दीपिकायां। हेतुसमानाधिकरणेत्यादि। हेत्वधिकरणवृत्तीत्यर्थः। इदं चाऽत्यन्ताभावविशेषणम्। तथा च वन्हिमान् धूमादित्यत्र हेतुर्धूमः हेत्वधिकरणं पर्वतादिः—तत्र वर्त्तते योऽत्यन्ताऽभावः

"धूमाधिकरणे वन्हिर्नास्तीति प्रतीतिसाक्षिकोऽभावो गृहीतुं नैव शक्यते" किन्तु तदन्यो घटो नास्तीतिप्रतीतिसाक्षिकोऽभावः तादृशाभावस्य प्रतियोगी घटः अप्रतियोगी साध्यो वन्हिस्तत्सामानाधिकरण्यं धूमे इति लक्षणसमन्वयः।

धूमवान् वन्हेरित्यादौ तु हेतुर्वन्हिः हेत्वधिकरणमयो गोलकम्, तत्र वर्त्तमानो योऽत्यन्ताभावः धूमोनास्तीति प्रतीतिविषयीभूतोऽभावोऽपि गृहीतुं शक्यते तादृशाभावस्य प्रतियोगी एव धूम इति नातिव्याप्तिः।

न च वन्हिमान् धूमादित्यत्र हेतुर्धूमः हेत्वधिकरणं पर्वतः तत्र वर्त्तमानो योऽत्यन्ताऽभावः महानसीयवन्ह्यभावः वन्हिघटोभयाभावश्च तादृशाभावस्य प्रतियोगी एव वन्हिरित्यव्याप्तिरिति वाच्यम्। हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यस्य व्याप्तिपदार्थत्वात्। समन्वयप्रकारो न्यायबोधिन्याम्।

इदमत्रावधातव्यम्। पक्षे यो धर्मस्तिष्ठति स धर्मः पक्षतावच्छेदको धर्मः। यथा पर्वतो वन्हिमानित्यत्र पर्वतत्वम्। एवं साध्ये यो धर्मस्तिष्ठति स धर्मः साध्यतावच्छेदको धर्मः। यथा तत्रैव वन्हित्वम्। येन संबन्धेन साध्यं पक्षे तिष्ठति स संबन्धः साध्यतावच्छेदकसंबन्धः यथा तत्रैव संयोगः। हेतौ यो धर्मस्तिष्ठति स धर्मः हेतुतावच्छेदको धर्मः। यथा तत्रैव धूमत्वम्। येन संबन्धेन हेतुः पक्षे तिष्ठति स संबन्धः हेतुतावच्छेदकसंबन्धः इति। यथा तत्रैव संयोगः।

न्या०—पूर्वपक्षव्याप्तिस्तु साध्याभाववदवृत्तित्वम्। साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावो व्याप्तिः। तच्च केवलान्वयिनि अव्याप्तमिति।

गं०—साध्याभाववदवृत्तित्वमिति। साध्यस्याऽभावः साध्याभावः स यत्रास्तीति साध्याभाववान्, साध्याभाववतो न वृत्तिर्यस्येति

साध्याभाववदवृत्ती तस्य भावः साध्याभाववदवृत्तित्वम्। तथा च साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति फलितम्। वन्हिमान् धूमादित्यत्र साध्यो वन्हिः साध्याभावो वन्ह्यभावः तदधिकरणं ह्रदादिः। तन्निरूपितवृत्तिता मीन-शैवालादौ वृत्तित्वाभावो धूमेऽस्तीति लक्षणसमन्वयः। धूमवान् वन्हेरित्यत्र साध्यो धूमः। साध्याभावो धूमाभावः। तदधिकरणमयो गोलकं तन्निरूपितवृत्तिता एव वन्हौ अस्ति वृत्तित्वाभावो नास्तीति नातिव्याप्तिः।

ननु साध्याभावाधिकरणनिरूपितवृत्तित्वाभाव इत्यत्र वृत्तित्वाभाव इत्यस्य यदि वृत्तित्वप्रतियोगिकाभावोर्थः, तदा धूमवान् वन्हेरित्यादावतिव्याप्तिः, धूमाभावाधिकरणाऽयोगोलकनिरूपितवृत्तित्वस्य वन्हौ सत्त्वेऽपि तादृशवृत्तित्वजलत्वोभयाभावसत्त्वात्, "एकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः" तादृशोभयाभावस्याऽपि वृत्तित्वप्रतियोगिकत्वात्। एवं धूमाभावाधिकरणह्रदनिरूपितवृत्तित्वाभावमादायाऽपीत्यत आह। **वृत्तितात्वावच्छिन्नप्रतियोगिताकाभाव इति।** वृत्तितात्वेतरधर्मानवच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। एवं च तादृशवृत्तित्वजलत्वोभयाभावमादाय नातिव्याप्तिः। तादृशोभयाभावस्य प्रतियोगि वृत्तित्वं जलत्वं च। प्रतियोगितावच्छेदकं वृत्तितात्वं जलत्वत्वं उभयत्वं च। प्रतियोगिता "वृत्तित्वनिष्ठा" त्रितयधर्मावच्छिन्ना, तथा च प्रतियोगिताया वृत्तितात्वेतरेण जलत्वत्वादिनाऽवच्छिन्नतया वृत्तितात्वेतरधर्मानवच्छिन्नत्वविरहात्। एवं ह्रदनिरूपितवृत्तित्वाभावस्यापि वारणम्। तादृशाभावीयप्रतियोगिताया वृत्तितात्वेतरेण ह्रदेनाऽवच्छिन्नत्वात्। ह्रदस्याऽपि निरूपितत्वसंबन्धेन "वृत्तित्वरूप"प्रतियोगिविशेषणतया प्रतियोगितावच्छेदकत्वादिति।

वन्हिमान् धूमादित्यत्र वन्ह्यभावाधिकरणह्रदनिरूपितकालिकसंबन्धावच्छिन्नवृत्तिताया एव धूमे सत्त्वेन वृत्तित्वाभावविरहादव्याप्तिः। एवं वन्ह्यभावाधिकरणं यथा ह्रदः तथा धूमावयवोऽपि तन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तितायाश्च धूमे सत्वात् अतो वृत्तितायां हेतुतावच्छेदक-

संबन्धावच्छिन्नत्वं निवेशितम्। एवं च ह्रदनिरूपितसंयोगसंबन्धाव- च्छिन्नवृत्तितायाः, धूमावयवनिरूपितसंयोगसंबन्धावच्छिन्नवृत्तितायाश्च धूमे विरहान्नाऽव्याप्तिः।

साध्याभावोऽपि यदि साध्यनिष्ठप्रतियोगिताकोऽभावस्तदा वह्निमान् धूमादित्यादौ महानसीयवह्न्यभावं वह्निघटोभयाभावं चाऽऽदाय, एवं समवायेन वह्न्यभावं चाऽऽदायाऽव्याप्तिरतः प्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वं साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं च निवेशनीयमित्यन्यत्र विस्तरः। केवलान्वयिनि। इदं वाच्यं ज्ञेयत्वादित्यत्र। अव्याप्तमिति। साध्याभावाऽप्रसिद्ध्येति शेषः। इदमुपलक्षणम्। वह्निमान् धूमादित्यत्र वह्न्यभावाधिकरणह्रदनिरूपितकालिकसंबन्धावच्छिन्नवृत्तितायाः धूमे सत्वादव्याप्तिवारणाय वृत्तितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशस्यावश्यकतया सत्तावान् द्रव्यत्वादित्यत्र सत्ताभावाधिकरणसामान्यादिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाऽप्रसिद्ध्याऽव्याप्तिर्बोध्येयम्।

## व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता।

दी०—पक्षधर्मतास्वरूपमाह। व्याप्यस्येति।

गं०—मूले व्याप्यस्येति। व्याप्तिविशिष्टस्य "व्याप्याश्रयस्य" धूमादिरूपहेतोरित्यर्थः। पर्वतादिवृत्तित्वं पक्षसंबन्धः स एव पक्षधर्मतेत्युच्यते इत्यर्थः। तथा च पक्षो हेतुमानिति ज्ञानं पक्षधर्मता ज्ञानम्। यथा पर्वतो धूमवानिति ज्ञानं। साध्यव्याप्यो हेतुरिति व्याप्तिज्ञानम्, यथा वह्निव्याप्यो धूम इति ज्ञानम्। साध्यव्याप्यहेतुमान् पक्ष इति ज्ञानं परामर्शः, यथा वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानम्। पक्षः साध्यवानित्यनुमितिः। यथा पर्वतो वह्निमानिति।

सन्दिग्धसाध्यवान् पक्षो भवति। मतुवन्तं साध्यं भवति। पञ्चम्यन्तो हेतुर्भवति। निश्चितसाध्यवान् सपक्षो भवति। निश्चितसाध्याभाववान् विपक्ष इति।

अनुमानं द्विविधम् स्वार्थं परार्थं च। तत्र स्वार्थं स्वानुमितिहेतुः। तथाहि स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्निरिति' तदनन्तरं 'वन्हिव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते'। अयमेव लिङ्गपरामर्शः उच्यते। तस्मात् 'पर्वतो वन्हिमान्' इति ज्ञानमनुमितिरुत्पद्यते। तदेतत् स्वार्थानुमानम्।

न्या०—अनुमानं विभजते—स्वार्थमिति। स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम्।

दी०—अनुमानं विभजते—अनुमानमिति। तद् द्वैविध्यं दर्शयति—स्वार्थमित्यादिना—तत्रेति। उभयोर्मध्ये इत्यर्थः। स्वार्थानुमितिं दर्शयति। स्वयमेवेति। भूयोदर्शनेनेति।

गं०—अनुमानं विभजते इति। अत्र विपूर्वकभजधातोः अवान्तरविरुद्धधर्मप्रकारकज्ञानानुकूलव्यापारोऽर्थः आख्यातार्थः कृतिः। अनुमानमित्यत्र द्वितीयार्थो विशेष्यत्वम्। तस्य धात्वर्थैकदेशे ज्ञानेऽन्वयः। एवं च अनुमानविशेष्यकअनुमानत्वावान्तरविरुद्धधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान्मूलकार इति बोधः। मूले स्वार्थं परार्थं चेति। तथा च अनुमितिस्तावद् द्विविधा स्वार्थानुमितिः, परार्थानुमितिश्च तत्र स्वार्थानुमितिकरणं स्वार्थानुमानम् परार्थानुमितिकरणं परार्थानुमानम्। तदेवाह स्वानुमितीति। स्वार्थानुमितिरित्यर्थः। स्वस्य अर्थः प्रयोजनं "साध्यसंशयनिवृत्तिरूपं" यतः सा

इति व्युत्पत्त्या स्वीयसंशयनिवृत्तिफलिकाऽनुमितिः स्वार्थाऽनुमितिरिति यावत्। सहचारज्ञानप्रयोज्यं यदनुमितिकरणं तदेव स्वार्थानुमानम्। पंचावयववाक्याऽप्रयोज्यव्याप्तिज्ञानं स्वार्थानुमानमिति न्यायबोधिनी कृतः। मूले स्वयमेवेति। अनुमित्सावान् कश्चित्पुरुष एवेत्यर्थः। अस्य पर्वतसमीपं गत इत्युत्तरेणाऽन्वयः। भूयोदर्शनेनेति। यावत्सु धूमाधिकरणेषु वन्हिदर्शनेनेत्यर्थः। भूयोदर्शनेन "पर्वते धूमोऽस्तु वन्हिर्मास्तु" इति व्यभिचारशंकानिरासः। यत्र धूमस्तत्राग्निरिति। वन्हिव्याप्यो धूम इत्याकारिकामित्यर्थः। महानसादौ व्याप्तिं गृहीत्वेति। महानसादिरूपाधिकरणविशेषे व्याप्तिप्रत्यक्षोत्तरमित्यर्थः। पर्वतसमीपं गत इति। प्राप्तवानित्यर्थः। तद्गते। पर्वतगते, पर्वतवृत्तिनि इति यावत्। सन्दिहानः इति। पर्वतवृत्तिवन्हिविषयकसन्देहवानित्यर्थः। पर्वते धूमं पश्यन्निति। पर्वतविशेष्यकधूमप्रकारकचाक्षुषवानित्यर्थः। पर्वतो धूमवानित्याकारकज्ञानवानिति यावत्। इदमेव पक्षधर्मताज्ञानम्। तादृशप्रत्यक्षाऽव्यवहितोत्तरक्षणे व्याप्तिं स्मरतीति। वन्हिव्याप्यो धूम इत्याकारकव्याप्तिविषयकस्मृतिमान् भवतीत्यर्थः। तदनन्तरं व्याप्तिस्मरणानन्तरम्। अयमेवेति। लिङ्गपरामर्शमपेक्ष्य पुल्लिंगनिर्देशः। तस्मादिति। वन्हिव्याप्यधूमवानयं पर्वत इत्याकारकलिङ्गपरामर्शादित्यर्थः। तदेतदिति। तादृशलिंगपरामर्श इत्यर्थः। स्वार्थानुमानमपेक्ष्य नपुंसकलिंगनिर्देशः।

दी०—ननु पार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि मण्यादौ व्यभिचारोपलब्धेर्भूयोदर्शनेन कथं व्याप्तिग्रह इति चेन्, न। व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात्। व्यभिचारज्ञानं द्विविधम्। निश्चयः शङ्का च। तद्विरहः क्वचित्तर्कात्। क्वचित् स्वतः सिद्ध एव। धूमाऽग्न्योर्व्याप्तिग्रहे कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्त्तकः।

गं०—स्वयमेव भूयोदर्शनेनेति यथाश्रुतमूलात् भूयोदर्शनमात्रस्य

व्याप्तिग्रहे कारणत्वमित्याशयेनाऽशंकते नन्विति। लोहलेख्यं पृथिवीत्वादित्यत्र यत्र यत्र पृथिवीत्वं तत्र तत्र लोहलेख्यत्वमिति शतशः सहचारदर्शनेऽपि हीरक[1]मण्यन्तर्भावेन व्यभिचारनिश्चयरूपप्रतिबन्धकसद्भावाद् व्याप्तिनिश्चयो न संभवतीति। कथं व्याप्तिग्रह इति। व्याप्तिज्ञानं न भूयोदर्शनजन्यमित्यर्थः। लोहलेख्यत्वादौ इत्यत्रादि पदात् धूमवान् वन्हेरित्यत्र वह्निधूमयोः परिग्रहः। तयोः शतशः सहचारदर्शनेऽपि अयोगोलकान्तर्भावेण व्यभिचारनिश्चयाद् व्याप्तिग्रहानुत्पत्तेः भूयोदर्शनस्य न व्याप्तिग्रहहेतुत्वसंभव इति भावः। व्यभिचारज्ञानविरहसहकृतेति। तथा च व्यभिचारज्ञानाऽभावः सहचारनिश्चयश्चैतद्द्वयं व्याप्तिग्रहे कारणम्, न केवलं सहचारग्रह इति भावः। सहचारः, सामानाधिकरण्यम्, तद्ज्ञानं विशेषणज्ञानविधया व्याप्तिग्रहे कारणम्। व्याप्तिज्ञाने व्यभिचारज्ञानस्य प्रतिबन्धकतया प्रतिबन्धकाभावविधया व्यभिचारज्ञानाभावः कारणम्। संशयनिश्चयसाधारणव्यभिचारज्ञानत्वेन प्रतिबन्धकतेत्याह। निश्चयः शंकाचेति। तद्विरहः। व्यभिचारशंकाविरहः। व्यभिचारज्ञानोत्पादकसामग्रीसमवधानकाले आह। तर्कादिति। तर्कप्रयोज्य इत्यर्थः। पर्वते धूमः अस्तु वन्हिर्मास्तु इति व्यभिचारशंका यदि भवेत्तदा तर्कादेव निवर्तनीया, धूमो यदि वन्हिव्यभिचारी स्यात्तदा वन्हिजन्यो न स्यादित्याकारकतर्कः मणिमन्त्रादिन्यायेन व्यभिचारसंशयप्रतिबन्धक इति भावः। क्वचिदिति। व्यभिचारज्ञानोत्पादकसामग्रीविरहस्थले स्वतसिद्ध एवेति। प्रतिबन्धकीभूतव्यभिचारज्ञानोत्पादकसामग्रीविरहप्रयोज्य एवेत्यर्थः। धूमाऽग्न्योर्व्याप्तिग्रहे इति। वन्हिव्याप्यो धूम इत्याकारकव्याप्तिग्रहे इत्यर्थः। कार्यकारणभावभङ्गप्रसंगलक्षणस्तर्कः। प्रसंगः प्रसक्तिः संपादनमिति यावत्। कार्यकारणभावभङ्गसंपादनमेव लक्षणं प्रयोजनं यस्य स इत्यर्थः। स च उक्त एव। व्यभिचारशंकानिवर्तकः। व्याप्तिग्रहप्रतिबन्धकीभूतव्यभिचारशंकाप्रतिबन्धक इत्यर्थः।

टि०—१ हीरकादिमणेः पृथिवीत्वाभिप्रायेण।

दी०—ननु सकलवन्हिधूमयोरसन्निकर्षात् कथं व्याप्तिग्रह इति चेन्न । वन्हित्वधूमत्वरूपसामान्यप्रत्यासत्त्या सकलवन्हिधूमज्ञानसंभवात् । तस्मादिति । लिंगपरामर्शादित्यर्थः ।

गं०—ननु महानसे वन्हिधूमयोर्व्याप्तिग्रहकाले धूमसामान्ये व्याप्तिनिश्चये सत्येव पर्वते धूमदर्शनोत्तरं वन्हिव्याप्यो धूम इति स्मरणात् वन्हिव्याप्यधूमवान् पर्वत इति परामर्शः संभवति, महानसे व्याप्तिप्रत्यक्षदशायां लौकिकसन्निकर्षाभावाद् धूमान्तरस्य "प्रत्यक्षाऽसंभवेन धूमसामान्ये व्याप्तिनिश्चयो न संभवति । पर्वतीयधूमे च व्याप्तेरननुभूततया कथं व्याप्तिस्मरणम्, कथं वा परामर्श इत्याशंकते नन्वित्यादिना । सकलवन्हिधूमयोरिति । सकलवन्हेः सकलधूमस्य चेत्यर्थः असन्निकर्षात् । चक्षुःसंयोगाभावात् । कथं व्याप्तिग्रह इति । वन्हिव्याप्यो धूम इत्याकारक व्याप्तिग्रहः कथमुत्पद्यते इत्यर्थः । इदमुपलक्षणम् । महानसीयधूमे वन्हिव्याप्ति निश्चितत्वात्, अन्य धूमस्य चाऽनुपस्थितत्वात् धूमो वन्हिव्याप्यो नवेति संशयोप्यनुपपन्न इत्यपि बोध्यम् । लौकिकसन्निकर्षाभावेऽपि सामान्यलक्षणाप्रत्यासत्तिरूपाऽलौकिकसन्निकर्षबलेन वन्हित्वेन निखिलवन्हीनां धूमत्वेन निखिलधूमानां वन्हिसामानाधिकरण्यत्वेन निखिलसमानाधिकरण्यस्य च प्रत्यक्षसंभवात्, पर्वतीयधूमेऽपि व्याप्तेर्गृहीतत्वेन धूमदर्शनेन व्याप्तिस्मरणसंभवान्नानुपपत्तिः परामर्शस्येति समाधत्ते । वन्हित्वधूमत्वेति ।

यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम् । यथा 'पर्वतो वन्हिमान् धूमवत्वात् । यो यो धूमवान् स सोऽग्निमान् । यथा महानसम् । तथा चाऽयम् । तस्मात्तथा । अनेन प्रतिपादिताल्लिङ्गात् । परोऽप्यग्निं प्रतिपद्यते ।

न्या०—न्यायप्रयोज्यानुमानं परार्थानुमानम्। न्यायत्वं च प्रतिज्ञादिपंचकसमुदायत्वम्[1]।

दा०—परार्थानुमानमाह यत्त्विति। यच्छब्दस्य 'तत् परार्थानुमानम्' इति तच्छब्देनाऽन्वयः। पञ्चावयववाक्यमुदाहरति—यथेति।

गं०—परार्थानुमानमाहेति। परस्य प्रतिवादिनः अर्थः प्रयोजनं 'साध्यसंशय निवृत्तिरूपं साध्यानुमितिरूपं वा' यस्मात्, तत्, परार्थम्। अथवा परपदं संशयभिन्नार्थकं तथा च परः "संशय भिन्नः" अर्थः प्रयोजनं यस्मादिति विग्रहः परार्थं च तदनुमानं चेति परार्थानुमानम् तथा च परार्थानुमानविषयकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इति बोधः। मूले यत्त्विति। पंचावयववाक्यमित्यनेनाऽन्वयः। तत् पञ्चावयववाक्यम्, परार्थानुमानमित्यर्थः। ननु परार्थाऽनुमितिकरणं परार्थाऽनुमानम्। तच्च लिङ्गपरामर्श एव। "तस्माल्लिंगपरामर्शोऽनुमानम्" इति। स्वयमेव वक्ष्यति एवं च पंचावयववाक्यस्याऽनुमानत्वकथनमसंगतमिति चेन्न। परार्थानुमानमित्यत्र न कर्मधारयः किन्तु परार्थमनुमानं यस्मादिति बहुव्रीहिः। एवं च परार्थानुमानमित्यस्य परार्थानुमानजनकमित्यर्थः। अथवा यदिति लुप्तचतुर्थीकमव्ययम्, यदर्थमित्यर्थः। यत्पदार्थः परामर्शः यदर्थं पञ्चावयववाक्यं प्रयुंक्ते तत्परार्थाऽनुमानमित्यर्थः वस्तुतः तदिति लुप्तपंचमीकमव्ययम्। प्रयोज्यत्वं पंचम्यर्थः पञ्चावयववाक्यप्रयोज्यमित्यर्थः तदेवाऽह न्यायबोधिन्यां। न्यायप्रयोज्यानुमानमिति। प्रतिज्ञादिपंचवाक्यैः तत्तद्वाक्यार्थविषयकं ज्ञानं जन्यते तेन च धूमविशेष्यकव्याप्तिप्रकारकं ज्ञानं जन्यते तेन च परामर्श उत्पाद्यते इति न्यायस्य "प्रतिज्ञादिपंचवाक्यात्मकसमुदायस्य" परामर्शप्रयोजकता। प्रतिज्ञादिपंचकसमुदायत्वमिति। उचितानुपूर्वीकप्रतिज्ञादिपंचक-

---

टि०—[1] पञ्चावयववाक्यमित्यनेन पञ्च अवयवाः यस्य वाक्यस्य तदिति व्युत्पत्या एतादृशार्थलाभः।

समुदायत्वमिति यावत् । उचितानुपूर्वी च प्रतिज्ञोत्तरहेतूत्तरोपनयोत्तरनिगमनत्वरूपा । एवं च यादृशयादृशानुपूर्व्यवच्छिन्ने न्यायव्यवहारः। तादृशतादृशानुपूर्वीमत्वं न्यायत्वमिति तत्वम् ।

मूलार्थस्तु **स्वयमेव** । अनुमितिमानेव । **धूमादग्निमनुमाय**। धूमलिंगकवन्ह्यनुमित्युत्तरमित्यर्थः । **परं प्रतिपत्यर्थमिति** । परं पुरुषान्तरं । **प्रतिपत्यर्थं**। ज्ञानायेति यावत् । एवं चाऽनुमितिमता पुरुषेण "पुरुषान्तरस्याऽप्यनुमितिर्भवतु इतीच्छया" प्रयुक्तं यत्पञ्चावयववाक्यं तत्प्रयोज्यानुमानं परार्थानुमानमित्यर्थः । प्रतिज्ञादिस्वरूपमाह **पर्वतो वन्हिमानिति** । अत्र वन्हिमदभिन्नः पर्वत इति बोधः । **धूमादिति**। अत्र धूमपदस्य धूमज्ञाने लक्षणा । पंचम्याः ज्ञाप्यत्वे । धूमज्ञानजन्यज्ञानविषयत्वमिति बोधः । **यो य इति** । अत्र द्विरुक्तयच्छब्दसमभिव्याहृतवन्हिपदस्य धूमव्यापकवन्हौ लक्षणा । द्विरुक्तयत्पदं महासत्व-महानसान्यत्वादिरूपेण सकलहेत्वधिकरणोपस्थापकम् । तत्पदमपि तादृशहेत्वधिकरणोपस्थापकम् । एवं च महानसं धूमवद् धूमव्यापकवन्हिमच्च । महानसान्यं धूमवद् धूमव्यापकवन्हिमच्चेति बोधः । एवं च धूमवति धूमव्यापकवन्हिभाने धूमव्यापकवन्हिसमानाधिकरणो धूम इति पर्यवसितो बोधः। **तथा चाऽयमिति**। **तथा** वन्हिव्याप्यधूमवान् । **अयं च**। पर्वतश्च । तथा च वन्हिव्याप्यधूमवदभिन्नः पर्वत इति बोधः । **तस्मात्तथेति** । **तस्मात्**। वन्हिव्याप्यधूमात् । **तथा**। वन्हिमान् । उपनयस्थाऽयमित्यनुषंजनीयम् । एवं च वन्हिव्याप्यधूमज्ञानज्ञाप्यवन्हिमदभिन्नः पर्वत इति बोधः । परार्थानुमानमुपसंहरति । **अनेनेति** । पंचावयववाक्येन । **प्रतिपादितात्**। प्रतिपत्तिविषयात् । न्यायप्रयोज्यादिति यावत् । **लिंगादिति**। लिङ्गपरामर्शादित्यर्थः । **परोऽपि**। स्वसमीपवर्त्तिपुरुषोऽपि । **अग्निं प्रतिपद्यते इति**। द्वितीयार्थो विषयित्वम् । धात्वर्थश्च ज्ञानं तच्चाऽनुमितिरूपम् । आख्यातार्थ आश्रयत्वम् । तथा च वन्हिविधेयकानुमितिमान् परोऽपि भवतीत्यर्थः ।

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। पर्वतो वन्हिमानिति प्रतिज्ञा। धूमवत्वादिति हेतुः। यो यो धूमवान् स स वन्हिमान् यथा महानसमित्युदाहरणम्। तथा चाऽयमित्युपनयः। तस्मात्तथेति निगमनम्।**

दी०—अवयवस्वरूपमाह। प्रतिज्ञेति। उदाहृतवाक्येषु प्रतिज्ञादिविभागमाह। पर्वतो वन्हिमानिति। साध्यवत्तया पक्षवचनं प्रतिज्ञा। पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं हेतुः। व्याप्तिप्रतिपादकं वचनमुदाहरणम्। व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः। हेतुसाध्यवत्तया "पक्षप्रतिपादकं" वचनं निगमनम्। पक्षज्ञानं प्रतिज्ञाप्रयोजनम्। लिङ्गज्ञानं हेतुप्रयोजनम्। व्याप्तिज्ञानमुदाहरणप्रयोजनम्। पक्षधर्मज्ञानमुपनयप्रयोजनम्। अबाधितत्वादिकं निगमनप्रयोजनम्।

गं०—अवयवस्वरूपमाहेति। अवयववानाहेति यावत्। अवयवविषयकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। अवयवत्वं च न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्। मूले प्रतिज्ञादिलक्षणस्याऽनुक्तत्वात्स्वयं तल्लक्षणान्याह। साध्यवत्तयेति। साध्यवतावेति शेषः। अन्यथा पर्वतोवन्हिमानिति प्रतिज्ञायामव्याप्त्यापत्तेः। साध्यप्रकारकं साध्यवत्त्वप्रकारकं वेत्यर्थः। तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबोधजनकवाक्यं प्रतिज्ञेति पर्यवसितम्। पंचम्यन्तेति। पञ्चम्यन्तत्वे सति लिंगप्रतिपादकत्वं हेतुत्वमित्यर्थः। लाक्षणिकपञ्चम्यन्तपदत्वमिति यावत्। व्याप्तिप्रतिपादकमिति। व्याप्यवद्विशेष्यकव्यापकवत्प्रकारकाऽभेदसंसर्गक-

बोधजनकवाक्यत्वमित्यर्थः । व्याप्तिविशिष्टेति । पक्षतावच्छेदकावच्छिन्नवि-शेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारताशालिबोधजनकवाक्यमित्यर्थः । हेतु-साध्यवत्तयेति । तथा च व्याप्तिपक्षधर्मताविशिष्टहेतुविशिष्टहेतुत्वान्वित-साध्यस्य पक्षे वैशिष्ट्यावगाहिबोधजनको न्यायावयवो निगमनमित्यर्थः । पक्षधर्मज्ञानमिति । पक्षवृत्तित्वज्ञानार्थमित्यर्थः । अबाधितत्वादिक-मिति । आदिना असत्प्रतिपक्षितत्वपरिग्रहः । अबाधितत्वपदस्य अबाधि-तत्वप्रतिपत्तौ लक्षणा । अबाधितत्वादेर्निगमनप्रयोज्यत्वाभावादिति ध्येयम् ।

**स्वार्थानुमितिपरार्थाऽनुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् ।**

दी०—अनुमितिकरणमाह स्वार्थेति ।

गं०—अनुमितिकरणमाहेति । अनुमितिकरणस्वरूपमाहेत्यर्थः । मूले । स्वार्थेति । स्वार्थानुमितौ परार्थाऽनुमितौ चेत्यर्थः । लिङ्गपरामर्शएवेति । लिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानमेवेत्यर्थः । एवकारेण लिङ्गस्य कारणत्वव्य-वच्छेदः । तत्राऽनुपपत्तिः स्वयमेवदास्यते अत्रेदं बोध्यम् । करणं द्विविधम् । व्यापारवदसाधारणं कारणं करणमित्येकम् । अपरञ्च फलाऽयोगव्यवच्छिन्नं कारणं करणम् । तत्राऽऽद्यपक्षे व्याप्तिज्ञानमेव करणम् । ननु परामर्शस्तत्र व्यापाराभावात् । द्वितीयमते परामर्श एव करणमिति ध्येयम् ।

दी०—ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेवाऽनुमितिसंभवे विशिष्टपरामर्शः कथमङ्गीकर्त्तव्य इति चेन्न । "वन्हिव्याप्यवानयं" इति शाब्दपरामर्शस्थले परामर्शस्याऽऽवश्यकतया लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात् ।

गं०—प्रभाकरः शङ्कते नन्विति । व्याप्तिस्मृतिपक्षधर्मताज्ञाना-भ्यामेवेति । यत्रादौ धूमवान् पर्वत इति पक्षधर्मताज्ञानम् । ततो वन्हिव्याप्यो धूम इति व्याप्तिस्मरणम् । तत्र ज्ञानद्वयाभ्यामेवेत्यर्थः । एव

कारेण परामर्शस्य कारणत्वव्यवच्छेदः। परामर्शं विनापीत्यर्थः। परामर्शं प्रति तयोः कारणत्वावश्यकतया अनुमितिं प्रत्येव तयोः कारणत्वस्वीकारेण सामंजस्ये परामर्शस्य कारणत्वस्वीकारो व्यर्थं इति भावः परामर्शस्याऽऽवश्यकतयेति। लिङ्गदर्शनव्याप्तिस्मरणाभ्यां विनैव यत्र शाब्दात्मकः वन्हिव्याप्यधूमवानिति परामर्शस्तत्र परामर्शस्य कारणत्वमुभयमतसिद्धम्। एवं च व्याप्तिपक्षधर्मताज्ञानयोः कारणताद्वयकल्पनामपेक्ष्य परामर्शत्वेनैककारणतायामेव लाघवमिति भावः। ननु परामर्शस्य न परामर्शत्वेन कारणत्वसंभवः। यत्र ज्ञानद्वयादेवानुमितिस्तत्र व्यभिचारात्। किन्तु व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकज्ञानत्वेनैव, तथा च ज्ञानद्वयस्थलेऽप्यनुमितिनिर्वाहः। न च यत्र व्याप्यतावच्छेदकीभूतधूमत्वादिज्ञानविरहेऽपि केवलं वन्हिव्याप्यवानिति ज्ञानं तत्राऽनुमितिर्न स्यात्, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकज्ञानाऽभावादिति वाच्यम्। तत्रापि लिंगतावच्छेदकवगाहिपरामर्शं कल्पयित्वैवाऽनुमितेः स्वीकारात्। क्षणविलंवस्य शपथनिर्णेयत्वात्। तथा च नाऽनुमित्यनुपपत्तिरित्यत आह। लाघवेनेति। व्याप्यतावच्छेदकप्रकारकनिश्चयत्वाऽपेक्षया व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वस्य लघुत्वेनेत्यर्थः। लिंगतावच्छेदकानवगाहिपरामर्शस्थले लिंगतावच्छेदकावगाहिपरामर्शकल्पनम्, किं वा ज्ञानद्वयस्थले परामर्शः कल्पनीय इत्यत्र विनिगमनाविरहोऽपि बोध्यः। किं च व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वे धूमवान् पर्वत इति ज्ञानादेवाऽनुमित्यापत्तिः। पक्षधर्मताज्ञानव्याप्तिज्ञानयोः स्वातन्त्र्येण कारणत्वे च वन्हिव्याप्यो धूमः, आलोकवान् पर्वत इति ज्ञानाभ्यामनुमित्यापत्तिरित्येतत्सर्वमालोच्याह। सर्वत्र परामर्शस्यैव कारणत्वादिति। फलमुखगौरवस्याऽदोषत्वादिति भावः।

दी०—लिङ्गं न करणम्, अतीतादौ व्यभिचारात्। व्यापारवत्कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञानं करणम्।

तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः । अनुमानमुपसंहरति । तस्मादिति ।

लिङ्गपरामर्श एव करणमिति मूलोक्तैवकारव्यवच्छेद्यं स्पष्टयति । लिङ्गं न करणमिति । लिङ्गमिति । व्याप्तिज्ञानविशेष्यीभूतं लिङ्गमित्यर्थः । न करणमिति । परामर्शद्वारा न करणमित्यर्थः लिङ्गज्ञानस्य करणत्वे तु लिङ्गज्ञानत्वं कारणतावच्छेदकं वाच्यम् । लिङ्गस्य कारणत्वे लिङ्गत्वं कारणतावच्छेदकम् । तथा च लाघवात् लिङ्गमेव करणमित्याचार्याणामाशयः। लिङ्गस्याऽनुमित्यकरणत्वे हेतुमाह अतीतादाविति । अतीतादिलिंगकानुमितावित्यर्थः आदिना अनागतपरिग्रहः । व्यभिचारादिति । तत्र लिङ्गरूपकारणाभावाद् व्यतिरेकव्यभिचारादित्यर्थः । तथा च इयं शाला धूमवती श्यामवर्णत्वात् । इत्यनुमानेन धूमनिश्चयवतः पुरुषस्य इयं शाला वन्हिमती धूमादित्यनुमितिर्न स्यात् । लिङ्गस्य तदानीमभावात् । एवमनागतस्थले पिपीलिकाण्डसंचरणेन सुवृष्टिमनुमितवतः पुरुषस्य देशोऽयं सुभिक्षवान् सुवृष्टेरित्यनुमितिर्न स्यात् लिङ्गरूपरूपकारणाभावात् । उद्देश्यतासंबन्धेनाऽनुमितिं प्रति हेतुतावच्छेदकसम्बन्धेन लिङ्गस्य तन्मते कारणत्वात् इति । समवायेनाऽनुमितिं प्रति स्वविषयकज्ञानवत्वसम्बन्धेन लिङ्गस्य कारणत्वेऽपि तेन सम्बन्धेन लिङ्गस्यैवाऽभावादिति ध्येयम् ॥

लिङ्गं त्रिविधम् । अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि । यथा वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निरिति अन्वयव्याप्तिः । यत्र वन्हिर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः ।

न्या०—अन्वयेनेति । व्यापकसामानाधिकरण्यरूपान्वयव्याप्तिमानित्यर्थः । व्यतिरेकेणेति । व्यतिरेको नामाभावः । तथा च साध्याभावहेत्वभावयोर्व्याप्तिः व्यतिरेकव्याप्तिः । इयं च व्याप्तिः यत्र यत्र वन्ह्यभावस्तत्र तत्र धूमाभावः इति । यत्र पदवीप्सयां वन्ह्यभाववति यावति धूमाभावग्रहणेन यावत्पदस्य व्यापकत्वपरतया धूमाभावे वन्ह्यभावव्यापकत्वं लभ्यते । एवं च वन्ह्यभावनिष्ठव्याप्तेः स्वाश्रयीभूतवन्ह्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन । धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन धूमव्यापकवन्हिसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेन चान्वयव्यतिरेकित्वेन गीयते व्यतिरेकपरामर्शस्तु वन्ह्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत इत्याकारकः ।

दी०—लिङ्गं विभजते । अन्वयव्यतिरेकि लक्षयति । अन्वयेनेति हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः ।

गं०—तस्माल्लिङ्गपरामर्शोऽनुमानमिति मूलेन लिङ्गस्य स्मृतत्वेन प्रसंगसंगत्या लिंगं विभजते मूले । लिङ्गं त्रिविधमिति । व्याप्त्याश्रयत्वं लिङ्गसामान्यलक्षणम् । अन्वयेनेति । अन्वयसहचारेणेत्यर्थः तृतीयार्थो ज्ञानज्ञाप्यत्वम् । तस्य व्याप्तौ अन्वयः । व्यतिरेकेणेति । व्यतिरेकसहचारेणेत्यर्थः तृतीयार्थः पूर्ववत् । तथा चाऽन्वयसहचारज्ञानज्ञाप्यव्याप्तिमद् व्यतिरेकसहचारज्ञानज्ञाप्यव्याप्तिमच्च लिंगं अन्वयव्यतिरेकीत्युच्यते । अन्वयव्यतिरेकिलिंगं दर्शयति यथेति । वन्हौ साध्ये धूमवत्वम् । धूमः अन्वयव्यतिरेकिहेतुरित्यर्थः व्याप्तौ अन्वयसहचारज्ञानज्ञाप्यत्वमुपपादयति । यत्रेति । यादृशाधिकरणे इत्यर्थः । तत्रेति । तादृशाधिकरणे इत्यर्थः । इत्यन्वयव्याप्तिरिति । इत्याकारकाऽन्वयसहचारज्ञानज्ञाप्यव्याप्तिरित्यर्थः । व्याप्तिश्च हेतुव्यापकसाध्यसामानाधिकरण्यरूपा साध्याभाववदवृत्तित्वरूपा वा बोध्या । व्याप्तौ व्यतिरेकसहचारज्ञानज्ञाप्यत्वमुपपादयति । यत्रेति ।

यादृशाधिकरणे इत्यर्थः। **वन्हिर्नास्तीति।** वन्ह्यभाव इत्यर्थः। **तत्रेति।** तादृशाधिकरणे इत्यर्थः। **धूमोऽपि नास्तीति।** धूमाभावोऽपीत्यर्थः। **इति व्यतिरेकव्याप्तिरिति।** इत्याकारकव्यतिरेकसहचारज्ञानज्ञाप्यव्याप्तिरित्यर्थः। **धूमाभावे वन्ह्यभावव्यापकत्वं लभ्यते इति।** नन्वेवं वन्ह्यभावे धूमाभावव्याप्तिग्रहेऽपि धूमे कथं व्याप्तिग्रह इत्यत आह। **एवं चेति।** स्वं वन्ह्यभावनिष्ठा व्याप्तिः। दीपिकायां। **तदभावयोरिति।** साध्याभावहेत्वभावयोरित्यर्थः।

**अन्वयमात्रव्याप्तिकं केवलान्वयि। यथा घटोऽभिधेयः प्रमेयत्वात् पटवत्। अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यैव प्रमेयत्वादभिधेयत्वाच्च।**

न्या०—केवलान्वयिनोलक्षणमाह—अन्वयेति। व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम्। अथवा केवलान्वयिसाध्यकत्वं तत्। एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि सङ्गच्छते। साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावादन्वयमात्रव्याप्तिकं केवलान्वयि इति मूलकारोक्तं लक्षणमुपपन्नम्।

गं०—**केवलान्वयिनो लक्षणमाहेति।** केवलान्वयिविशेष्यकलक्षण प्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः। मूले **केवलान्वयीति।** केवलं अन्वयः "अन्वयव्याप्तिः" यस्यास्तीतिकेवलान्वयि तदेवाह **अन्वयमात्रव्याप्तिकमिति।** अन्वयव्यतिरेकिणि अतिव्याप्तिवारणाय सत्यन्तम्। **अन्वयव्याप्तिमत्वमिति।** व्याप्तिमत्वमित्यर्थः। अन्वयत्वेन निवेशे प्रयोजनाभावात्, विशेष्यविशेषणभावे विनिगमनाविरहाच्चेति। मूले **केवलान्वयीत्यत्र** केवलपदेन साध्यव्यतिरेकव्यवच्छेदः। अन्वयित्वं चाऽविवक्षितम्। अभावाऽप्रतियोगिसाध्यकत्वं केवलान्वयित्व-

मित्यभिप्रायवानाह । **अथवेति** । साध्ये केवलान्वयित्वनिवेशस्य फलमाह एतच्च लक्षणमिति । केवलान्वयिसाध्यकत्वरूपलक्षणं चेत्यर्थः । **हेतोर्व्यतिरेकित्वेऽपीति** । अपि शब्दः केवलान्वयित्वसमुच्चायकः । वाच्यं घटत्वादित्यत्र घटत्वहेतोरपीति यावत् ।

न्या०—अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । न चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वमाकाशाभावे संयोगाभावे चाव्याप्तमिति वाच्यम् । स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वात् । एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वमिति नव्याः ।

दी०—केवलान्वयिनो लक्षणमाह—अन्वयेति । केवलान्वयिसाध्यकं लिङ्गं केवलान्वयि । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । केवलान्वयि उदाहरति—घटोऽभिधेयः प्रमेयत्वात् इति । ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः ।

गं०—साध्यनिष्ठं केवलान्वयित्वं निर्वक्ति । **अत्यन्ताऽभावाऽप्रतियोगित्वमिति** । **अव्याप्तमिति** । आकाशाऽभावस्य संयोगाभावस्य च केवलान्वयित्वादिति भावः । **स्वविरोधीति** । स्वविरोधी अथ च वृत्तिमान् योऽत्यन्ताभावः तदप्रतियोगित्वमित्यर्थः । स्वं प्रतियोगी । अत्र स्वपदेन वाच्यत्वं नैव गृहीतुं शक्यते वाच्यत्वाभावस्य वाच्यत्वविरोधित्वेऽपि वृत्तिमत्त्वविरहात् । किन्तु स्वपदेन घटादेर्ग्रहणम्, तद्विरोधी अथ च वृत्तिमान् योऽत्यन्ताभावः घटाभावः तत्प्रतियोगित्वं घटे अप्रतियोगित्वं वाच्यत्वे इति लक्षणसमन्वयः । स्वविरोधित्वनिवेशात्संयोगाऽभावे नाव्याप्तिः । संयोगाभावाभावस्य वृत्तिमत्त्वेऽपि संयोगाभावाऽविरोधित्वेन स्वपदेन संयोगाभावग्रहणाऽसंभवात् । गगनाभावाभावस्य वृत्तिमत्त्वविरहेण स्वपदेन गगनाभावस्यापि ग्रहणाऽसम्भवाद् गगनाभावेऽपि नाव्याप्तिरिति ध्येयम् । एक-

जातीयसंबन्धेनेति । स्वरूपसंबन्धेनेति शेषः । मूले । घटोऽभिधेयः प्रमेयत्वादिति । अत्र घटः पक्षः । अभिधेयत्वं साध्यम् । प्रमेयत्वं हेतुः । प्रमेयत्वं निर्वक्ति दीपिकायां । ईश्वरप्रमाविषयत्वमिति । चकारात् ईश्वरेच्छाविषयत्व तादृशकृतिविषयत्वादेः परिग्रहः । सर्वत्रास्तीति । सर्वत्र वृत्तीत्यर्थः । घटपदाभिधेयत्वस्य पटेऽभावादभिधेयत्वं नकेवलान्वयीत्याशंकायामाह । सर्वपदाऽभिधेयत्वमिति । सर्वमित्याकारकसर्वविषयकज्ञानविषयत्वं सर्वत्रास्तीत्यपि बोध्यम् । अत्र अभिधेयत्वसाध्यकस्थले सर्वस्याऽपीति तथा च प्रमेयत्वाभिधेयत्वयोः केवलान्वयित्वेन तदभावाऽप्रसिद्ध्या व्यतिरेकव्याप्तिः सुतरामप्रसिद्धेति भावः ।

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद् गन्धवत् । यथा जलम् । न चेयं तथा । तस्मात् न तथेति । अत्र यद् गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ।**

न्या०—केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् । यथा पृथिवीति । अत्र पृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलादिभेदः साध्यम्, गन्धवत्त्वं हेतुः । अत्र यद् गन्धवत् तदितरभेदवदित्यन्वयदृष्टान्ताभावाद्गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासंभवः ।

किन्तु यत्र तत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा जलादिकमिति व्यतिरेकदृष्टान्ते जलादावितरभेदाभावरूपसाध्याभाव-

व्यापकता गन्धाभावे गृह्यते । इममेवार्थं मनसि निधाय यदितरभ्यो न भिद्यते न तद्गन्धवत् तथा जलमिति ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान् । एवम्प्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरमितरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्याकारकव्यतिरेकिपरामर्शात् पृथ्वीवित्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका पृथिवीतरभेदवतीत्याकारिकानुमितिर्जायते इति तत्त्वम् । यथाश्रुतमूलार्थस्तु यत् जलं इतरेभ्यो न भिद्यते इतरभेदाभाववत्, न तद् गन्धवत् जलमितरभेदाभावव्यापकगन्धाभाववत् । इत्येवम्प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यत इत्यर्थः न चेयं तथेति । इयं पृथिवी, न तथा इतरभेदाभावव्यापकगन्धाभाववती न किन्तु तदभावात्मकगन्धवती । तस्मान्न तथेतीति । तस्मात् । गन्धाभावाभावत्वात् । न तथा । इतरभेदाभाववती न । किन्तु इतरभेदाभावाभाववती इतरभेदवतीति पर्यवसन्न इति ।

दी०—केवलव्यतिरेकिणोलक्षणमाह । व्यतिरेकेति केवलव्यतिरेकिणमुदाहरति । पृथिवीति ।

गं०—केवलव्यतिरेकिणो लक्षणमाहेति । केवलव्यतिरेकिविशेष्यकलक्षणप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः । मूले। केवलव्यतिरेकीति । केवलं व्यतिरेकः "व्यतिरेकव्याप्तिः" अस्यास्तीति केवलव्यतिरेकी यस्मिन् हेतौ व्यतिरेकव्याप्तिरेव विद्यते स हेतुः केवलव्यतिरेकीत्यर्थः । तदेवोक्तं व्यतिरेकमात्रव्याप्तिकमित्यनेन । अन्वयव्यतिरेकिणि अतिव्याप्तिवारणाय सत्यन्तम् । विशेष्यदले व्यतिरेकपदं न देयम्, व्याप्तिमत्त्वस्यैव सम्यक्त्वात् । मूले । इतरेभ्यः जलादिभ्यः-प्रतियोगित्वं पञ्चम्यर्थः । भिद्धातोर्भेदोर्थः भेदश्चाऽन्योन्याभावः । आख्यातार्थं आश्रयत्वम् । तथा च जलादिप्रतियोगिकाऽन्योन्याभाववतीत्यर्थः

अन्वयव्याप्तिस्तु न संभवतीत्याह मूले । अत्र यदिति । अन्वयदृष्टान्तः। अन्वयव्याप्तौ दृष्टान्तः । अन्वयदृष्टान्तो नास्तीति । ननु यद् गन्धवत्तद्-तरभिन्नं यथा घटः इत्यन्वयदृष्टान्तोऽस्त्येवेत्यत आह । पृथिवीमात्रस्येति । तथा च पक्षाऽतिरिक्तस्यैव दृष्टान्तत्वेन घटस्य च पक्षान्तर्गतत्वेन न दृष्टान्तत्वं संभवतीति भावः । केचित्तु व्यतिरेकसहचारेणाऽपि अन्वयव्याप्ति-रेव गृह्यते, व्यतिरेकव्याप्तिज्ञानन्तु नानुमितौ कारणम् । यत्र व्यतिरेकमात्र-सहचाराद्व्याप्तिग्रहः तद्व्यतिरेकीत्युच्यते साध्यनिश्चयस्तु घटादावेव । अनु-मितिस्तु पृथिवीत्वावच्छेदेन । अवच्छेदावच्छेदेनाऽनुमितिं प्रति सामाना-धिकरण्येन सिद्धेरप्रतिबन्धकत्वादिति वदन्ति ।

दी०—नन्वितरभेदः प्रसिद्धो न वा । आद्ये यत्र प्रसिद्धस्तत्र हेतुसत्त्वे अन्वयित्वम् । असत्त्वे असाधारण्यम् । द्वितीये साध्यज्ञानाभावात् कथं तद्विशिष्टानुमितिः । विशेषणज्ञानाभावे विशि-ष्टज्ञानानुदयात् । प्रतियोगिज्ञानाभावाद् व्यतिरेकव्याप्तिज्ञानमपि न स्यात् इति चेत्, न, जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते । त्रयोदशत्वावच्छिन्नसा-ध्यस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये, प्रत्येकाधिकर-णप्रसिद्ध्या साध्यविशिष्टानुमितिः, साध्याभावव्यापकीभूताभावप्रति-योगित्वमिति व्यतिरेकव्याप्तिनिरूपणं चेति ।

गं०—ननु पृथिवी इतरेभ्योभिद्यते गन्धवत्वादित्यत्र गन्धवत्त्वहेतोः केवलव्यतिरेकित्वमुक्तम्, तन्न युक्तमित्याक्षिपति । नन्वित्यादिना । इत-रभेदः प्रसिद्धो नवेति । प्रसिद्धः इतरभेदः साध्यते, अप्रसिद्ध इतरभेदो वा साध्यते इत्यर्थः । पृथिवी जलभिन्ना, तेजोभिन्ना वायुभिन्ना इत्यादि रीत्या जलत्वाद्यवच्छिन्नप्रतियोगिताकैकैकभेदः साध्यते, जलादि-अभावान्तान्यतम-वृत्ति यत्पृथिवीतरत्वं तदवच्छिन्नप्रतियोगिताकभेदो वा साध्यते इति यावत् । आद्येऽपि पक्षैकदेशे प्रसिद्धो यः तादृशैकैकभेदः स साध्यते, पक्षातिरिक्ते-

प्रसिद्धो यः तादृशैकैकभेदः स वा साध्यते इति विकल्पद्वयम्। तत्राऽऽद्ये प्रथमविकल्पं दूषयति। **यत्र प्रसिद्ध** इति। यस्मिन्नधिकरणे "घटादौ" इतरभेदो गृहीतः तत्रैवेत्यर्थः। **हेतुसत्वेऽन्वयित्वमिति**। हेतुसत्वप्रयुक्त-मन्वयित्वमेवेत्यर्थः। तथा च गन्धवत्वहेतोः "अन्वयेन व्यतिरेकेण च व्याप्तिमत्वाद् अन्वयव्यतिरेकित्वमेव स्यान्न तु केवलव्यतिरेकित्वमिति भावः। आद्ये द्वितीयविकल्पं दूषयति। **असत्वे इति**। हेतुविरहे इत्यर्थः। **असाधारण्यमिति**। हेत्वसत्वप्रयुक्तमसाधारण्यमित्यर्थः। तथा च पक्षातिरिक्ते साध्यनिश्चये तत्र गन्धवत्वरूपहेतोरभावात्, गन्धवत्वरूपहेतोर-साधारण्यमेव, सर्वसपक्षविपक्षव्यावृत्तत्वात् पक्षमात्रवृत्तित्वाच्च। असाधारण्ये च सद्धेतोरेव लक्ष्यतया केवलव्यतिरेकिलक्षणलक्ष्याऽप्रसिद्धिरिति समुदितार्थः। अप्रसिद्ध इतरभेदः साध्यते इति विकल्पं दूषयति। **द्वितीये** इति। **साध्यज्ञानाभावादिति** साध्याऽप्रसिद्ध्येत्यर्थः। **कथं विशिष्टानुमितिरिति**। पृथिवीविशेष्यकेतरभेदप्रकारकानुमितिः कथमुत्पद्यते इत्यर्थः। तत्र हेतुमाह। **विशेषणज्ञानाभावे** इति। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादिति भावः। ननु पृथिवीविशेष्यकेतरभेदप्रकारकानुमितिर्माभूत्, पृथिव्यामितरभेदः" इत्याकारकेतरभेदविशेष्यकानुमितिरेवजायतामित्याशंकां परिहरति। **प्रतियोगिज्ञानाभावादिति** साध्यात्मकप्रतियोगिज्ञानाभावादि-त्यर्थः। **व्यतिरेकव्याप्तिज्ञानमपि** व्यतिरेकव्याप्तिज्ञानमेवेत्यर्थः। **न स्यादिति**। तथा च साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिज्ञाने साध्याभावज्ञानस्यावश्यमपेक्षिततया तद्ज्ञाने प्रतियोगिज्ञानविधया इतर-भेदज्ञानस्याऽपेक्षितत्वेन साध्यज्ञानाभावे व्यतिरेकव्याप्तिज्ञानमपि न संभव-तीति भावः। पृथिव्यां न प्रत्येकभेदः साध्यते, नापि पृथिवीतरत्वावच्छिन्न-प्रतियोगिताकभेदः, अपि तु जलादीनां ये त्रयोदशान्योभावाः तेषां भेदकूटः साध्यते तथा च नोक्तदोषावसर इत्याह। **त्रयोदशान्योन्याभावाना**'-

---

टि०—ननु जलाद्यष्टद्रव्य-गुणादिषट्पदार्थानां भेद एव पृथिव्यां साधनीयः,

मित्यादिना। एवं चेतरेभ्यो भिद्यते इत्यस्य इतरभेदकूटवतीत्यर्थः। नन्वेवमपि तादृशभेदकूटानां कुत्र प्रसिद्धिरित्याशंक्याह। **त्रयोदशस्विति**। तादृशैकैकाभावस्य त्रयोदशस्वेव प्रसिद्धत्वात्तत्संगतिः। **प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते इति**। तथा च जलादिप्रतियोगिकत्रयोदशभेदानां प्रत्येकं प्रसिद्धानां मेलनं कूटः, पृथिव्यां साध्यते इत्यर्थः। **त्रयोदशत्वावच्छिन्नभेदात्मकसाध्यस्यैकाधिकरणवृत्तित्वाभावादिति**। तादृशभेदकूटस्य कुत्रापि प्रसिद्धिविरहान्नाऽन्वयित्वम्, सपक्षाऽप्रसिद्ध्या च नाऽसाधारण्यमिति भावः। नन्वेवं साध्याऽप्रसिद्धिः कुतोनेत्यत आह। **प्रत्येकाधिकरणप्रसिद्ध्येति**। तेजसि जलभेदस्य, जले तेजोभेदस्य प्रसिद्ध्येत्यर्थः। **साध्यविशिष्टानुमितिः**। साध्यप्रकारकानुमितिः। विशेषणज्ञानसत्त्वादित्यर्थः। **व्यतिरेकव्याप्तिनिरूपणं चेति** व्यतिरेकव्याप्तिज्ञानमपीत्यर्थः। संभवतीति शेषः।

## संदिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः।

न्या०—पक्षलक्षणमाह **संदिग्धेति**। साध्यप्रकारकसन्देहविशेष्यत्वं पक्षत्वम्। सन्देहश्च पर्वतो वन्हिमान्नवा इत्याकारकः। इदञ्च लक्षणमनुमितेः पूर्वं साध्यसन्देहो नियमेन जायत इत्यभिप्रायेण

---

तथा च जलादिचतुर्दशेत्येववक्तव्ये त्रयोदशाभिधानमनुचितम्। न च पृथिवी अभावभिन्ना भावत्वादित्यनुमानेन अभावभेदस्य सिद्धतया भावभेदस्यैव साधनीयतया न त्रयोदशाभिधानाऽसंगतिरिति वाच्यम्। तथा सति अभावे एव त्रयोदशभेदस्य सिद्धतया तत्रगन्धवत्त्वविरहेणाऽसाधारण्यापत्तेरिति चेन्न। अभावस्याऽतिरिक्तपदार्थत्वमनंगीकुर्वतां प्राभाकराणां मतमनुसृत्य तथोक्तत्वात्। वस्तुतस्तु जलादित्रयोदशत्वावच्छिन्नप्रतियोगिताकान्योन्याभावानां अभावानां चेत्यर्थ इति ध्येयम्।

प्राचीनैः कृतम् । गगनविशेष्यकमेघप्रकारकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारिकाया "गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया" अनुमितेर्दर्शनात् प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वं स्थिरीकृतम् ।

गं०—पक्षलक्षणमाहेति । पक्षविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इति बोधः । मूले सन्दिग्धसाध्यवानिति । संदिग्धं "सन्देहप्रकारीभूतं" च तत्साध्यं च सन्दिग्धसाध्यम्, तद्यत्राऽस्तीति सन्दिग्धसाध्यवान् । तथा च संशयविषयीभूतसाध्यवत्त्वं पक्षत्वम् । पक्षताऽनुमितौ कारणम् । नन्वेवं ह्रदो वह्निमानित्यनुमितिर्नस्यात्, ह्रदे "संशयविषयीभूत" वह्निमत्त्वाभावेन पक्षतारूपकारणविरहादित्यत आह साध्यप्रकारकेति । एवं च ह्रदे वह्निविरहेऽपि वह्निसंशयोऽस्त्येवेति नोक्तानुपपत्तिः । अत्रेदं तत्वम् । सन्दिग्धं च तत्साध्यं चेति न कर्मधारयः तथासति मतुप्प्रत्ययो न स्यात्, न कर्मधारयान्मत्वर्थीयोबहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यनुशासनविरोधात् । अतः सन्दिग्धश्चाऽसौ साध्यवांश्चेति विग्रहः । साध्यवत्वेन सन्दिह्यमानत्वं तदर्थः । साध्यवत्त्वं च साध्यमेव इत्यभिप्रायेणैव "न्यायबोधिन्यां" साध्यप्रकारकसन्देहविशेष्यत्वमुक्तम्, तेन नोदक्षरत्वमिति ध्येयम् । तथा च विशेष्यतासंबन्धेनाऽनुमितिं प्रति विशेष्यतासंबन्धेन साध्यसंशयः कारणम् । न च साध्यप्रकारकसंशयस्य पक्षतात्वे वह्निः पर्वते न वा, वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेत्यादि संशयानां पक्षतात्वानुपपत्तिरिति वाच्यम् । समानविषयकत्वेन प्रतिबन्धकत्वस्वीकर्त्तृप्राचीनमते पर्वतोवह्निमानिति निश्चयः पर्वतोवह्निमान्नवेतिसंशयस्येव पर्वते वह्निर्नवा, वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेत्यादि संशयानामपि विरोधी । तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशा-

लिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशाली संशयः तत्पक्षक-तत्साध्यकानुमितौ कारणम् । तादृशसंशय एव पक्षतेति ।

इदं च लक्षणम् । सन्दिग्धसाध्यवत्वरूपलक्षणं च । **नियमेन जायते** इति । **प्राचीनानामयमाशयः** । साध्यनिश्चयसत्वे बाधनिश्चयसत्वे वा अनुमितिर्न भवतीति द्वयोर्विघटनाय संशयस्याऽनुमितिकारणत्वमावश्यकम्, एवं च साध्यनिश्चयस्य बाधनिश्चयस्य वा संशयं प्रति प्रतिबन्धकत्वादुभय-सत्वे संशयरूपकारणाऽभावादेव नानुमितिः । संशयोत्तरं सिद्धिसत्वेऽनुमिति-र्भवत्येव, संशयस्योत्तेजकत्वादिति । प्राचीनमतं दूषयति । **गगनविशेष्य-केति** । **सन्देहाऽभावदशायामपीति** । गगनं मेघवन्नवेत्याकारकसन्देह-विरहेऽपीत्यर्थः । **अनुमितेर्दर्शनात्** । तथा च व्यतिरेकव्यभिचारात्संशयो नाऽनुमितिकारणमिति भावः । **अनुमित्युद्देश्यत्वमिति** । तच्च स्वरूप-संबन्धविशेषः, प्रकृते सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एवेति ध्येयम् । सन्दिग्धसाध्यवत्वरूपलक्षणस्य लक्ष्यं निर्दिशति मूले **यथेति** । **धूमवत्वे हेताविति** । धूमवत्वरूपहेत्वधिकरणमित्यर्थः । न च यथा पर्वत इत्युक्त्यैव सामंजस्ये धूमवत्वे हेताविन्युक्तिर्व्यर्थेति वाच्यम् । पञ्चरूपोपपन्नत्वघटकपक्ष-सत्वं दर्शयितुं तथोपन्यासात् । पञ्चरूपाणि च पक्षसत्व-सपक्षसत्वविपक्षाऽ-सत्वाऽ-बाधितत्वाऽसत्प्रतिपक्षितत्वानीति ।

दी०—पक्षलक्षणमाह—संदिग्धेति । ननु श्रवणानन्तरभावि-मननस्थले अव्याप्तिः, तत्र वेदवाक्यैरात्मनो निश्चितत्वेन सन्देहा-भावात् । किञ्च प्रत्यक्षेऽपि वन्हौ यत्रेच्छयाऽनुमितिः, तत्राव्याप्ति-रिति चेत्, न, उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात् ।

गं०—सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव पक्षता इति नवीनाः । एवं च घनगर्जनस्थले नानुमित्यनुपपत्तिः सिद्ध्यभावरूपपक्षतासत्वादिति नवीनमतं सिद्धान्तयितुमाक्षिपति । नन्वित्यादिना **श्रवणानन्तरेति** । आत्मविशेष्यकेतरभेदप्रकारकशाब्दबोधानन्तरजायमानाऽऽत्मपक्षकेतरभेदानुमि-

तिस्थले इत्यर्थः । अव्याप्तिमुपपादयति । तत्रेति । आत्मनीत्यर्थः । अस्य सन्देहाभावादित्यनेनाऽन्वयः । सन्देहाभावे हेतुमाह । वेदवाक्यैरिति । अशरीरं वावसन्तमित्यादिवेदवाक्यैरित्यर्थः । निश्चितत्वे चेति । देहेन्द्रियादिभिन्नत्वप्रकारतानिरूपितनिश्चयीयविशेष्यताश्रयत्वेनेत्यर्थः । सन्देहाभावादिति । देहेन्द्रियभिन्नत्वप्रकारतानिरूपितसंशयीयविशेष्यत्वाभावादित्यर्थः । प्रत्यक्षस्थलेप्यव्याप्तिमाह । किंचेति । प्रत्यक्षेऽपि वन्हाविति । निश्चितेऽपि वन्हावित्यर्थः । यत्र । पर्वतादौ । इच्छया । वन्ह्यनुमितिर्जायतामितीच्छया । अव्याप्तिरिति । तथा च पर्वतादौ वन्हिनिश्चयकाले साध्यसन्देहरूपपक्षताविरहादव्याप्तिरित्यर्थः । इदमुपलक्षणम् । धूमेन निश्चितेऽपि वन्हौ आलोकेन वन्ह्यनुमितिर्जायतामितीच्छया वन्ह्यनुमितावपि व्यभिचारो बोध्यः । एतेन केवलसिद्धयभावस्य पक्षतात्वेऽपि उक्तव्यभिचारस्तदवस्थ एवेति सूचितम् । उक्तपक्षताश्रयत्वस्येति । सिपाधयिषाविरहविशिष्टसिद्धयभावस्येत्यर्थः । लक्षणत्वादिति । तथा च नोक्तव्यभिचार इति भावः । न च सिषाधयिषामात्रमेवपक्षताऽस्त्विति वाच्यम् । घनगर्जनेन मेघानुमितिस्थलेव्यभिचारतादवस्थ्यात् न च फलबलाद् गगने मेघानुमितिर्जायतामितीच्छाकल्पनेन न व्यभिचार इति वाच्यम् । हस्तिघोटकवत्वादिना "मदीयशत्रुः सम्पन्नः" इत्याकारकानुमितिस्थले व्यभिचारतादवस्थ्यात् । शत्रुविशेष्यकसंपन्नत्वप्रकारकानुमितीच्छायाः कल्पयितुमशक्यत्वादिति ध्येयम् ।

अत्रेदं बोध्यम् । अनुमितौ सिषाधयिषा उत्तेजिका भवति । उत्तेजकत्वं च प्रतिबन्धकसत्वे कार्यजनकत्वम् । सिद्धिश्चानुमितौ प्रतिबन्धिका भवति । प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम् । प्रतिबन्धकाभावस्य कार्यमात्रे कारणतया कारणीभूतो योऽभावः सिद्धयभावः तत्प्रतियोगित्वं सिद्धावस्त्येवेति । सिद्धिश्च साध्यनिश्चयः । प्रतिवध्यप्रतिबन्धकभावश्च प्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयताशाल्यनुमितिं प्रति प्रकृतपक्षता-

वच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वम्। यथा पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताशाल्यनुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वम्। यथा साध्यप्रकारिकासिद्धिः अनुमितिविरोधिनी सा च पर्वतोवह्निमान् इत्याकारिका तथैव पर्वते वह्निः इत्याकारिका साध्यविशेष्यिका सिद्धिरपि अनुमितिप्रतिबन्धिका। इयाँस्तु विशेषः पर्वतोवह्निमान् इत्याकारकः साध्यप्रकारकनिश्चयः, साध्यप्रकारकानुमितौ "पर्वतोवह्निमान् इत्याकारिकायाम्" विरोधी, प्रतिबध्यप्रतिबन्धकभावस्तूक्तएव। साध्यविशेष्यिकासिद्धिस्तु साध्यविशेष्यकानुमितौ प्रतिबन्धिका तत्प्रकारश्च वह्नित्वावच्छिन्नविशेष्यतानिरूपित-"स्वनिष्ठअधिकरणतानिरूपित" आधेयत्वसम्बन्धावच्छिन्नपर्वतत्वावच्छिन्नविधेयताशाल्यनुमितिं प्रति वह्नित्वावच्छिन्नविशेष्यतानिरूपित "स्वनिष्ठ अधिकरणतानिरूपित" आधेयत्वसम्बन्धावच्छिन्नपर्वतत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वम्। तथा च पक्षविशेष्यकसाध्यप्रकारकानुमितिं प्रति पक्षविशेष्यकसाध्यप्रकारकसिद्धिः प्रतिबन्धिका। साध्यविशेष्यकानुमितिं प्रति साध्यविशेष्यकसिद्धिः प्रतिबन्धिकेति। पुनरपि सिद्धिर्द्विविधा। पक्षतावच्छेदकसामानाधिकरण्येन पक्षतावच्छेदकावच्छेदेन च। सामानाधिकरण्येन सिद्धिः अवच्छेदावच्छेदेन सिद्धिश्च पर्वतोवह्निमान् इत्याकारिकैव। किन्तु यत्र प्रकारतावच्छेदकसम्बन्धः शुद्धसंयोगः सा सिद्धिः सामानाधिकरण्येनेत्युच्यते। यत्र पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगः प्रकारतावच्छेदकतया भासते सा सिद्धिः पर्वतत्वावच्छेदेनेत्युच्यते। एवं अनुमितेर्द्वैविध्यं बोध्यम। तत्रापि अवच्छेदावच्छेदेनानुमितिं प्रति सामानाधिकरण्येन सिद्धिः प्रतिबन्धिका। सामानाधिकरण्येनानुमितिं प्रति सिद्धिद्वयं प्रतिबन्धकम्। प्रतिबन्धकाभावविधया सिद्ध्यभावोऽनुमितौ कारणम् तत्रापि सिद्धौ सिषाधयिषाविरह-

विशिष्टत्वं विशेषणीयम् । सिषाधयिषा च पर्वते वन्ह्यनुमितिर्मे जायताम् इत्याद्याकारिका। तथा च सिषाधयिषाविरहवैशिष्ट्यं सिद्धौ सामानाधिकरण्य-सम्बन्धेन विशेषणम्, सिद्धिश्च विशेष्या । विशिष्टाभावोऽनुमितौ कारणम् विशिष्टाभावः विशेष्याभावप्रयुक्तोविशेषणाऽभावप्रयुक्तः उभयाभावप्रयुक्तश्च-यत्र न सिद्धिः नापि सिषाधयिषा परामर्शमात्रादेवानुमितिः तत्र विशेष्या-भावप्रयुक्तो विशिष्टाभावः । यत्र सिद्धिः सिधाधयिषा च अस्ति तत्र विशेषणाभावप्रयुक्तो विशिष्टाभावः। यत्र तु केवलमुत्तेजकम् तत्र विशिष्टाभावः उभयाभावप्रयुक्तः यत्र केवला सिद्धिः तत्र न विशिष्टाभावः विशेषणस्य सिषाधायिषाविरहस्य सिद्धेः चोभयोः सत्वात् अतः पक्षतारूपकारणाभावात् तत्र नानुमितिरित्यन्यत्र विस्तरः ।

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महा-नसम् ।**

न्या०—सपक्षलक्षणमाह निश्चितेति । साध्यप्रकारकनिश्चय-विशेष्यत्वं सपक्षत्वम् । निश्चयश्च महानसं वन्हिमदित्याकारकः ।

दी०—सपक्षलक्षणमाह—निश्चितेति ।

गं०—मूले । निश्चितेति । निश्चितश्चासौ साध्यवांश्चेति निश्चितसा-ध्यवान् । साध्यवत्त्वेन निश्चीयमानत्वम् । फलितार्थमाह । साध्य-प्रकारकेति । तथा च विशेष्यतासंबन्धेन साध्यप्रकारकनिश्चयवत्त्वं सपक्ष-त्वमिति यावत् । लक्ष्यं दर्शयति । यथेति । तत्रैव महानसमिति । तत्र महानसमेवेति योजना । तत्र । धूमवत्वे हेतौ । तथा च धूमरूपहेत्वधि-करणमहानसमेवेत्यर्थः । एतेन हेतोः सपक्षसत्वमाविष्कृतम् ।

**निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ।**

न्या०—विपक्षलक्षणमाह—निश्चितसाध्याभावेति । साध्याभावप्रकारनिश्चयविशेष्यत्वं विपक्षत्वम् । निश्चयश्च ह्रदो वन्ह्यभाववान् इत्याकारकः ।

दी०—विपक्षलक्षणमाह—निश्चितेति ।

गं०—अत्रापि निश्चितश्चासौ साध्याभाववांश्चेति विग्रहः। साध्याभाववत्वेन निश्चीयमानत्वं तदर्थः। विशेष्यतासंबन्धेन साध्याभावप्रकारकनिश्चयवत्त्वमिति यावत्। लक्ष्यमाह। **यथेति। तत्रैव महाह्रद इति।** तत्र महाह्रद एवेति योजना। **तत्र** धूमवत्वे हेतौ। तथा च धूमवत्वरूपहेत्वनधिकरणं महाह्रद एवेत्यर्थः। एतेन हेतोर्विपक्षाऽसत्वमाविष्कृतम्।

**सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च हेत्वाभासाः ।**

न्या०—एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति । सव्यभिचारेति। हेतुवदाभासन्ते इति हेत्वाभासाः, दुष्टहेतव इत्यर्थः। दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षाऽसिद्धिबाधाः। एतद्विशिष्टाः हेतवो दुष्टहेतव इत्यर्थः। यद्विषयकत्वेनज्ञानस्याऽनुमितितत्करणान्यतरविरोधित्वं तत्वं दोषसामान्यलक्षणम्। हेतौ दोषज्ञाने सति अनुमितिप्रतिबन्धो जायते, व्याप्तिप्रतिबन्धो वा। अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः। पर्वतो वन्हिमान् प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ साध्याभाववदवृत्तित्वव्यभिचारे ज्ञाते वन्ह्यभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

दी०—एवं सद्धेतून् निरूप्य असद्धेतून् निरूपयितुं विभजते। सव्यभिचारेति ।

गं०—एवं प्रकारेण ग्रन्थेनेति यावत् । **सद्धेतूनिति** । व्याप्तिपक्षधर्मताविशिष्टहेतूनित्यर्थः । द्वितीयार्थो विषयित्वम् । तस्य निपूर्वकरूपधात्वर्थैकदेशे ज्ञानेऽन्वयः । धात्वर्थश्च ज्ञानानुकूलोव्यापारः । ल्यप्प्रत्ययार्थो ध्वंसकालीनत्वम् । तस्याऽग्रिमनिरूपणेऽन्वयः । हेत्वाभासानित्यत्र द्वितीयार्थो विषयित्वम्, तस्य निरूपणैकदेशे ज्ञानेऽन्वयः । कृतिश्चाऽऽख्यातार्थः । तथा च सद्धेतुनिरूपणध्वंसकालीनहेत्वाभासविषयकनिरूपणानुकूलकृतिमान् मूलकार इति बोधः । दीपिकायां **निरूपयितुमिति** । इच्छाप्रयोज्यत्वं तुमुन्प्रत्ययार्थः । तादृशनिरूपणेच्छाप्रयोज्यविभागानुकूलकृतिमानिति बोधः । **दुष्टहेतव इत्यर्थ इति** । एवं हेतोराभासा इति व्युत्पत्त्या हेत्वाभासपदं हेतुनिष्ठदोषपरम् । दोषवत्त्वं दुष्टत्वमिति दुष्टहेतुलक्षणं स्फुटमेवेति तदुपेक्ष्य तद्घटकं दोषमेव लक्षयति । **यद्विषयकत्वेनेत्यादिना** । यः विषयो यस्मिन्निति यद्विषयकं तस्य भावो यद्विषयकत्वम्, तेन । यत्पदेन विषयो धर्त्तव्यः । तत्पदेनाऽपि स एव । तत्त्वस्य विषये सत्वात्, विषया एव दोषाः। विषयाश्च निर्विभक्तिकाः, यथा वन्ह्यभाववद्वृत्तिप्रमेयत्वरूपो दोषः । ज्ञानं च सविभक्तिकम्, यथा वन्ह्यभाववद्वृत्तिप्रमेयत्वमित्याकारकम् । **अत्रेदं बोध्यम्** । तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम् । यथा घटवत्ताबुद्धिः "घटवद्भूतलमित्याकारिका" तां प्रति घटाभाववत्तानिश्चयस्य "घटाभाववद्भूतलमित्याकारकनिश्चयस्य" तदभावव्याप्यवत्तानिश्चयस्य च "घटाभावव्याप्यवद्भूतलमित्याकारकस्य" प्रतिबन्धकत्वम् । प्रतिबध्या बुद्धिर्भवति । प्रतिबध्यतावच्छेदकं प्रतिबध्यवृत्तिबुद्धित्वादिकम् । प्रतिबध्यता बुद्धित्वावच्छिन्ना । एवं निश्चयः प्रतिबन्धको भवति । निश्चयत्वादिकं "प्रतिबन्धकवृत्तिधर्मः" प्रतिबन्धकतावच्छेदकं भवति । प्रतिबन्धकता च निश्चयत्वावच्छिन्ना । तथा च तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयस्य तादृशप्रतियोगिताकाभावव्याप्यवत्तानिश्चयस्य च प्रति-

वन्धकत्वम्। लक्षणार्थस्तु यद्विषयकत्वेन दोषविषयकत्वेन। ज्ञानस्य। दोषज्ञानस्य। तत्करणेति। अनुमितिकारणेत्यर्थः। यथा वन्ह्यभाववद्वृत्तिप्रमेयत्वविषयकत्वेन ज्ञानस्य वन्ह्यभाववद्वृत्तिप्रमेयत्वमितिज्ञानस्य वन्ह्यभाववद्वृत्तिप्रमेयत्वमिति व्याप्तिज्ञानविरोधित्वमस्ति अतो वन्ह्यभाववद्वृत्तिप्रमेयत्वरूपो दोषो बोध्यः।

यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वम्,[1] तस्य यद्विषयकत्वेऽन्वयः। ज्ञानस्येत्यत्र षष्ठ्यर्थो निष्ठत्वम्, तस्याऽपि यद्विषयकत्वेऽन्वयः। यद्विषयकत्वं च यद्रूपावच्छिन्नविषयतानिरूपितविषयित्वम्, विरोधिपदार्थस्याऽवच्छेदकत्वेऽन्वयः। तथा च ज्ञाननिष्ठायद्रूपावच्छिन्नविषयतानिरूपितविषयिता प्रकृतानुमितितत्कारणान्यतरनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका तद्रूपवत्वं लक्षणम् ह्रदो वन्हिमान् धूमादित्यत्र वन्ह्यभाववद्ह्रदे लक्षणसमन्वयः। तथा हि वन्ह्यभाववान् ह्रद इत्याकारकज्ञाननिष्ठा या वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतानिरूपितविषयिता सा ह्रदो वन्हिमानित्यनुमितिप्रतिबन्धकतावच्छेदिका भवति तद्रूपवत्वस्य वन्ह्यभाववद्ह्रदे सत्वात्। ज्ञानपदं अनाहार्याऽप्रामाण्यज्ञानानास्कंदितनिश्चयपरम्। तेन आहार्याऽप्रामाण्यज्ञानास्कन्दितज्ञानसंशयानादाय नासंभवः। बाधसत्प्रतिपक्षाऽसाधारणादिषु अव्याप्तिवारणायाऽनुमितीति। व्यभिचारादावव्याप्तिवारणाय तत्कारणेति। हेत्वाभासनिरूपणप्रयोजनमाह। निग्रहायेति। पराजयायेत्यर्थः। स्वस्य विजयायेति यावत्। विजयश्च पराहंकारखण्डनम्। अहमुत्कृष्ट इति ज्ञानं वा। इदमुपलक्षणम्। तत्वनिर्णयायेत्यपि बोध्यम्।

**दी०—अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम्।**

**गं०—अनुमितीति** अनुमितेः प्रतिबन्धकं अनुमितिप्रतिबन्धकम्।

---

टि० १ तच्च स्वव्यापकतत्कत्वम्, तथाचाऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं समुदितार्थः।

अनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावदित्यर्थः। अनुमितिपदं च पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकसमूहालंबनानुमितिपरम्। बाधादिसंग्रहाय साध्यवानिति। व्यभिचारादिसंग्रहाय साध्यव्याप्यहेतुमानिति। अनुमितिप्रतिबन्धकं च तद्यथार्थज्ञानं चेति अनुमितिप्रतिबन्धकयथार्थज्ञानम्। तस्य विषयः। तस्य भावस्तत्त्वमिति। एवं च ह्रदो वन्हिमानित्यत्र वन्ह्यभाववद्ह्रदे लक्षणसमन्वयः तथा हि। **अनुमितिः**–ह्रदो वन्हिमान् वन्हिव्याप्यधूमवांश्चेति समूहालंबनरूपा–**तत्प्रतिबन्धकं** यद् यथार्थज्ञानं वन्ह्यभाववान् ह्रद इत्याकारकं तद्विषयत्वस्य वन्ह्यभाववद्ह्रदे सत्त्वादिति। एवं धूमवान् वन्हेरित्यत्र धूमाभाववद्वृत्तिवन्हिरूपव्यभिचारेऽपि। तथा हि। **अनुमितिः**-पर्वतो धूमवान् धूमव्याप्यवन्हिमांश्चेति समूहालंबनात्मिका। तत्प्रतिबन्धकं यद् यथार्थं ज्ञानं धूमाभाववद्वृत्तिवन्हिरित्याकारकं ज्ञानं "व्यभिचारनिश्चयस्य व्याप्तिज्ञानांशे प्रतिबन्धकत्वात्" तद्विषयत्वस्य धूमाभाववद्वृत्तिवन्हिरूपव्यभिचारे सत्त्वादिति। पर्वतो वन्हिमान् धूमादित्यत्र वन्ह्यभावेऽतिव्याप्तिः पर्वतो वन्हिमानित्यनुमितिप्रतिबन्धकं यत्पर्वतो वन्ह्यभाववानित्याकारकं भ्रमात्मकं ज्ञानं तद्विषयत्वस्य वन्ह्यभावे सत्त्वात्। अतो **यथार्थेति**।[१] यथार्थपदोपादाने तु पर्वतो वन्ह्यभाववानिति ज्ञानस्य यथार्थत्वाभावान्नातिव्याप्तिः। तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनी अथ च साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताशालिनी या अनुमितिः तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं समुदितार्थ इत्यन्यत्र विस्तरः।

## सव्यभिचारोऽनैकान्तिकः। स त्रिविधः- साधा-

---

टि० १ न च तथापि अनुमितिप्रतिबन्धकयथार्थविषयत्वमित्येवोच्यतां किं ज्ञानपदेनेति वाच्यम्। पर्वतो वन्हिमानित्यत्र कामिनीज्ञानेऽतिव्याप्तेः। कामिनीजिज्ञासायाः कामिनीज्ञानान्यज्ञानमात्रे प्रतिबन्धकतया तद्विषयत्वस्य कामिनीज्ञाने सत्त्वादिति।

रणाऽसाधारणानुपसंहारिभेदात्। तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। यथा पर्वतोऽग्निमान् प्रमेयत्वात् इति। प्रमेयत्वस्य वन्ह्यभाववति ह्रदे विद्यमानत्वात्।

न्या०—सव्यभिचारं विभज्य दर्शयति साधारणेति। साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम्। साधारणत्वं साध्याभाववद्वृत्तित्वम्। वन्हिमान् प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ वन्ह्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वन्ह्यभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

दी०—सव्यभिचारं विभजते स त्रिविध इति। साधारणं लक्षयति तत्रेति। उदाहरति यथेति।

गं०—मूले। अनैकान्तिक इति। एकान्ते साध्यवत्येव वर्त्तते इति ऐकान्तिकः। न ऐकान्तिकः अनैकान्तिकः। साध्याभाववद्वृत्तिरिति यावत्। तत्र। साधारणाऽसाधारणानुपसंहारिषु मध्ये। साध्याभाववद्वृत्तिरिति। साध्यस्याऽभावः साध्याभावः साध्याभावो यत्रास्तीति साध्याभाववान्, साध्याभाववतो वृत्तिर्यस्येति साध्याभाववद्वृत्ती तस्य भावः साध्याभाववद्वृत्तित्वम् यथा पर्वतो वन्हिमान् प्रमेयत्वादित्यत्र साध्यो वन्हिः साध्याभावो वन्ह्यभावः तदधिकरणं ह्रदः तन्निरूपितवृत्तित्वं प्रमेयत्वे इति लक्षणसमन्वयः। तथा च प्रमेयत्वं वन्ह्यभाववद्वृत्तीति निश्चयः प्रमेयत्वं वन्ह्यभाववदवृत्तीति व्याप्तिबुद्धौ प्रतिबन्धकः एवं साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वमपि व्यभिचारः। एवं च वन्हित्वं प्रमेयत्ववन्निष्ठाभावप्रतियोगितावच्छेदकमिति व्यभिचारनिश्चयः वन्हित्वं प्रमेयत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकमिति "सिद्धान्तव्याप्तिघटक" व्यापकताबुद्धौ विरोधीति।

यद्यपि साध्यवद्वृत्तित्वे सति साध्याभाववद्वृत्तित्वमेव व्यभिचारो वाच्यः। अन्यथा विरुद्धेऽतिव्याप्तिः स्यात्, तथापि सत्यन्तदलमनुपादेयमेव, विरुद्धस्य साधारणत्वेऽपि क्षत्यभावात्, उपधेयसंकरेऽपि उपाधेरसांकर्यात्, दूषकताबीजस्य पार्थक्याच्चेति ध्येयम्। मूले। विद्यमानत्वादित्यनन्तरं साधारणानैकान्तिकत्वं तस्येति पूरणीयम्।

**सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः। यथा शब्दोऽनित्यः शब्दत्वादिति। शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्ति।**

न्या०—असाधारण इति सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवदवृत्तित्वम्। साध्यवदवृत्तित्वं च साध्यासामानाधिकरण्यम्। हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

दी०—असाधारणं लक्षयति—सर्वेति।

गं०—असाधारणं लक्षयतीति। सपक्षाश्च विपक्षाश्चेति सपक्षविपक्षाः। सर्वे च ते सपक्षविपक्षाश्चेति सर्वसपक्षविपक्षाः "सपक्षश्च निश्चितसाध्यवान्, विपक्षश्च निश्चितसाध्याभाववान्" तेभ्यो व्यावृत्तः "तदवृत्तिः" इति। तथा च सर्वनिश्चितसाध्यवदवृत्तित्वे सति सर्वनिश्चितसाध्याभाववदवृत्तित्वे सति पक्षवृत्तित्वमसाधारणस्य लक्षणम्। वह्निमान् धूमादित्यत्र धूमहेतोः सर्वविपक्षव्यावृत्तत्वेनाऽतिव्याप्तिवारणाय प्रथमसत्यन्तम्। तत्रापि सर्वपदं तत्रैव धूमहेतावतिव्याप्तिवारणाय, धूमहेतोः अयोगोलकादिरूपयत्किंचित्सपक्षव्यावृत्तत्वात्। सर्वपदात्सपक्षनिरूपितवृत्तित्वसामान्याभावलाभः। पर्वतो वह्निमान् पर्वतह्रदान्यतरत्वादित्यादौ तादृशान्यतरत्वे "साधारणव्यभिचारिणि" अतिव्याप्तिः, तादृशहेतोः सपक्षव्या-

वृत्तित्वादतो द्वितीयसत्यन्तम् । तादृशहेतोरपि कासाररूपयत्किंचिद्विपक्षव्यावृत्तत्वादतिव्याप्तिवारणाय सर्वपदम् । विपक्षवृत्तित्वसामान्याभावनिवेशलाभार्थम् । अवृत्तिगगनादिहेतावतिव्याप्तिवारणाय विशेष्यदलम् । लक्ष्यं दर्शयति । **यथेति** । अत्र शब्दः पक्षः । नित्यत्वं साध्यम् । शब्दत्वं हेतुः । अत्र सपक्षाः आकाशादयो नित्याः । विपक्षाः अनित्याः घटादयः तदुभयव्यावृत्तं शब्दत्वम्, पक्षमात्रवृत्ति चेत्याह । **शब्दत्वं हीति** । अत्र प्रथमसत्यन्तदले निश्चितत्वं न देयम्, एवं द्वितीयसत्यन्तमपि न देयम्, दूषकतायामनुपयोगात् । एवं च साध्यवदवृत्तित्वमेवाऽशिष्टमित्याह । साध्यवदवृत्तित्वं चेति । अयं हेतुः साध्यसामानाधिकरण्याभाववानिति निश्चयस्य व्याप्तिघटकीभूतसाध्यसामानाधिकरण्यज्ञाने विरोधित्वमिति ।

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वादिति । अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति ।**

न्या०—अनुपसंहारिणं लक्षयति अन्वयेति । उभयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः । सर्वस्यैव पक्षत्वात् पक्षातिरिक्ताप्रसिद्धेरिति भावः । वस्तुतस्तु अत्यन्ताभावाप्रतियोगिसाध्यकत्वमेवानुपसंहारित्वम् इति बोध्यम् ।

दी०—अनुपसंहारिणो लक्षणमाह । अन्वयेति ।

गं०—मूले । **अन्वयेति** । अन्वयदृष्टान्तरहितत्वे सति व्यतिरेकदृष्टान्तरहितत्वमनुपसंहारिणो लक्षणम् । **अन्वयः** । अन्वयव्याप्तिः । **व्यतिरेकः** व्यतिरेकव्याप्तिः । तथा चाऽन्वयव्याप्तौ व्यतिरेकव्याप्तौ च दृष्टान्तरहितो यो हेतुः सोऽनुपसंहारीत्यर्थः । केवलान्वयिनि सद्धेतौ अतिव्याप्तिवारणायान्वयदृष्टान्तरहितत्वोपादानम् । केवलव्यतिरेकिणि अतिव्याप्तिवारणाय विशेष्यदलम् । उदाहरति । **यथेति** । अत्र सर्वं पक्षः अनित्यत्वं साध्यम् ।

प्रमेयत्वं हेतुः। नह्यन्यत्राऽन्वयव्याप्तौ व्यतिरेकव्याप्तौ च दृष्टान्तसंभव इत्याह **अत्रेति**। प्रमेयत्वलिंगकानुमाने इत्यर्थः। **सर्वस्यापीति**। अपि एवकारार्थे सर्वस्यैव पक्षत्वादित्यर्थः। साध्यवत्वेन सन्दिह्यमानत्वादिति यावत्। **दृष्टान्तोनास्तीति**। पक्षातिरिक्तस्य दृष्टान्तत्वादिति भावः सर्वत्र साध्यसन्देहे काप्यन्वयव्यतिरेकसहचारनिश्चयाऽसंभवेन व्याप्तिनिश्चयप्रतिबन्धकत्वैतस्य फलम्। इदं तु प्राचीनमतम्। सहचाराऽग्रहः सहचारनिश्चये एव साक्षाद्विरोधी, नाप्यनुमितौ तत्कारणे वा परंपरया व्याप्तिज्ञानविरोधित्वेऽपि साक्षाद्विरोधिनः एव हेत्वाभासत्वात्। एवं च नोक्ताऽनुपसंहारित्वस्य हेत्वाभासत्वसंभव इति प्राचीनमते दोषमनुसन्धाय नव्यमतेनाऽह। **वस्तुतस्त्विति**। तथा च साध्यमत्यन्ताभावाऽप्रतियोगीति निश्चयः व्यतिरेकव्याप्तिज्ञाने प्रतिबन्धक इति भावः।

**साध्याभावव्याप्तो हेतुर्विरुद्धः॥ यथा शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि नित्यत्वाभावेनाऽनित्यत्वेन व्याप्तम्।**

न्या०—विरुद्धं लक्षयति साध्याभावव्याप्त इति। साध्याभावव्याप्तिः साध्याभावनिरूपितव्यतिरेकव्याप्तिः साध्यव्यापकीभूताभावप्रतियोगित्वम्। तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात्। पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम्।

दी०—विरुद्धं लक्षयति। साध्येति।

गं०—मूले **साध्याभावेति**। साध्यस्याऽभावः साध्याभावः। प्रतियोगित्वं षष्ठ्यर्थः। साध्यप्रतियोगिकाभाव इत्यर्थः। तेन व्याप्तः **व्याप्तः** व्याप्तिमान्। व्यतिरेकव्याप्तिमानिति यावत्। साध्यस्य व्यतिरेकव्याप्तिः साध्याभावघटिता, यथा वन्ह्यभावव्यापकीभूताभावप्रतियोगित्वं वन्हेर्व्यतिरेकव्याप्तिः। अत्र तु साध्याभावस्य व्यतिरेकव्याप्तिः साध्याभावाभावघटिता।

साध्याभावाभावस्य साध्यरूपतया साध्यघटितेति यावत् । तामेवाह **साध्यव्यापकीभूतेति** । यत्र यत्र साध्याभावाभावः तत्र तत्र हेत्वभावः इति व्यतिरेकसहचारो बोध्यः । व्यापकस्याभावो व्याप्यो भवति, व्याप्यस्याभावो व्यापको भवतीति नियमः । व्यापकश्चात्र हेत्वभावः तदभावो हेतुर्व्याप्यः, व्याप्यश्च साध्याभावाभावः, साध्यम्, तदभावः "साध्याभावः" व्यापकः । तथा च साध्याभावव्याप्तो हेतुरिति लक्षणं संपन्नम् । साध्यव्यापकीभूताभावप्रतियोगित्वमिति यावत् । उदाहरति । **यथेति** । अत्र शब्दः पक्षः । नित्यत्वं साध्यम् । कृतकत्वं हेतुः । "कृतकत्वं च कार्यत्वम् ।" यत्र यत्र नित्यत्वं तत्र तत्र कृतकत्वाभाव इति सहचारबलेन साध्यीभूतनित्यत्वव्यापकीभूतो योऽभावः कृतकत्वाभावः तत्प्रतियोगित्वं कृतकत्वे इति लक्षणसमन्वयः । अत्र नित्यत्वव्यापकीभूताभावप्रतियोगिकृतकत्वरूपो विरोधो दोषः । तद्ज्ञानं "नित्यत्वव्यापकीभूताभावप्रतियोगिकृतकत्वं इत्याकारकं" कृतकत्वमान् शब्द इति पक्षधर्मताज्ञानसहकारेण शब्दो नित्य इत्याकारकानुमितिविरोधि, तादृशज्ञानस्य साध्याभावानुमितेः कारणत्वात् । विरोधित्वमुपपादयति । तथा चेति । **साध्याभावव्याप्येति** । साध्याभावनिरूपितव्यतिरेकव्याप्तिमदित्यर्थः । तथा च साध्याभावाभाव "साध्य" व्यापकीभूताभावप्रतियोगिहेतुप्रकारकज्ञानादित्यर्थः । शब्दो नित्यत्वव्यापकीभूताभावप्रतियोगिकृतकत्ववानिति ज्ञानादिति यावत् । **पक्षविशेष्यकेति** । शब्दो नित्यः, इत्याकारकानुमितिप्रतिबन्धः फलमित्यर्थः ।

न्या०—एवं सत्प्रतिपक्षेऽपि । विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः । सत्प्रतिपक्षे द्वौ हेतू, विरुद्धे एको हेतुरिति यावत् । साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि ।

**गं०—एवं सत्प्रतिपक्षेऽपीति** । यथा विरोधनिश्चयस्य साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धः फलम्, तथा साध्याभाव-

व्याप्यहेतुमान् पक्षः इत्याकारकसत्प्रतिपक्षनिश्चयस्याऽपि साध्याभावाऽनुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धः फलमिति भावः। ननु तर्हि कथमनयोर्भेद इत्यत आह। **विशेषस्त्वति**। तथा च हेतुभेदे सत्प्रतिपक्षः। हेत्वैक्ये विरोध इति भावः। भेदकान्तरमपि दर्शयति। **साध्याभावेति**। तथा च सत्प्रतिपक्षे द्वितीयो हेतुः साध्याभावसाधकः। विरुद्धस्थले तु वस्तुगत्या साध्याभावसाधके हेतावेव साध्यसाधकत्वभ्रम इत्यसामर्थ्यसूचकत्वम्। तथाचाऽसामर्थ्यसूचकत्वमेव भेदसाधकमिति भावः।

**यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः। यथा शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्। शब्दोऽनित्यः कार्यत्वात् घटवदिति।**

दी०— सत्प्रतिपक्षं लक्षयति यस्येति।

गं०— सन् विद्यमानः प्रतिपक्षः "प्रकृतसाध्याभावसाधकीभूतोऽन्यो हेतुः" यस्येति व्युत्पत्त्या लभ्यमेवार्थं स्पष्टीकरोति। मूले। **यस्येति**। यत्पदं प्रकृतपक्षपरम्। संबन्धित्वं षष्ठ्यर्थः। तस्य साध्येऽन्वयः। तथा च प्रकृतपक्षसंबन्धि यत्साध्यं तदभावव्याप्यहेत्वन्तरस्य ज्ञानं प्रकृतपक्षेऽस्ति सः सत्प्रतिपक्ष इति। तथा च साध्याभावव्याप्यहेतुमान् पक्षः इति निश्चयः पक्षः साध्यवानित्यनुमितिविरोधी। सत्प्रतिपक्षस्तु साध्याभावव्याप्यहेतुमत्पक्षरूप एव। उदाहरति। **यथेति**। अत्र शब्दः पक्षः नित्यत्वं साध्यम्। श्रावणत्वं हेतुः। श्रावणत्वं च श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वम्। नित्यत्वव्याप्यश्रावणत्ववान् शब्द इति परामर्श एव सत्प्रतिपक्षनिश्चयः। तद्विषयीभूतो नित्यत्वव्याप्यश्रावणत्ववच्छब्दरूपः सत्प्रतिपक्षः। एतन्निश्चयश्च शब्दोऽनित्य इत्यनुमितौ विरोधी। द्वितीये शब्दः पक्षः। अनित्यत्वं साध्यम्। कार्यत्वं हेतुः, अनित्यत्वव्याप्यकार्यत्ववान् शब्द इति परामर्शः, स एव सत्प्रतिपक्षनिश्चयः। तद्विषयीभूतोऽनित्यत्वव्याप्यकार्यत्ववच्छब्दरूपः सत्प्रतिपक्षः।

एतन्निश्चयश्च शब्दोनित्य इत्यनुमितौ विरोधी। एवंपरस्पराऽभावव्याप्य-वत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम्। तथा च स्वसाध्यविरुद्धसाध्याभाववद्व्याप्यहेतुप्रकारतानिरूपितपक्षतावच्छेकावच्छिन्नविशेष्यताशालिनिश्चय-कालीनप्रकृतसाध्यव्याप्यहेतुप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्य-ताशालिनिश्चयविषय इति फलितम्। सत्प्रतिपक्षश्चाऽनित्यदोषः। विरोधि परामर्शकाले सद्धेतोरपि सत्प्रतिपक्षितत्वादिति ध्येयम्। केचित्तु विरोधि-परामर्शकालेऽपि जलादिहेतोरेव सत्प्रतिपक्षितत्वम्, न तु धूमादिहेतोरिति सत्प्रतिपक्षदोषो नित्य एव, अन्यथा बाधस्याऽप्यनित्यदोषत्वापत्तेरिति वदन्ति।

**असिद्धस्त्रिविधः। आश्रयासिद्धः, स्वरूपासिद्धो ऽव्याप्यत्वासिद्धश्चेति। आश्रयासिद्धो यथा गगनार-विन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् इति। अत्र गगनारविन्दमाश्रयः स च नास्त्येव।**

न्या०—आश्रयासिद्ध इति। आश्रयासिद्धिर्नामपक्षे पक्षता-वच्छेदकविरहः। यथेति। अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभानुमितिप्रतिबन्धः फलम्।

दी०—आश्रयासिद्धमुदाहरति—गगनेति।

गं०—आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धिसामान्यलक्षणम्। असिद्ध-भेदमाह त्रिविध इति। पक्षे पक्षतावच्छेदकविरह इति। पक्षता-वच्छेदकाभाववत्पक्षत्वं वा आश्रयासिद्धिः। अत्र गगनारविन्दं पक्षः। सुरभित्वं साध्यम्। अरविन्दत्वं हेतुः। गगनीयत्वं पक्षतावच्छेदकम्। गगनीयत्वाभाववदरविन्दरूपाऽऽश्रयासिद्धिः। तन्निश्चयः "गगनीयत्वाभाव-वदरविन्दमित्याकारकः" गगनारविन्दमिति पक्षज्ञाने विरोधी। तथा च पक्षघटिततया अनुमितौ परामर्शे च प्रतिबन्धक इति ध्येयम्। स च नास्त्येवेति। अरविन्दस्य गगनीयत्वं नास्तीत्यर्थः।

स्वरूपासिद्धो यथा शब्दोऽनित्यश्चाक्षुषत्वात् रूपवदिति। अत्र चाक्षुषत्वं पक्षे नास्ति शब्दस्य श्रावणत्वात्।

न्या०—स्वरूपासिद्ध इति। स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः। तथा च हेत्वभावविशिष्टपक्षज्ञानात् पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम्।

दी०—स्वरूपासिद्धमुदाहरति—शब्द इति।

गं०—स्वरूपं हेतुः। तस्याऽसिद्धिः, तस्याऽभावः तद्वान्[1] हेतुरित्यर्थः। पक्षे हेत्वभाव इति। हेत्वभाववत्पक्षत्वं वा स्वरूपासिद्धिः। अत्र शब्दः पक्षः। अनित्यत्वं साध्यम्। चाक्षुषत्वं हेतुः। चाक्षुषत्वाभाववच्छब्दरूपा स्वरूपाऽसिद्धिः। एतन्निश्चयः "चाक्षुषत्वाभाववान् शब्द इत्याकारकः" परामर्शे विरोधी।

एतस्या एव भेदो भागाऽसिद्धिः। सा च पक्षतावच्छेदकसामानाधिकरण्येन हेतोरभावः। यथा शब्दोऽनित्यः संयोगजत्वादिति। अत्र शब्दजशब्दे हेतोरभावः। स्वरूपासिद्धिस्तु पक्षतावच्छेदकावच्छेदेन हेतोरभाव इति विशेषः।

सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। यथा पर्वतो धूमवान् वन्हिमत्वात्, इत्यत्रार्द्रेन्धनसंयोग उपाधिः। तथाहि। यत्र धूम-

टि०—१ तद्वत्ता च हेतौ स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन।

स्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम्। यत्र वन्हिस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनाभावात् इति साधनाऽव्यापकत्वम्। एवं साध्यव्यापकत्वे सति साधनाऽव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः। सोपाधिकत्वाद् वन्हिमत्वं व्याप्यत्वासिद्धम्।

गं०—व्याप्यत्वस्याऽसिद्धिर्यस्मात्स व्याप्यत्वाऽसिद्धिः, उपाधिरेव। उपाधिश्च व्यभिचारित्वसंबन्धेन हेतौ वर्त्तते, तथा चोपाधिमान् हेतुर्व्याप्यत्वाऽसिद्ध इत्यर्थः। हेतौ व्यभिचारित्वसंबन्धेनोपाधिमत्वम् व्याप्यत्वासिद्धस्य लक्षणम्। साध्यव्यापकतां निर्वक्ति। साध्यसमानाधिकरणेति। साध्याधिकरणवृत्तीत्यर्थः। "यथा धूमवान् वन्हेरित्यत्र" साध्यो धूमः साध्याधिकरणं पर्वतादिः तत्र वर्त्तते योऽत्यन्ताभावः "धूमाधिकरणे आर्द्रेन्धनसंयोगाभावो गृहीतुं नैव शक्यते धूमे आर्द्रेन्धनसंयोगस्य सहकारित्वात् किन्तु" घटाद्यभाव एव तत्प्रतियोगित्वं घटे, अप्रतियोगित्वं आर्द्रेन्धनसंयोगे, इति आर्द्रेन्धनसंयोगस्य साध्यव्यापकत्वम्। साधनाऽव्यापकत्वं निर्वक्ति। साधनेति। यथा तत्रैव साधनं वन्हिः तदधिकरणमयोगोलकं तत्र वर्त्तते योऽत्यन्ताभावः आर्द्रेन्धनसंयोगाभावः तत्प्रतियोगित्वस्य आर्द्रेन्धनसंयोगे विद्यमानत्वादार्द्रेन्धनसंयोगस्य साधनाऽव्यापकता। यादृशहेतौ उपाधिरस्ति तादृशहेतुमुदाहरति। यथेति। उपाधौ साध्यव्यापकताग्राहकाऽन्वयसहचारं दर्शयति। यत्र धूम इति। उपाधौ साधनव्यापकत्वन्तु नास्ति साधनव्यापकताग्राहकसहचाराऽभावात्, इति साधनाऽव्यापकत्वं निर्विवादमेवेति आर्द्रेन्धनसंयोगस्योपाधित्वं संप्रतिपन्नमित्याह। एवमिति। उपाधिविशिष्टत्वेन वन्हिमत्वहेतोर्व्याप्यत्वासिद्धत्वमित्याह। सोपाधिकत्वादिति।

न्या०—व्याप्यत्वासिद्ध इति। प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद् धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्। एवं वन्हेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद् वन्हौ तदव्याप्यत्वं गृहीतम् तदेव व्यभिचरितत्वम्। तथा चोपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचरितत्वं गृहीतमेव अनुमानप्रकारश्च पूर्वानुमानहेतुं पक्षीकृत्य वन्हिर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात् घटत्वादिवत् यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारीति बोध्यः एवम्प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम्। तथा च धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वन्हौ धूमाभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

दी०—व्याप्यत्वासिद्धस्य लक्षणमाह सोपाधिक इति उपाधेर्लक्षणमाह साध्येति।

गं०—एवमिति। उपाधिः साध्यव्यापको भवति। "व्यापकः व्यभिचारी भवति, यथा धूमव्यापको वन्हिः धूमव्यभिचारीच" हेतुस्तु उपाधेरपि व्यापको भवति "व्यभिचारी भवतीति यावत्" हेतुर्यदि उपाधिव्यभिचारी स्यात् तदा साध्यव्यभिचारी अपि स्यात्। व्यापकव्यभिचारिणो व्याप्यव्यभिचाराऽवश्यकत्वात्। तदेवाह। वन्हेरिति। तदव्याप्यत्वम्। उपाध्यव्याप्यत्वम्। अव्यापकत्वमिति यावत्। तदेव। अव्याप्यत्वमेव। गृहीतमेवेति। व्यापकव्यभिचारिणो व्याप्यव्यभिचाराऽवश्यकत्वादिति भावः। पक्षे वन्हौ। एवं सत्प्रतिपक्षोत्थापनमपि उपाधेः फलम् यथा अयोगोलकं धूमवद् वन्हेरित्यत्र अयोगोलकं धूमाभाववद् धूमव्यापकाऽऽर्द्रेन्धनसंयोगाभावादिति ध्येयम्।

दी०—उपाधिश्चतुर्विधः। केवलसाध्यव्यापकः, पक्षधर्मावच्छि-

न्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । आद्य आर्द्रेन्धनसंयोगः । द्वितीयो यथा—"वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्" इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम् । तृतीयो यथा—प्रागभावो विनाशी जन्यत्वात् इत्यत्र जन्यत्वावच्छिन्नाऽनित्यत्वव्यापकं भावत्वम् । चतुर्थस्तु 'अत्यन्ताभावो विनाशी प्रमेयत्वात्' इत्यत्र जन्यत्वावच्छिन्नाऽनित्यत्वव्यापकं भावत्वम् ।

गं०—न्यूनतापरिहाराय उपाधिं विभजते । **उपाधिश्चतुर्विध** इति । **आद्यः** । केवलसाध्यव्यापकः । **आर्द्रेन्धनसंयोग** इति । धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोग इत्यर्थः । धूमत्वमात्रावच्छिन्नस्य व्यापक इत्यर्थः । **द्वितीयः** । पक्षधर्मावच्छिन्नसाध्यव्यापक इत्यर्थः । पक्षवृत्ति यत्किंचिद्धर्मावच्छिन्नसाध्यव्यापक इत्यर्थः । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र उपाधौ साध्यव्यापकत्वविरहेऽपि पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकत्वमस्त्येवेति नोपाधिभंगप्रसंगः । एतेन उद्भूतरूपवत्त्वं नोपाधिः, साध्यव्यापकत्वविरहात्, साध्यस्य आत्मनि सत्वात् तत्रोपाधेरभावादिति पूर्वपक्षः समाहितः । **तृतीयः** । साधनावच्छिन्नसाध्यव्यापकः । **प्रागभावो विनाशी जन्यत्वादित्यत्रेति** । अत्र भावत्वमुपाधिः । तस्य केवलसाध्यव्यापकत्वाभावात्, जन्यत्वस्य पक्षावृत्तित्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकत्वाभावात्, भावत्वे निरुक्तोपाधिद्वयलक्षणं न संभवतीति तृतीयोपाधिलक्षणस्याऽवश्यकतेति ध्येयम् । **चतुर्थस्तु** । उदासीनधर्मावच्छिन्नसाध्यव्यापक एवेत्यर्थः **प्रमेयत्वादिति** । अयं हेतुर्जन्यत्वस्योदासीनत्वसंपादनाय भावत्वमिति । चतुर्थोपाधिरिति पूर्वेणान्वयः । नह्यत्र भावत्वरूपोपाधौ निरुक्तोपाधिलक्षणत्रयसंभवः । भावत्वस्य केवलसाध्यव्यापकत्वाभावात्, जन्यत्वस्याऽत्यन्ताभावाऽवृत्तित्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकत्वाभात्, जन्यत्वस्य प्रकृतसाधनभिन्नत्वेन साधनावच्छिन्नसाध्यव्यापकत्वाभावाच्चेति ध्येयम् । इदमुप-

लक्षणम् । क्वचित्साधनव्यापकोऽपि उपाधिः । यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यत्र अनुष्णाशीतस्पर्शवत्त्वम् । एवं व्याप्त्यनवच्छेदक-हेतुतावच्छेदकत्वं व्याप्यत्वाऽसिद्धेर्लक्षणम्, यथा पर्वतो वन्हिमान् नीलधूमा-दित्यत्र नीलधूमत्वस्य न व्याप्यतावच्छेदकत्वम्, स्वसमानाधिकरणप्रकृतसाध्य-व्याप्यतावच्छेदकधर्मान्तराऽघटितस्यैव व्याप्यतावच्छेदकत्वात्, स्वं "गुरुधर्मो" नीलधूमत्वं तत्समानाधिकरणं अथ च प्रकृतसाध्यव्याप्यतावच्छेदकं यद् धर्मान्तरं धूमत्वं तद्घटितत्वेन तदघटितत्वाभावात् नीलधूमत्वरूपव्याप्यत्वा-सिद्धौ लक्षणसमन्वयः ।

एवं साध्याऽप्रसिद्धि-साधनाऽप्रसिद्धी अपि व्याप्यत्वाऽसिद्धावेवाऽ-न्तर्भूते । तत्र साध्ये साध्यतावच्छेदकाभावः साध्याऽप्रसिद्धिः । यथा पर्वतः काञ्चनमयवन्हिमान् धूमादित्यत्र कांचनमयत्वाभाववान् वन्हिरिति निश्चयस्य कांचनमयवन्हिरिति साध्यज्ञाने विरोधितया साध्यघटितत्वेन अनुमितौ व्याप्तिज्ञाने परामर्शे च विरोधित्वम् ।

हेतौ हेतुतावच्छेदकाभावः साधनाऽप्रसिद्धिः यथा पर्वतो वन्हिमान् काञ्चनमयधूमादित्यत्र काञ्चनमयत्वाभाववान् धूमः इति निश्चयस्य कांचन मयधूमः इति हेतुज्ञाने विरोधितया हेतुघटितत्वेन व्याप्तिज्ञाने परामर्शे च विरोधित्वमिति ।

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा वन्हिरनुष्णो द्रव्यत्वादिति । अत्रा-नुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति बाधितत्वम् । व्याख्यातमनुमानम् ।**

इति तर्कसंग्रहे अनुमानपरिच्छेदः ।

न्या०—यस्येति । 'यस्य' हेतोः । 'साध्याभावः' साध्यबाधः । प्रमाणान्तरेण प्रत्यक्षादि प्रमाणेन । पक्षे निश्चितः स बाधित इत्यर्थः ।

तथा च प्रात्यक्षिकसाध्यबाधनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम् । बाधितसाध्यकत्वाद् बाधितहेतुरित्युच्यते ।

न्यायबोधिन्यामनुमानपरिच्छेदः ।

दी०—बाधितस्य लक्षणमाह । यस्येति ।

गं०—पक्षे साध्याभावः, साध्याभाववत्पक्षो वा बाध इत्यर्थः । यथा ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ह्रदः, ह्रदवृत्तिवह्न्यभावो वा बाधः । ह्रदो वह्न्यभाववान्, ह्रदे वह्न्यभावः इति निश्चयो वा ह्रदोवह्निमानित्यनुमितौ विरोधी । अत्र वह्न्यभाववद्ह्रदो बाधः । एतादृशदोषवत्त्वस्य हेतौ सत्वात् हेतुर्बाधित इत्युच्यते । हेतौ दोषवत्त्वं च स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन । स्वं वह्न्यभाववद्ह्रदादिरूपो दोषः, स्वविषयकं यद्ज्ञानं वह्न्यभाववान् ह्रदो धूमश्चेति समूहालंबनात्मकं ज्ञानम् । तद्विषयीभूतं यद् "हेतुतावच्छेदकं" धूमत्वं तद्वत्त्वं धूमे । तथा च एतादृशसंबन्धेन वह्न्याभाववद्ह्रदवान् धूम इति धूमे बाधितत्वम् । सर्वत्र दोषवत्वमेतादृशसंबन्धेनैव ग्राह्यम् । ज्ञानं च दोष-हेतुविषयकसमूहालंबनरूपं ग्राह्यम् ।

एवमुत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यत्र, मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्र च गन्धाभाववदुत्पत्तिकालावच्छिन्नघटरूपः, कपिसंयोगाभाववन्मूलावच्छिन्नवृक्षरूपश्च बाधो बोध्य इति ।

अत्र सामानाधिकरण्येनाऽनुमितिं प्रति अवच्छेदावच्छेदेन बाधनिश्चयः प्रतिबन्धकः । अवच्छेदावच्छेदेनाऽनुमितौ तु सामानाधिकरण्येन बाधनिश्चयः, अवच्छेदावच्छेदेन बाधनिश्चयश्चोभयं प्रतिबन्धकमिति ध्येयम् ।

दी०—अत्र बाधस्य ग्राह्यभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम् । इतरेषां परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याऽव्यभिचाराभाववत्तया, विरुद्धस्य सामानाधिकरण्याभाववत्तया, व्याप्यत्वासिद्धस्य

विशिष्टव्याप्यभाववत्तया, असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम्। आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम्। उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः। सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धावन्तर्भवतीति प्राञ्चः। निग्रहस्थानान्तरमिति नवीनाः।

इत्यनुमानपरिच्छेदः।

गं०—बाधादिदोषाणां दूषकताबीजं दर्शयति। **अत्रेति।** दोषपंचकमध्ये इत्यर्थः। **बाधस्य।** बाधनिश्चयस्य। **ग्राह्याभावनिश्चयत्वेनेति।** ग्राह्यस्य "साध्यस्य" यो भावस्तद्विषयकत्वेनेत्यर्थः। साध्याभावविषयकत्वेनेति यावत् अस्य साक्षादनुमितिप्रतिबन्धकत्वमिति परेणान्वयः। **सत्प्रतिपक्षस्येति।** साध्याभावव्याप्यहेतुमान्पक्षः इति निश्चयस्येत्यर्थः। **विरोधिज्ञानसामग्रीत्वेनेति।** साध्याभावानुमितिसामग्रीत्वेनेत्यर्थः तदभावव्याप्यवत्तानिश्चयत्वेनेति यावत्। **इतरेषाम्।** बाधसत्प्रतिपक्षभिन्नानाम्। तादृशदोषनिश्चयानामिति यावत्। **परामर्शप्रतिबन्धकत्वमिति।** अत्रापि साक्षादित्यनुपज्यते। **तत्रापि।** बाधसत्प्रतिपक्षदोषभिन्नेष्वपि। **सिद्धसाधनन्त्विति।** अवधारणार्थकस्तु शब्दः। आश्रयासिद्धावित्युत्तरं योजनीयः। **पक्षताविघटकतया।** सिद्ध्यभावरूपपक्षताविघटकतया। **आश्रयासिद्धावन्तर्भवतीति।** आश्रयासिद्धावेवान्तर्भवतीत्यर्थः। **नवीना इति।** न्यूनाऽधिकापसिद्धान्तवत् हेत्वाभासभिन्नमेव निग्रहस्थानं तदित्यर्थः।

इति गंगायामनुमानपरिच्छेदः।

उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्। तथाहि—कश्चिद् गवयपदवाच्यमजानन् कुतश्चिदारण्यकपुरुषाद् "गोसदृशो गवय" इति वाक्यं श्रुत्वा वनं

**गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति । तद-नन्तरम् 'अयं गवयपदवाच्यः' इत्युपमितिरुत्पद्यते । इत्युपमानम् ।**

इति तर्कसंग्रहे उपमानपरिच्छेदः ।

न्या०—उपमानं लक्षयति—उपमितिकरणमिति । उपमितिं लक्षयति संज्ञासंज्ञीति । संज्ञा नाम पदम् । संज्ञी अर्थः । तयोः सम्बन्धः शक्तिः । तथा च पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः । उपमानं नामातिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । उपमितिः, फलम् । गोसदृशो गवय इत्याकारकवाक्याद् गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम् ।

इति न्यायबोधिन्यामुपमानपरिच्छेदः ।

दी०—उपमानं लक्षयति । उपमितीति ।

इत्युपमानपरिच्छेदः ।

गं०—मूले । **उपमितिकरणमिति ।** उपमितेः करणमुपमितिकरणम् । निरूपितत्वं षष्ठ्यर्थः । तथा चोपमितिनिरूपितकरणत्वमुपमानस्य लक्षणम् । **संबन्धज्ञानमिति ।** शक्तिप्रकारकज्ञानमेवोपमितिरित्यर्थः । शक्तिश्च वाच्यत्वरूपा "वाचकः पदं भवति, अर्थो वाच्यो भवति वाच्यत्व अर्थे तिष्ठति" उपमित्याकारस्तु गवयो गवयपदवाच्य इति । अत्र गवयो विशेष्यः, गवयपदवाच्यत्वं प्रकारः । तथा च शक्तिप्रकारकज्ञानत्वसत्वा-

लक्षणसमन्वयः । तत्करणमिति । उपमितिकरणमित्यर्थः । सादृश्यज्ञानमिति । व्यक्तिविशेष्यकसादृश्यप्रकारकनिश्चय इत्यर्थः । स च अयं गोसदृश इत्याकारकः । व्यापारश्चात्र अतिदेशवाक्यार्थस्मृतिः । प्रक्रियां दर्शयति तथाहीत्यादिना । कश्चिदिति । ग्रामीण इत्यर्थः । गवयपदवाच्यमिति । गवयशब्दार्थमित्यर्थः । अजानन्निति । विशेषरूपेण ज्ञानशून्य इत्यर्थः । विशेषरूपेण गवयशब्दार्थजिज्ञासया यं कंचनाऽऽरण्यकमुद्दिश्य कीदृशो गवयशब्दार्थ इति प्रश्नानन्तरमिति शेषः । कुतश्चिदिति । यस्मात्कस्माचिदित्यर्थः । इति वाक्यं श्रुत्वेति । गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकशाब्दबोधानन्तरमित्यर्थः । वाक्यार्थं स्मरन्निति । स्मरिष्यन्नित्यर्थः । स्मरणस्य दर्शनोत्तरभावित्वाद्यथाश्रुताऽसंगतेः । वस्तुतस्तु गोसदृशं पश्यन् वाक्यार्थं स्मरतीत्येवपाठः साधुः । पश्यतीति । अयं गोसदृश इति चाक्षुषवान् भवतीत्यर्थः । तदनन्तरं । प्रत्यक्षानन्तरम् । अयं गवयपदवाच्य इति । इदन्त्वावच्छिन्नविशेष्यतानिरूपितगवयपदवाच्यत्वप्रकारताशालिज्ञानमुपमितिः । इदं च प्राचीनमतम् । नवीनमते गवयो गवयपदवाच्य इत्युपमितिः । गवयत्वावच्छिन्नविशेष्यतानिरूपितगवयपदवाच्यत्वप्रकारताशालिज्ञानमिति यावत् । प्राचीनमतानुसरणे इदन्त्वावच्छिन्ने शक्तिग्रहेऽपि गवयान्तरे शक्तिग्रहाभावप्रसंगादिति । इदमुपलक्षणम् । वैधर्म्योपमितिमपि स्वीकुर्वन्ति टीकाकृतः । तत्र वैधर्म्यविशिष्टपिण्डदर्शनं करणम् । जलादिविधर्मगुणवती पृथिवीत्यतिदेशवाक्यार्थस्मरणं व्यापारः । पृथिवी पृथिवीपदवाच्येत्युपमितिः फलमित्यपि बोध्यम् ।

इति गंगायामुपमानपरिच्छेदः ।

**आप्तवाक्यं शब्दः आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः । यथा गामानाय शुक्लां दण्डेनेति ।**

न्या०—शब्दं लक्षयति । आप्तेति । आप्तोच्चरितत्वे सति

वाक्यत्वं शब्दस्य लक्षणम् । प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम् । वाक्यत्वमात्रोक्तौ अनाप्तोच्चरितवाक्येऽतिव्याप्तिः, अत आप्तोच्चरितत्वनिवेशः । तावन्मात्रोक्तौ जवगड़दशादावतिव्याप्तिरतो वाक्यत्वम् । आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् । तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसितोर्थः । वस्तुतस्तु पदज्ञानं करणम् वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः । वाक्यार्थज्ञानं शाब्दबोधः फलम् ।

दी०—शब्दं लक्षयति । आप्तेति । वाक्यं लक्षयति । वाक्यमिति ।

गं०—शब्दं लक्षयतीति । शब्दविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान् मूलकार इति बोधः । मूले । **आप्तवाक्यमिति** । आप्तस्य वाक्यं आप्तवाक्यम्, संबन्धित्वं षष्ठ्यर्थः । संबन्धश्च उच्चरितत्वरूपः । आप्तवाक्यमिति । भावप्रधानो निर्देशः फलितार्थमाह । **आप्तोच्चरितत्वे सतीति** । शब्द इति लक्ष्यनिर्देशः । शब्द्यते व्यज्यते शाब्दबोधविषयीक्रियते अर्थो अनेनेति शाब्दप्रमाकरणं तदर्थः । प्रमाणशब्द इति यावत् । ननु आप्तः इष्टजनः तदुच्चरितत्वे सति वाक्यत्वरूपशब्दप्रमाणलक्षणमनुपपन्नम्, इष्टजनोच्चरितबाधितार्थवाक्येऽतिव्याप्तेरित्यत आह । **आप्तत्वं चेति** । प्रयोगहेतुभूतं यद् यथार्थज्ञानं तद्वत्त्वमित्यर्थः । बुबोधयिषया वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्य हेतुत्वाल्लक्षणसंगतिः । निष्कृष्टार्थमाह । **तथा चेति** । शाब्दबोधे जननीये पदस्याऽऽप्तोच्चरितत्वं नापेक्षणीयम्, शाब्दबोधविलंबस्तु योग्यताज्ञानविलंबादेव, एवं च वाक्यत्वमेवाऽवशिष्टम्, तदेवाह । **वस्तुतस्त्वित्यादिना** । पदज्ञानमिति सावधारणम् तेन ज्ञायमानं पदं न करणमिति सूचितम् । तस्य करणत्वे मौनिलिखितश्लोकादौ शाब्दबोधानुपपत्तिः स्यात्, तत्र पदाभावादिति ध्येयम् । व्यापारमाह । **वृत्तिज्ञानसहकृतेति** । वृत्तिज्ञानसहकृता या पदज्ञानजन्यपदार्थोपस्थितिः सैव व्यापार इत्यर्थः । पदार्थोपस्थितेः पदज्ञानजन्यत्वात्,

पदज्ञानजन्यशाब्दबोधजनकत्वाच्च व्यापारत्वम् । ननु पदार्थोपस्थितेः कथं पदज्ञानजन्यत्वमिति चेद् । पदपदार्थयोः संबन्धो वृत्तिः । वृत्तिरूपसंबन्धस्य संबन्धिनौ पदपदार्थौ । तथा च **एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति** रीत्या[1] पदात्मकसंबन्धिनो ज्ञानस्य पदार्थरूपाऽपरसंबन्ध्युपस्थितिजनकत्वे पदार्थोपस्थितेः पदज्ञानजन्यत्वं सिद्धम् । उपस्थितिश्च स्मृतिः । न च तथापि पदार्थोपस्थितेर्व्यापारत्वमनुपपन्नमेव, तस्याः पदज्ञानजन्यत्वेऽपि पदज्ञानजन्यशाब्दबोधजनकत्वस्य निर्युक्तिकत्वादिति वाच्यम् । अगृहीतशक्तिकानां पारसीकादि शब्दानां ज्ञानादपि तदर्थविषयकशाब्दबोधापत्तेः पदज्ञानस्य सत्वात् । अतः पदार्थोपस्थितेः शाब्दबोधजनकत्वमावश्यकम्, तथा च नोक्तापत्तिः, पदार्थोपस्थितिरूपकारणविरहात् । एवं पदार्थोपस्थितेः शाब्दबोधजनकत्वेन व्यापारत्वं सूपपादमेवेति ध्येयम् । न च तथापि पदार्थोपस्थितौ वृत्तिज्ञानसहकृतत्वनिवेशनं किमर्थमिति वाच्यम् । यत्र आदौ घटपदज्ञानं ततः समवायेन घटपदाधिकरणतयाऽऽकाशस्य स्मरणं ततः आकाशस्य शाब्दबोधापत्तेः । तन्निवेशे तु आकाशोपस्थितेः "घटपद" वृत्तिज्ञानजन्यत्वाभावान्न घटपदाधीनाऽऽकाशोपस्थितिस्थले आकाशविषयकशाब्दबोधापत्तिः । उपस्थितौ पदजन्यत्वस्याऽनिवेशे तु पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः । **वाक्यार्थज्ञानमिति** । वाक्यस्याऽर्थः वाक्यार्थः । षष्ठ्यर्थः प्रतिपाद्यत्वम्, वाक्यप्रतिपाद्यार्थ इत्यर्थः । वाक्यार्थस्य ज्ञानं वाक्यार्थज्ञानम्, विषयित्वं षष्ठ्यर्थः । वाक्यार्थविषयकं ज्ञानमित्यर्थः । शाब्दबोध इति यावत् । स एव फलमित्यर्थः । तथा च पदज्ञानं करणम् । पदजन्यपदार्थोपस्थितिर्व्यापारः शक्तिज्ञानं सहकारिकारणम् ।

---

टि० १ तथा च हस्तिनो हस्तिपकस्य संयोगसंबन्धसत्वे यथा हस्तिदर्शने हस्तिपकस्मरणं, तथा पदपदार्थयोः संबन्धज्ञानसत्वे पदश्रवणोत्तरं अर्थस्मरणमनुभवसिद्धम्; इति वृत्तिरूपसंबन्धज्ञानमिव सम्बन्धिज्ञानविधया पदज्ञानमपि पदार्थोपस्थितौ कारणमिति भावः ।

शाब्दबोधः फलम् । मूले । वाक्यं पदसमूह इति । साकांक्षपदसमूहत्वं वाक्यस्य लक्षणमित्यर्थः ।

न्या०—वृत्तिर्नाम शक्तिलक्षणान्यतररूपा । शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारकेश्वरसंकेतः । ईश्वरसंकेतो नाम ईश्वरेच्छा, सैव शक्तिरित्यर्थः । शक्तिनिरूपकत्वमेवपदे शक्तत्वम् । विषयतासंबन्धेन शक्त्याश्रयत्वम् , अर्थे शक्यत्वम् ।

गं०—"शक्तिलक्षणान्यतरनिष्ठं" वृत्तित्वं च पदप्रतियोगिकाऽर्थानुयोगिकसंबन्धत्वम् । अर्थप्रतियोगिकपदानुयोगिकसंबन्धत्वं वा । सा वृत्तिः शक्तिरूपा, लक्षणारूपा चेति । शक्तिश्च अस्माच्छब्दादयमर्थोबोद्धव्य इतीश्वरेच्छारूपा, लक्षणारूपा । शब्दादित्यत्र पंचम्यर्थो ज्ञानजन्यत्वम् । तस्य बुधधात्वर्थे बोधेऽन्वयः । तव्यप्रत्ययार्थो विषयत्वम् । तथा च एतच्छब्दजन्यबोधविषयतावानयमर्थो भवतु इत्याकारकेच्छायां एतत्पदजन्यबोधविषयत्वं प्रकारः, अर्थो विशेष्यः । अमुमेवाऽर्थमाह । शक्तिर्नामेति । एवं चेश्वरेच्छावत्वमेव तत्पदवाच्यत्वम् । ईश्वरेच्छावत्ता च स्वीयतत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन । एतेन ईश्वरेच्छायाजगन्मात्रविषयकत्वेन घटपदजन्यबोधविषयत्वप्रकारकभगवदीच्छीयविशेष्यतायाः पटेऽपि सत्वेन पटे घटपदवाच्यत्वापत्तिः, एवं गंगापदजन्यबोधविषयकप्रकारकभगवदिच्छीयविशेष्यतायास्तीरे सत्वेन लक्षणोच्छेदापत्तिश्चेति दूषणद्वयमपास्तम् । ईश्वरेच्छाया ऐक्येपि उक्तसंबन्धेनेश्वरेच्छायास्तत्राभावात् , विशेष्यताया विशेष्यभेदेन भिन्नत्वात् । लक्षणास्थले गंगापदजन्यो बोधो भवतु– तीरं च च बोधविषयो भवतु इतीच्छास्वीकारेण गंगापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायास्तत्राऽभावादिति ध्येयम् । शक्तिनिरूपकत्वमिति । निरुक्तविशेष्यतासंबन्धेन पदनिरूपिता शक्तिः अर्थेस्ति शक्तिसंबन्धस्य पदं निरूपकम् । आश्रयोऽर्थ इति । अथवा तत्पदविशिष्टत्वमेव तत्पदवाच्यत्वम् । वै० स्वजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितेश्वरे-

च्छीयविशेष्यतासंबन्धेन । एतादृशसंबन्धस्य पदं प्रतियोगि, अर्थोऽनुयोगीति आधेयः प्रतियोगी । आधारोऽनुयोगीति प्रवादात् । यथा संयोगसंबन्धस्य घटः प्रतियोगी, भूतलं चाऽनुयोगीति ।

न्या०—शक्यसंबन्धो लक्षणा । सा द्विविधा । गौणी शुद्धा-चेति । गौणी नाम सादृश्यविशिष्टे लक्षणा । यथा सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा । शुद्धा त्रिविधा । जहल्लक्षणा-अजहल्लक्षणा-जहदजहल्लक्षणा चेति । लक्ष्यतावच्छेदक-रूपेण लक्ष्यमात्रबोधप्रयोजिका जहल्लक्षणा । यथा गंगायां घोष इत्यत्र गंगापदवाच्यप्रवाहसंबन्धस्य तीरे सत्वात्तादृशशक्यसंबन्धरूपलक्ष-णाज्ञानाद् गंगापदात्तीरोपस्थितिः । लक्ष्यतावच्छेदकरूपेण लक्ष्य-शक्योभयबोधप्रयोजिका अजहल्लक्षणा । यथा काकेभ्यो दधिरक्ष्य-तामित्यत्र काकपदस्य दध्युपघातके लक्षणा, लक्ष्यतावच्छेदकं दध्युपघातकत्वम् , तेन रूपेण दध्युपघातकानां सर्वेषां काकविडाल-कुक्कुटसारमेयादीनां शक्यलक्ष्याणां बोधात् । जहदजहल्लक्षणा च जीवब्रह्मणोरैक्यं ब्रुवतां वेदान्तिनां मते । सा च शक्यतावच्छेदक-परित्यागेन व्यक्तिमात्रबोधप्रयोजिका । यथा तत्त्वमसीत्यत्र सर्व-ज्ञत्वकिंचिद्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात् ।

गं०—शक्यसंबन्धो लक्षणेति । स्वशक्यसंबन्ध इत्यर्थः । स्वं गंगापदं तच्छक्यः प्रवाहः तत्संबन्धस्तीरे इति गंगापदसंबन्धित्वं तीरेऽस्तीति, एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमितिरीत्या गंगापदात्तीरोपस्थितिः । ततः तीरविषयकशाब्दबोधः । स च तीरवृत्तिर्घोष इत्याकारकः । लक्षणाज्ञाने तात्प-र्यानुपपत्तिः कारणम् । तथा च तद्धर्मावच्छिन्नविशेष्यकलक्षणाप्रकारकज्ञानस्य तद्धर्मप्रकारकस्मृतिं प्रति कारणत्वम् । यथा तीरत्वावच्छिन्नविशेष्यकं यल्ल-क्षणाज्ञानं तीरं गंगापदशक्यसंबन्धीत्याकारकं तत्तीरोपस्थितौ कारणम् ।

अत्रापि सर्वविषयकत्वनिर्वाहार्थं ईश्वरेच्छा कल्प्या। सा च गंगापदजन्यो बोधो भवतु, तीरं बोधविषयो भवतु इति समूहालंबनात्मिका। एवं च बोधांशे गंगापदजन्यत्वावगाहितया, तीरांशे च बोधविषयत्वावगाहितया चेश्वरेच्छायाः सर्वविषकत्वोपपत्तिः। **गौणीनामेति**। तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वं सादृश्यम्, तदात्मकः शक्यसंबन्धो गौणीत्यर्थः। **दध्युपघातकत्वमिति**। दधिनाशकत्वमित्यर्थः। काकेभ्य इत्यत्र जन्यत्वं पंचम्यर्थः। व्यापारो नाशानुत्पत्तिश्च धात्वर्थः। अनुत्पत्तौ प्रयोज्यतासंबन्धेन व्यापारस्याऽन्वयः। तथा च दध्युपघातकजन्यनाशोत्पत्तिप्रतियोगिकः स्वकर्तृकव्यापारप्रयोज्यो योऽभावस्तदधिकरणं दधीति बोधः काकेभ्यो दधि रक्ष्यतामित्यस्य। **जीवब्रह्मणोरैक्यं ब्रुवतामिति**। लक्षणाया अस्वीकारे परोक्षचैतन्याऽपरोक्षचैतन्यवाचकयोः "सर्वज्ञत्वकिंचिद्ज्ञत्ववाचकयोश्च" तत्त्वमोः सामानाधिकरण्यानुपपत्त्या ऐक्यं न स्यादिति भावः।

**इदमुपलक्षणम्**। लक्षितलक्षणाऽप्येको भेदो लक्षणायाः। सा च परंपरासंबन्धरूपा। यथा द्विरेफपदस्य भ्रमरे लक्षणा। अत्र स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपः परंपरासंबन्धः। स्वं द्विरेफपदम्, तद्वाच्यं रेफद्वयम्, तद्घटितं पदं भ्रमरपदम् तद्वाच्यत्वं भ्रमरे इति।

## शक्तं पदम्।

दी०—पदलक्षणमाह। शक्तमिति।

**गं०—पदलक्षणमाहेति**। पदविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इति बोधः। मूले **शक्तं पदमिति**। शक्तत्वं पदस्य लक्षणम्। शक्तत्वं च शक्तिनिरूपकत्वम्। निरूपकतासंबन्धेन शक्तिविशिष्टत्वमिति यावत्।

इदमत्र वक्तव्यम्। पदं चतुर्विधम्। यौगिक-रूढ-योगरूढ-यौगिकरूढभेदात्। यत्राऽवयवार्थ एव बुध्यते तद्यौगिकम्। यथा पाचकादिपदम्। अत्र धात्वर्थः पाकः। प्रत्ययार्थः कर्त्ता। तथा च पाककर्त्ता इति बोधः।

यत्राऽवयवाशक्तिनिरपेक्षया समुदायशक्त्या बोधः तद्रूढम् । यथा गोपदम् । अवयवार्थविषयकबोधजनकतावच्छेदिका सती रूढार्थबोधजनकतावच्छेदिका याऽनुपूर्वी तादृशानुपूर्वीमत्पदं योगरूढम् । यथा पंकजपदम् । यत्र यौगिकरूढार्थयोः स्वातन्त्र्येण बोधः तद्यौगिकरूढम् । यथोद्भिदादिपदम् । यौगिकं खनित्रे । यागविशेषे रूढम् ।

**अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः ।**

दी०—अर्थस्मृत्यनुकूलपदार्थसंबन्धः शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः । तन्निरासार्थमाह । अस्मादिति । डित्थादिपदानामिव घटादिपदानामपि संकेत एव शक्तिः न तु पदार्थान्तरमित्यर्थः ।

गं०—अर्थस्मृत्यनुकूलेति । अर्थस्य स्मृतिः अर्थस्मृतिः । अर्थविषयकस्मृतिरित्यर्थः । अत्र अर्थेति अव्यावर्त्तकम्, अर्थाऽविषयकस्मृतेरप्रसिद्धेः । अनुकूलत्वमिह प्रयोजकत्वम्, तच्च कारणतावच्छेदकाऽवृत्त्यन्यथासिद्धिचतुष्टयशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वम्, कारणतावच्छेदकसाधाधारणम् । तेन पदार्थोपस्थितौ शक्तिज्ञानस्य शक्तिमत्पदज्ञानस्य वा कारणत्वेन शक्तिरूपसंबन्धस्य शाब्दबोधजनकोपस्थितिजनकत्वाभावेऽपि कारणतावच्छेदकस्वरूपाऽनुकूलत्वमक्षतमेवेति । तथा च शाब्दबोधजनकोपस्थित्यनुकूलत्वे सति पदपदार्थसंबन्धत्वं शक्तिलक्षणम् कालिकादिसम्बन्धेऽतिव्याप्तिवारणाय सत्यन्तम् । पदेऽतिव्याप्तिवारणाय विशेष्यदलम् । न च लक्षणायामतिव्याप्तिरिति वाच्यम् । लक्षणाभिन्नत्वेनाऽपि विशेषणीयत्वात् । **सा च** । शक्तिश्च । **पदार्थान्तरमिति** । न तु ईश्वरेच्छारूपेति यावत् । **तन्निरासार्थमिति** । मीमांसकमतनिराकरणाय क्लृप्तपदार्थेष्वन्तर्भावमाहेत्यर्थः । मूले । **अस्मात्पदादिति** । **ईश्वरसंकेतः** । ईश्वरेच्छा । न च शक्तेरीश्वरे-

च्छारूपत्वे घटे घटपदशक्तिर्न स्यात्, ईश्वरेच्छायाः घटाद्यवृत्तित्वादिति वाच्यम्। विषयतासंबन्धेन तस्याः घटे सत्त्वात्। न चेश्वरेच्छायाः सर्वविषयकतया घटविषयकेच्छाया विषयतया वस्तुमात्रसाधारण्येन वस्तुमात्रे एव घटपदस्य शक्त्यापत्तिरिति वाच्यम्। दत्तोत्तरत्वात्।

**इदमुपलक्षणम्।** इदं पदममुमर्थं बोधयतु इत्याकारिका भगवदिच्छाऽपि शक्तिः। अर्थमित्यत्र द्वितीयार्थो विषयित्वम्, धात्वर्थो बोधः। णिजर्थो जनकत्वम्। तथाचेदं पदं एतदर्थविषयकबोधजनकताविद् भवतु इति "एतदर्थविषयकबोधजनकत्वप्रकारकएतत्पदविशेष्यको" भगवत्संकेतः। अयं च संकेतः पदनिष्ठः। तथा चेश्वरेच्छावत्त्वं वाचकत्वम्। इच्छावत्ता च एतदर्थविषयकबोधजनकत्वप्रकारतानिरूपितस्वीयविशेष्यतासंबन्धेन। पदे अर्थविशिष्टत्वं वाचकत्वमिति यावत्। वै० स्वविषयकबोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतासंबन्धेनेति। अयं च संकेतः पदानुयोगिकः अर्थप्रतियोगिकः। पदार्थोपस्थितौ उभयविधशक्तिज्ञानमेव सहकारीति ध्येयम्।

**दी०**—गवादिशब्दानां जातावेव शक्तिः, विशेषणतया जातेः प्रथममुपस्थितत्वात्, व्यक्तिलाभस्तु आक्षेपादिति केचित्। तन्न। गामानयेत्यादौ वृद्धव्यवहारेण सर्वत्राऽऽनयनादेर्व्यक्तावेव संभवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात्।

**गं०**—जातिशक्तिवादिमीमांसकमतं निरसितुं तन्मतमाक्षिपति। **गवादिशब्दानामिति।** आदिना घटादेः परिग्रहः। जात्यवच्छिन्नवाचकशब्दानामित्यर्थः। **जातावेव शक्तिरिति।** एवकारेण व्यक्तौ आकृतौ वा शक्तिव्यवच्छेदः। जातौ शक्तिस्वीकारे युक्तिमाह। **विशेषणतयेति।** प्रकारतयेत्यर्थः। विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया जातिरूपविशेषणज्ञानं विना व्यक्तिभानाऽसंभवात्। **प्रथममुपस्थितत्वादिति।** व्यक्तिभानार्थं न्यायमतेऽपि गोत्वस्य प्रथममुपस्थितत्वेनेत्यर्थः। **नाऽगृहीतविशेषणाबुद्धिर्विशेष्यमवगाहते** इति न्यायात्। तथा च लाघवात् जातावेव

शक्तिः, "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे इति तन्मतसिद्धान्ताद् व्यक्तौ न शक्तिरिति। **इदमुपलक्षणम्।** यस्यां कस्यां चिद्व्यक्तौ शक्तिस्वीकारे व्यभिचारः घटादिपदात् शक्तिमत्त्वेनाऽनिर्णीतव्यक्तेरपि शाब्दबोधोदयेन तत्र शक्तिज्ञानरूपकारणविरहात्। सर्वासु व्यक्तिषु शक्तिस्वीकारे आनन्त्यम्, व्यक्तिभेदेनेश्वरेच्छाविषयत्वरूपशक्तिभेदादित्यपि बोध्यम्। नन्वेवं सति शाब्दबोधे व्यक्तिभानानुपपत्तिः, व्यक्तौ शक्तिविरहात्, अन्यथा गवादिपदात् घटादिविषयकशाब्दबोधापत्तेरित्यत आह। **व्यक्तिलाभस्त्विति।** व्यक्तेः शाब्दबोधविषयत्वन्तु इत्यर्थः। अवधारणार्थकस्तु शब्दः आक्षेपादिनेत्युत्तरं योजनीयः। **आक्षेपादिनेति।** अर्थापत्तिप्रमाणादिनेत्यर्थः। **येन विना यदनुपपन्नं तत्तेनाऽऽक्षिप्यते इति** न्यायः। अत्र व्यक्तिभानं विना जातिभानमनुपपन्नमित्यर्थापत्तिप्रमाणा[1]द्व्यक्त्युपस्थितिः। आदिना लक्षणापरिग्रहः[2]। तथाचाऽर्थापत्तिप्रमाणेन लक्षणाज्ञानेन वा व्यक्त्युपस्थित्या व्यक्तेः शाब्दबोधसंभवे व्यक्तौ शक्तिर्नाङ्गीकर्त्तव्येति भावः।

प्रथमतो व्यवहारादेव हि पदानां शक्तिनिश्चयः, व्यवहारश्चाऽऽनयनादिरूपः। आनयनं च उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापार एव। कर्मता चाऽत्र उत्तरदेशसंयोगावच्छिन्नक्रियारूपा, तस्याः "व्यवहारस्य च", जातावसंभवेन वृद्धव्यवहारात् जातिविशिष्टव्यक्तावेव शक्तिरवधार्यते इति समाधत्ते। **गामानयेत्यादाविति। सर्वत्रेति।** एतस्य शक्तिकल्पनादि-

---

१ व्यतिरेक्यनुमानादिति य.वत्। अनुमानप्रकारश्च कर्मत्वं गोवृत्ति गोत्वनिष्ठकर्मतात्वात्, आनयनं गोवृत्तिकर्मताकं गोत्ववृत्तिकर्मताकत्वादिति वा यन्नैवं तन्नैवं घटत्वनिष्ठकर्मतावत्।

२ एतेन अर्थापत्तिप्रमाणाद् व्यक्तेरुपस्थिनावपि व्यक्तेः शाब्दबोधविषयत्वाऽनुपपत्तिः, वृत्तिज्ञानसहकृतपदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वादिति निरस्तम्। लक्षणयैव उपस्थित्या शाब्दबोध इति ध्येयम्।

त्युत्तरेणाऽन्वयः । **आनयनादेरेति** । प्रयोज्यवृद्धकर्तृकाऽऽनयनादेरित्यर्थः । **व्यक्तावेव संभवेनेति** । जातिविशिष्टव्यक्तावेव वृत्तित्वेनेत्यर्थः । **शक्तिकल्पनात्** । शक्तिकल्पनाया युक्तत्वादित्यर्थः । तथा च प्रयोज्यवृद्धकर्तृकाऽऽनयनस्य गवि एव संभवेन तत्र जातिविशिष्टव्यक्तो शक्तिस्वीकारे लाघवात् सर्वत्रैव जातिविशिष्टव्यक्तौ शक्तिकल्पनाया युक्तत्वादिति भावः ।

गामानयेत्यादौ गोत्वादेरानयनकर्मत्वाऽन्वयानुपपत्तिप्रतिसन्धानात् गोपदस्य गवि लक्षणास्वीकारेऽपि गौरस्ति तां पश्येतादौ गोत्वादेरस्तित्वदर्शनकर्मत्वान्वयानुपपत्तिप्रतिसन्धानरूपलक्षणाबीजस्याऽभावेन तत्र गवि लक्षणायाः स्वीकर्तुमशक्यतयाऽनुभवसिद्धस्य व्यक्तिभानस्यानुपपत्तिश्चेत्यपि बोध्यम् । किं च तत्र गौः शक्येति शक्तिग्रहो यद्यभिमतः, तदा व्यक्तावेव शक्तिः, यदि तु गोपदं गोत्वे शक्तं "गोत्वं गोपदशक्यमिति वा" इति शक्तिग्रहः, तदा गोत्वप्रकारकपदार्थस्मरणं "गोत्वप्रकारकस्मरणाभावात्"गोत्वप्रकारकशाब्दबोधश्च न स्यात् तत्प्रकारकपदार्थोपस्थितिं प्रति तत्प्रकारकशक्तिज्ञानस्य हेतुत्वात् तत्प्रकारकशाब्दबोधं प्रति तत्प्रकारकपदार्थोपस्थितेश्च हेतुत्वात् । त्वन्मते शक्तिज्ञानस्य गोत्वत्वप्रकारकत्वेन गोत्वप्रकारकत्वविरहात्[1] । किं च गोत्वे यदि शक्तिः, तदा शक्यतावच्छेदकं गोत्वत्वम्, गोत्वत्वं च गवेतराऽसमवेतत्वे सति सकलगोसमवेतत्वम्, तथा च शक्यतावच्छेदककोटौ गोव्यक्तीनामनुप्रवेशाद् महद्गौरवं च । अतो जात्याकृतिविशिष्टव्यक्तावेव गवादिपदानां शक्तिरिति सिद्धान्तः । जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे पदार्थः इति एकवचनेन जात्याकृतिव्यक्तिषु एकैव शक्तिः । शक्तेरनुगमकं च गोत्वादिकमतो न व्यभिचारो नवाऽऽनन्त्यमिति ध्येयम् ।

**दी०—शक्तिग्रहश्च वृद्धव्यवहारेण । तथा हि व्युत्पित्सुर्बालो**

---

टि०—१ न च गोपदं गोत्वे शक्तमिति शक्तिग्रहस्य गोत्वप्रकारकत्वान्न गोत्वप्रकारकशाब्दबोधानुपपत्तिरिति वाच्यम् । शक्तिग्रहे यदंशे गोत्वादिप्रकारकत्वं शब्दबोधेऽपि तदंशे गोत्वादिप्रकारकत्वमित्येतादृशसमानप्रकारकत्वसिद्धान्तितत्वात् ।

"गामानय" इत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्याऽन्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य "अश्वमानय, गां बधान" इति वाक्यान्तरे आवापोद्वापाभ्यां गो पदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्याऽश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते ।

गं०—व्यवहारेण शक्तिग्रहमुपपादयति । **शक्तिग्रहश्चेति** । अनुक्तसमुच्चायकश्च शब्दः । व्यवहारेणेत्युत्तरं योजनीयः । **व्युत्पित्सुरिति** । गवादिपदानां अर्थविशेषे शक्तिग्रहेच्छावानित्यर्थः । **बाल इति** । गवादिपदस्याऽर्थविशेषे शक्तिज्ञानशून्य इत्यर्थः न तु स्तनन्धय इत्यर्थः । **इत्युत्तमवृद्धवाक्यश्रवणानन्तरमिति** । इत्याकारकं यत्प्रयोजकवृद्धोच्चरितं वाक्यं तादृशवाक्यप्रयोज्यशाब्दबोधानन्तरमित्यर्थः । वृद्धे प्रयोजकत्वं च अन्येच्छानधीनेच्छावत्वे सति अभिज्ञत्वम् । **मध्यमवृद्धस्येति** । प्रयोज्यवृद्धस्येत्यर्थः । अन्येच्छाधीनेच्छावदभिज्ञस्येति यावत् । गवानयनं दृष्ट्वा प्रवृत्तिमुपलभ्य चेत्यन्वयः । उपलभ्येत्यस्य अनुमायेत्यर्थः । इदं गवानयनं स्व "गवानयन" विषयकप्रवृत्तिजन्यं चेष्टात्वात् मदीयचेष्टावदित्यनुमायेति यावत् । सा "गवानयनविषयकप्रवृत्तिः" स्वविषयधर्मिककृतिसाध्यत्वप्रकारकज्ञानजन्या प्रवृत्तित्वात् मदीयप्रवृत्तिवदित्यनुमानेन मध्यमपुरुषप्रवृत्तेर्ज्ञानजन्यत्वं निश्चिनोति। ततः **मध्यमवृद्धप्रवृत्तिजनकज्ञानस्येति**। प्रयोज्यवृद्धसमवेतं गवानयनानुकूलप्रवृत्तिजनकं "गवानयनं मत्कृतिसाध्यं मदिष्टसाधनं चेत्याकारकं" गवानयनधर्मिककृतिसाध्यत्वप्रकारकं इष्टसाधनत्वप्रकारकं च ज्ञानं तस्येत्यर्थः । तादृशज्ञानविशेष्यीभूतं यद्गवानयनं तद्ज्ञानस्येति यावत् । **अन्वयव्यतिरेकाभ्यामिति** । तादृशवाक्यश्रवणोत्तरं प्रवृत्तिदर्शनात्, तादृशवाक्यश्रवणात्पूर्वं प्रवृत्त्यदर्शनाच्चेत्यर्थः । **वाक्यजन्यत्वमिति**। गामानयेति वाक्यप्रयोज्यत्वमित्यर्थः । **निश्चित्य** । अनुमायेत्यर्थः । तथा च गवानयनविषयकं ज्ञानं असाधारणहेतुकं । कार्यत्वाद् घटवदित्यनु-

मानेनाऽसाधारणहेतुकत्वे निश्चिते लाघवाद् वृद्धवाक्यमेव तादृशज्ञानाऽसाधारणकारणमित्यवधारयति । अवधारणं च गामानयेति वाक्यं गोकर्मकाऽनयने शक्तं अन्वयव्यतिरेकानुविधायित्वादिति । ननु गोकर्मकाऽऽनयनज्ञानस्य गामानयेति वाक्यजन्यत्वावधारणेऽपि गामिति भागस्याऽयमर्थः, आनयेति भागस्याऽयमर्थः, इति विशिष्य ज्ञातुमशक्यमेवेति कथं व्यवहारादितो गवादिपदशक्तिग्रह इत्यत आह । **इति वाक्यान्तरे इति** । इत्याकारकप्रयोजकवृद्धप्रयुक्तवाक्यान्तरे श्रुते सतीत्यर्थः । तदनन्तरं मध्यमवृद्धकर्तृकं गोबन्धनमश्वानयनं च दृष्ट्वेति शेषः । **आवापोद्वापाभ्यामिति** । आनयनबन्धनाभ्यामित्यर्थः । गोरेवाऽऽनयनबन्धनोभयवत्वात् अश्वस्यैवाऽऽनयनाऽऽश्रयत्वाच्चेत्यर्थः । **इति व्युत्पद्यते** । इत्याकारकनिर्णयवान्भवतीत्यर्थः ।

दी०—ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यपरवाक्ये एव व्युत्पत्तिः, न सिद्धपरे इति चेन्न "काञ्च्यां त्रिभुवनतिलको भूपतिः" इत्यादौ सिद्धेऽपि व्यवहारात् । विकसितपद्मे मधूनि पिबति मधुकरः इत्यादौ प्रसिद्धपदसमभिव्याहारात् सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च ।

गं०—अत्र प्रयोजकवृद्धोच्चरितगामानयेति वाक्यश्रवणाधीनशाब्दबोधप्रयोज्यमध्यमपुरुषप्रवृत्तिजन्यगवानयनं दृष्ट्वा पूर्वोक्तरीत्या गवाऽऽनयनरूपं कार्यं गामानयेति शब्दप्रयोज्यमिति समीपस्थो बालोऽवधारयति । ततो गां नयेति प्रयोजकवृद्धप्रयुक्तवाक्यश्रवणोत्तरकालीनशाब्दबोधप्रयोज्यमध्यमपुरुषप्रवृत्तिजन्यगोनयनं दृष्ट्वा तादृशबालः प्रयोज्यवृद्धकर्तृकगोकर्मकनयनं प्रयोजकवृद्धोच्चरित "गां नयेति" शब्दप्रयोज्यमित्यनुमिनोति । एवं अश्वमानयेति तदुच्चरितवाक्यप्रयोज्यं प्रयोज्यवृद्धकर्तृकाऽश्वकर्मकाऽऽनयनमित्युक्तरीत्याऽनुमिनोति एवं गोकर्मकबन्धनं गां बधानेति तदुच्चरितवाक्यप्रयोज्यमिति निश्चिनोति । ततश्च गवादिपदं आनयनात्मककार्यान्वितगोशक्तं अनुपपत्ति प्रतिसन्धानं विना तादृशकार्यान्वितगोविषयकबोधतात्पर्येण

इदंकर्तृकोच्चारणजन्यत्वात् इति व्यतिरेक्यनुमानात्, तादृशबालः गोघटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। तत्रापि व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नोत्पादकसामग्री अपेक्षिता, एवं च कार्यान्वितगोघटादिविषयकशाब्दबोधं प्रति कार्यान्वितगोघटादिविषयकशाब्दत्वव्यापककार्यताविषयकशाब्दत्वावच्छिन्नजनकसामग्री अवश्यमपेक्षितव्या, सा च सामग्री लिङादिपदसमभिव्याहारः इति प्रभाकरमतमुपन्यस्य दूषयति। **नन्वित्यादिना**। सर्वत्र व्यवहारस्य कार्यपरत्वादिति योजना। **सर्वत्रेति**। सर्वस्येत्यर्थः। **व्यवहारस्येति**। गवादिपदमात्रस्येत्यर्थः। **कार्यपरत्वात्**। कार्यान्वितशक्तत्वात्। **कार्यपरवाक्ये एवेति**। लिङादिपदघटितवाक्ये एवेत्यर्थः। **व्युत्पत्तिरिति**। शक्तिरित्यर्थः। **न सिद्धपरे इति**। न लिङाद्यघटितवाक्ये इत्यर्थः। व्युत्पत्तिरिति पूर्वेणाऽन्वयः। तथा च घटादिपदानां कार्यान्वितघटादौ शक्तिसत्वेपि व्यापकधर्मावच्छिन्नसामग्रीविधया "कार्यतावाचक" लिङादिपदस्य हेतुतया गौरस्तीत्यादि वाक्यानां लिङादिपदघटितत्वाभावेन न शाब्दबोधसमर्थत्वमिति भावः। अत्र गामानयेत्यादिप्रयोजकवृद्धव्यवहारात् पूर्वोक्तक्रमेण कार्यान्विते पदानां प्रथमतः शक्तिग्रहेऽपि कार्यान्वितघटत्वापेक्षया घटत्वस्य शक्यतावच्छेदकत्वे लाघवमिति लाघवज्ञानेन **अनन्यलभ्यो हि शब्दार्थ** इति न्यायाच्च घटादिपदानां घटादिमात्रे शक्तिः, एवं च भूतले गौरस्तीत्यादि लिङाद्यघटितवाक्यस्याऽपि शाब्दबोधसमर्थत्वं दुर्वारमित्याशयेन समाधत्ते। **सिद्धेपीति**। सिद्धपरवाक्येऽपीत्यर्थः। तेनाऽसिद्धे एव शक्तिग्रह इति प्रभाकरेणाऽनुक्तत्वेऽपि नाऽसंगतिः। **व्यवहारादिति**। कार्यानन्वितभूपतिविषयकशाब्दबोधस्य जायमानत्वादित्यर्थः। **प्रसिद्धपदसमभिव्याहारादिति**। मधुकरशब्दार्थस्य विकसितपद्मवृत्तित्वज्ञानादित्यर्थः। **सिद्धेऽपीति**। कार्यानन्वितवृत्तत्वाद्यवच्छिन्नेऽपीत्यर्थः। **मधुकरादिव्युत्पत्तिदर्शनाच्चेति**। मधुकरादिशब्दानां शक्तिग्रहाच्चेत्यर्थः।

दी०—लक्षणाऽपि शब्दवृत्तिः। शक्यसंबन्धो लक्षणा।

गङ्गायां घोष इत्यत्र गंगापदवाच्यप्रवाहसंबन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते। सैन्धवादौ लवणाश्वयोः परस्परसंबन्धाभावान्नानाशक्तिकल्पनम्। लक्षणा त्रिविधा। जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति। यत्र वाच्यार्थस्याऽन्वयाऽभावः तत्र जहल्लक्षणा। यथा मञ्चाः क्रोशन्तीति। यत्र वाच्यार्थस्याऽप्यन्वयः तत्राऽजहदिति। यथा छत्रिणो गच्छन्तीति। यत्र वाच्यैकदेशत्यागेन एकदेशाऽन्वयः तत्र जहदजहदिति। यथा तत्वमसीति। गौण्यपि लक्षणैव लक्ष्यमाणगुणसंबन्धस्वरूपा। यथा अग्निर्माणवक इति।

गं०—ननु घटादिपदात् समवायेनाऽऽकाशस्मरणे जाते आकाशस्य शाब्दबोधानुदयेन वृत्या पदजन्यपदार्थोपस्थितिः शाब्दबोधे हेतुर्वाच्या, वृत्तिश्च शक्तिरूपा। तथा च गंगायां घोष इत्यादौ गंगापदस्य तीरे शक्यभावात् कथं तद्विषयकशाब्दबोधः इत्यत आह। **लक्षणाऽपीति।** अपिना शक्तिः समुच्चीयते। **शब्दवृत्तिरिति।** पदनिरूपिता अर्थनिष्ठा वृत्तिरित्यर्थः। तथा च वृत्तिर्द्विविधा शक्तिर्लक्षणा च। तत्र शक्तिस्वरूपं मूले प्रतिपादितम्। इदानीं लक्षणास्वरूपमाह। **शक्यसंबन्ध इति।** तत्पदशक्यसंबन्धः, तत्पदलक्षणा इत्यर्थः। ननु गंगापदस्य उभयत्र शक्तिरेवास्तु गंगापदप्रतिपाद्यत्वस्याऽविशेषादित्यत आह। **गंगायामिति।** न च विनिगमनाविरहात्तीरे एव शक्तिः, प्रवाहबोधस्तु लक्षणयैवेति वाच्यम्। प्रयोगबाहुल्यस्यैव प्रवाहशक्तौ विनिगमकत्वादिति भावः। **इत्यत्रेति।** इत्याकारकवाक्यघटकेत्यर्थः। तस्य गंगापदेऽन्वयः। **गंगापदवाच्यप्रवाहसंबन्धादेवेति।** लक्षणारूपतादृशसंबन्धज्ञानादेवेति यावत्। **तीरोपस्थिताविति।** तीरवृत्तिर्घोष इत्याकारकशाब्दबोधजनकतीरोपस्थितिसंभवे इत्यर्थः। **न कल्प्यते इति।** तीरे शक्तिर्नांगीक्रियते। नानाधर्मावच्छिन्ने भगवदिच्छारूपशक्तिकल्पने गौरवादिति भावः। नन्वेवं नानार्थस्थलेऽ-

प्येकत्रैव शक्तिरस्तु, इतरार्थानां लक्षणयैव बोधसंभवः इत्यत आह। **सैन्धवादाविति**। सैन्धवपदादावित्यर्थः। आदिना हरिपदादिपरिग्रहः। **परस्परसंबन्धाभावादिति**। शक्यसंबन्धाभावादित्यर्थः। विनिगमकाभावाच्चेत्यपि बोध्यम्। लक्षणां विभजते। **त्रिविधेति**। उदाहरति। **यथेति**। मञ्चपदस्य मञ्चस्थे लक्षणा। **छत्रिण इति**। योद्धुमित्यादिः। छत्रिन्पदस्य एकसार्थवाहिनि लक्षणा। गौण्या लक्षणाऽन्तर्गतत्वमाह। **गौणीति**। गौणी वृत्तिः लक्षणाविशेष एवेत्यर्थः। लक्ष्यमाणो यो गुणः शुचित्वादिः स एव संबन्धस्तद्रूपा इत्यर्थः। स एव सादृश्यम्। तथाचाऽग्निपदस्याऽग्निसदृशे लक्षणा इति यावत्।

दी०—व्यंजनाऽपि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला अर्थशक्तिमूला च, अनुमादिना अन्यथासिद्धा।

गं०—ननु व्यंजनाऽपि पदवृत्तिः। व्यंजना च शक्तिलक्षणाद्यजन्यप्रतीतिजनकः शब्दनिष्ठो व्यापारः। सा द्विविधा। शब्दशक्तिमूला-अर्थशक्तिमूला च। आद्या गंगायां घोष इत्यादौ गंगापदेन घोषे शैत्यपावनत्वादेर्व्यज्यमानत्वात्। अन्यथा तीरे घोष इत्येव वक्तव्यं स्यात्, स्वायत्ते शब्दप्रयोगे नाऽवाचकं पदं प्रयोक्तव्यमिति नियमात्। न च शैत्यपावनत्वप्रतीतिर्लक्षणया उपपद्यते केवलतीरलक्षणयैवाऽन्वयानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टे लक्षणायां मानाभावात्। द्वितीया "गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्रगतो भवान्" इत्यादौ मयि देशान्तरं गते सति अस्याः मरणं भविष्यतीति नायकस्य ज्ञानमुत्पद्यते सा व्यंजना अर्थशक्तिमूला। तथा च व्यंजनावृत्तिरंगीकर्त्तव्येत्यालंकारिकशंकां परिहरति। **व्यंजनाऽपीति**। अपिना गौणीपरिग्रहः। तथा च यथा गौणी अन्तर्भूता तथा व्यंजनाऽपीति भावः। **शब्दशक्तिमूला**-शब्दसामर्थ्यमूला। **शक्तिलक्षणान्तर्भूतेति**। शक्त्यन्तर्भूता-लक्षणान्तर्भूता चेत्यर्थः। आद्या यथा "दूरस्थो-

भूधरो रम्य" इत्यादौ भूधरपदेन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः संभवति। द्वितीया यथा गंगायां घोष इत्यादौ शैत्यपावनत्वविशिष्टतीर-प्रतीतिर्लक्षणयैव संभवति। तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वादिति। **अर्थशक्तिमूला,** प्रवासाधिकरणदेशे जन्मकथनेन जन्मनश्च मरणोत्तरकालीनत्वेन प्रवासोत्तरकालीनमरणरूपाऽर्थसामर्थ्यमूला च त्वर्थे **अनुमानादिनेति।** अनुमानप्रयोगस्तु इयं मदीयगमनोत्तरकालप्राणवियोगवती निलक्षणशब्दप्रयोक्तृत्वादित्याकारकः। आदिना संभावनापरिग्रहः। तथा च निरुक्तानुमादिनाऽन्यथासिद्धत्वाद् व्यंजनाया वृत्यन्तरत्वे प्रमाणाभाव इति भावः।

किं च व्यंजना स्वरूपसती कारणं ज्ञाता वा। नाद्यः। तथा सति सर्वदा सर्वस्यैव व्युत्पन्नस्य तादृशबोधापत्तेः, न तु सहृदयमात्रस्य, व्यंजनाया अविशेषात्। इष्टापत्तौ अनुभवविरोधः। सहजाऽप्रतीयमानरूपगूढत्वस्य तादृशव्यंग्येऽनुपपत्तिश्च स्यात्। न द्वितीयः। व्यंजनाग्राहकत्वस्य वक्तव्यत्वापातात्। ज्ञानसामान्यसामग्र्यास्तद्ग्राहकत्वे उक्तदोषतादवस्थ्यादिति ध्येयम्।

ननु व्यंजनाया अस्वीकारे कथमेकविधार्थबोधानन्तरं अपरार्थबोधः, शक्तिज्ञानादेकदैवोभयार्थभानप्रसंगात्। न च व्यंजनास्वीकारेऽपि कथं तादृशबोध इति वाच्यम्। व्यंजनायाः स्वशक्यैकार्थबोधानन्तरबोधं प्रत्येव कारणत्वादिति चेदत्र **तर्कालंकाराः।** वस्तुतः शक्त्याद्युपस्थितानामेकविधानां पदार्थानामन्वयबुद्धेरनन्तरं यद्यन्यविधानामन्वयबोधः स्यात्, स्यादपि तदनुरोधेन व्यंजनास्वीकारः। न चैवम्। तत्तदर्थकशब्दसामान्यं प्रत्यैव तत्तदर्थकनिरस्तात्पर्यधियः प्रतिबन्धकत्वात्, तत्तदर्थानां यथाकथंचिदुपनयवशेन मनसैव विशिष्टधीसंभवात्, मानोरथिकसुखविशेषपर्यवसितं चमत्कारं प्रत्यपि शाब्दस्येव मानसस्यापि बोधस्य विशिष्यहेतुतायाः सुवचत्वात् व्यंजनाख्यपदार्थान्तरस्य, शाब्दबोधे तद्धेतुत्वस्य च प्रमाणविरहेणाऽसत्त्वाच्चेति संक्षेप इति प्राहुः।

दी०—तात्पर्यानुपपत्तिर्लक्षणाबीजम्।

गं०—ननु सर्वत्र लक्षणया शाब्दबोधवारणाय लक्षणायां मुख्यार्थान्वयानुपपत्तिप्रतिसन्धानं प्रयोजकमभ्युपेयम्, तथा च गंगायां घोष इत्यत्र लक्षणया बोधसंभवेऽपि यष्टीः प्रवेशय, छत्रिणो यान्तीत्यादौ न तत्संभवः, मुख्यार्थान्वयानुपपत्तेरभावात् । एवं गंगायां घोष इत्यत्रापि सर्वत्र गंगापदस्य तीरे लक्षणया, घोषपदस्य मत्स्यादिलक्षणया वाऽन्वयानुपपत्तिपरिहारसंभवात्, कुत्रचिद् गंगापदस्य तीरे, कुत्रचिद् घोषपदस्य मत्स्यादौ लक्षणेति नियमानुपपत्तिश्चेत्यत आह । **तात्पर्यानुपपत्तिरिति** । तात्पर्यानुपपत्तिरेवेत्यर्थः । **लक्षणाबीजमिति** । लक्षणाप्रयोजकमित्यर्थः । तथा च यष्टिषु प्रवेशान्वयानुपपत्तेरभावेऽपि भोजनतात्पर्यानुपपत्त्या यष्टिधरे लक्षणा । एवं तीरवृत्तिर्घोष इति बोधतात्पर्येण प्रयुक्ते गंगाया घोष इत्यादौ तादृशतात्पर्यानुपपत्त्या गंगापदस्य तीरे लक्षणा, प्रवाहवृत्तिर्मत्स्य इति बोधतात्पर्येण प्रयुक्ते गंगायां घोष इत्यादौ तादृशतात्पर्यानुपपत्त्या घोषपदस्य मत्स्यादौ लक्षणा, एवं च नोक्तनियमानुपपत्तिरिति भावः ।

दी०—तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम् । तात्पर्यज्ञानं च वाक्यार्थज्ञाने हेतुः, नानार्थानुरोधात् । प्रकरणादिकं च तात्पर्यग्राहकम् ।

गं०—तात्पर्यं निर्वक्ति । **तत्प्रतीतीच्छयेति** । "तीरादिरूप" तदर्थविषयकबोधेच्छया प्रयुक्तत्वं तात्पर्यमित्यर्थः ननु सैन्धवमानयेत्यादिनानार्थकस्थले सैन्धवपदस्य अश्वे लवणे च शक्तेस्तुल्यतया सर्वदा अश्वलवणबोधः स्यात्, अश्वलवणबोधौपयिकसामग्र्याः अविशिष्टत्वात्, एकसामग्र्याः अपरबोधप्रतिबन्धकत्वे तादृशवाक्याच्छाब्दबोध एव नस्यादित्यत आह । **तात्पर्यज्ञानं चेति** । तात्पर्यज्ञानमपीत्यर्थः । **वाक्यार्थज्ञाने हेतुरिति** । शाब्दबोधसामान्यकारणमित्यर्थः । **ननु** । तत्-प्रतीतिः परं-प्रयोजनं यस्येति तत्परं-पदमित्यर्थः । तत्परस्य भावः तात्पर्यम्, इति व्युत्पत्या पदनिष्ठो धर्म-

विशेष एव तात्पर्यवाच्यार्थः। न च तात्पर्यपदं इच्छायां लाक्षणिकमिति वाच्यम्। लक्षणया तात्पर्यशब्दस्य इच्छामात्रपरत्वे श्रोतृसमवेतेच्छाया अपि तात्पर्यरूपत्वापत्त्या सैन्धवमानयेति वाक्यप्रयोक्तुरिष्टासिद्धिः स्यादिति चेन्न। वक्तृसमवेतेच्छायाः तात्पर्यरूपत्वात्। सा च सैन्धवमानयेत्यादौ कर्मत्वविशेष्यकाऽऽधेयतासंसर्गकलवणप्रकारकबोधो जायतामित्याकारा। कर्मत्वविशेष्यकाऽऽधेयतासंसर्गकलवणप्रकारकबोधेच्छयोच्चरितमिदं वाक्यमित्याकारकश्रोतुस्तात्पर्यज्ञानं कारणम्। एतदभिप्रेत्योक्तम्, **तत्प्रतीतीच्छयोच्चरितत्वरूपेति**। तथा च यादृशवाक्यविशेष्यकं स्वप्रयोज्योच्चरितत्वसंबन्धेन वक्तुरिच्छाप्रकारकं तात्पर्यज्ञानं तादृशवाक्यजन्यशाब्दबोधे कारणमतो नाऽनियमः। तात्पर्यज्ञानस्य हेतुत्वे प्रमाणमाह **नानार्थानुरोधादिति**। नानार्थकसैन्धवादिपदजन्यैकैकबोधानुरोधादित्यर्थः। ननु परेच्छायाः परस्याऽप्रत्यक्षत्वेन कथं श्रोतुर्वक्तृतात्पर्यज्ञानमित्यत आह **प्रकरणादिकमिति**। प्रकरणं भोजनयात्रादिप्रस्तावः। तथा च सैन्धवमानयेति वाक्यघटकं सैन्धवपदं लवणतात्पर्यकं भोजनप्रकरणे प्रयुज्यमानत्वात् यन्नैवं तन्नैवं प्रयाणप्रकरणे प्रयुज्यमानसैन्धवपदवदिति व्यतिरेक्यनुमानात् अनुमित्यात्मकं तात्पर्यज्ञानं संभवत्येवेति भावः। न च तात्पर्यज्ञानजनकप्रकरणादीनामेवशाब्दबोधे कारणत्वमस्त्विति वाच्यम्। तेषामननुगमात्। तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानत्वेनैव कारणत्वे लाघवादिति ध्येयम्।

दी०—द्वारमित्यादौ पिधेहीति शब्दाध्याहारः। ननु अर्थज्ञानार्थत्वात् शब्दस्याऽर्थमविज्ञाय शब्दाऽध्याहाराऽसंभवादर्थाऽध्याहार एव युक्त इति चेन्न। पदजन्यपदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात्। अन्यथा घटः कर्मत्वमानयनं कृतिः इत्यत्रापि शाब्दज्ञानप्रसंगात्।

गं०—अर्थाऽध्याहारवादिभट्टमतनिराकरणायाह। **द्वारमित्यादा**-

विति। इत्यादिवाक्ये इत्यर्थः। आदिना पेटिकामित्यादेः परिग्रहः। तथा च यत्र द्वारमित्युक्तं तत्र पिधेहीति शब्दोऽनुसन्धेयः। ततः पिधानादिरूपार्थोपस्थितिः। द्वारकर्मकपिधानानुकूलकृतिमांस्त्वमिति बोध इति भावः। ननु शाब्दबोधे नहि पदजन्यपदार्थोपस्थितिः कारणम्, लाघवेन पदार्थोपस्थितेरेव हेतुत्वात्, अत एव द्वारमित्यादौ न पिधेहीति पदाध्याहारः किन्तु अर्थाध्याहार एवेति भट्टः शंकते। **नन्विति**। **अर्थज्ञानार्थत्वाच्छब्दस्येति**। अर्थज्ञानं-शाब्दबोधः अर्थः प्रयोजनं यस्य सः। तस्य भावस्तस्मात् **शब्दस्य** शब्दाऽध्याहारस्येत्यर्थः। शब्दाध्याहारस्य शाब्दबोधफलकत्वादित्यर्थः। **अर्थमविज्ञायेति**। अर्थज्ञानशून्यकाले इत्यर्थः **शब्दाऽध्याहाराऽसंभवादिति**। शब्दाऽनुसन्धानाऽसंभवादित्यर्थः। **युक्त इति**। **तथा चाऽर्थं बुद्ध्वा शब्दरचनेति** न्यायेन वाक्यप्रयोगे अर्थज्ञानस्य हेतुत्वावश्यकतया पिधानरूपार्थोपस्थितेः शब्दकल्पनातः प्रागेवावश्यकतया तदर्थं शब्दकल्पना व्यर्थैवेति अर्थाध्याहार एव युक्त इति भावः। अर्थोपस्थितिः शब्दाध्याहारस्य फलम्, अर्थे चोपस्थिते व्यर्थ एव शब्दाध्याहार इति तेषामाशयः। समाधत्ते। **नेति**। **पदविशेषजन्येति**। पदज्ञानजन्येत्यर्थः। विशेषपदं साकांक्षपदजन्यत्वलाभार्थम्, अन्यथा निराकांक्षपदजन्योपस्थितितः शाब्दबोधापत्तेः। तथा च परस्परसाकांक्षपदज्ञानजन्योपस्थितेः शाब्दबोधे हेतुत्वादिति पर्यवसितोर्थः। अत एव घटः कर्मत्वमित्याद्यनुधावनम्। एवं च तत्र कर्मत्वादिपदजन्यकर्मत्वाद्युपस्थितेः सत्वेऽपि घटपदोत्तराऽमूपदजन्यकर्मत्वाद्युपस्थितेरसत्वेन सिद्धान्तिमते न शाब्दबोध प्रसंग इति ध्येयम्। **अन्यथा**। उपस्थितौ साकांक्षपदज्ञानजन्यत्वाऽनिवेशे। **शाब्दज्ञानप्रसंगादिति**। घटकर्मकाऽऽनयनानुकूलकृतिमानिति शाब्दबोधापत्तेरित्यर्थः। तथा च अमूपदज्ञानजन्यकर्मत्वोपस्थितेः, लोट्पदज्ञानजन्यकृत्युपस्थितेश्च तादृशशाब्दबोधहेतुतया प्रकृते तादृशकारणाभावान्न तादृशशाब्दबोधापत्तिः। एवं च द्वारमित्यादौ पिधानादिरूपार्थाध्याहारे निरुक्तकारणाभावाच्छाब्दबोधानुपपत्त्या शब्दाध्याहार

आवश्यक इति भावः। **इदमुपलक्षणम्।** पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिपदाऽध्याहारं विना चतुर्थ्यनुपपत्तिश्च बोध्या। **स्पृहेरीप्सित** इति सूत्रेण स्पृहार्थकधातुयोगे एव कर्मत्वार्थकचतुर्थ्याः विधानादिति।

दी०—पङ्कजादि पदेषु योगरूढ़िः। अवयवशक्तिर्योगः, समुदायशक्ती रूढ़िः। नियतपद्मत्वज्ञानार्थं समुदायशक्तिः। अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः।

गं०—प्रसंगात्पंकजादि पदे योगरूढिं दर्शयति। **पंकजादिपदेष्विति।** आदिना सरोजादिपरिग्रहः अत्र शक्तिर्द्विविधा। योगो रूढिश्चेति। **योगरूढिरिति।** योगसहिता रूढिरित्यर्थः। द्विविधशक्तिरपि पंकजादिपदवृत्तिरिति यावत्। योगशब्दार्थमाह। **अवयवशक्तिरिति।** पदघटकपदनिरूपितशक्तिर्योग इत्यर्थः। रूढिस्वरूपमाह। **समुदायशक्तिरिति।** पदनिरूपितशक्तिः समुदायात्मकरूढिशक्तिरित्यर्थः। तथा च पंकजपदस्य पंकनिष्ठजनकतानिरूपितजन्यताश्रये शक्तिसत्वात् पद्मत्वावच्छिन्ने शक्तिसत्वाच्च पंकजादिपदे शक्तिद्वयम्। **इदमुपलक्षणम्।** पदं चतुर्विधं पूर्वोक्तं वेदितव्यम्। ननु पंकजादि पदे अवयवशक्तिस्वीकारमात्रेण निर्वाहे किं पद्मत्वावच्छिन्ने समुदायशक्तिस्वीकारेणेत्यत आह। **नियतेति।** शाब्दबोधे नियमेन पद्मत्वावच्छिन्नविषयकत्वनिर्वाहार्थमित्यर्थः। **समुदायशक्तिरिति।** समुदायशक्तिरपीति। स्वीकार्येति शेषः। **अन्यथा।** पद्मत्वावच्छिन्ने समुदायशक्त्यनंगीकारे। **कुमुदेऽपीति।** अपिना पद्मसमुच्चयः। **प्रयोगप्रसंग** इति। पंकजपदस्य प्रयोगापत्तिरित्यर्थः। पंकजपदात्पंकजनिकर्तृत्वप्रकारकपद्मविशेष्यकबोधस्येव पंजकनिकर्तृत्वप्रकारककुमुदविशेष्यकबोधस्याऽपत्तिरिति यावत्[1]। योगार्थबोधाऽनभ्युपगमे तु स्थलपद्मेऽपि तादृशप्रयोगापत्तेरिति ध्येयम्।

---

टि०—१ न च पंकजपदात् केवलयाऽवयवशक्त्या कुमुदबोधापत्तिरिति वाच्यम्। योगाद्रूढेर्बलीयस्त्वात्। तथा च पद्मत्वानवच्छिन्नविशेष्यतानिरूपितपंकज-

दी०—इतरान्विते शक्तिरिति प्रभाकराः। अन्वयस्य वाक्यार्थतया भानसंभवादन्वयांशेऽपि शक्तिर्न कल्पनीया इति गौतमीयाः।

गं०—तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितिः कारणम्, अन्यथा घटादिपदात् पटादिविषयकशाब्दबोधापत्तेः। एवं च अन्वयांशेऽपि शक्तिः स्वीकार्या अन्यथा घटमित्यादि वाक्यघटकघटपदात् शक्त्या घटस्य, तादृशाऽम्पदात् शक्त्या कर्मत्वस्य उपस्थितिसंभवेऽपि घटकर्मत्वयोः संसर्गस्य "आधेयतारूपस्य" शाब्दबोधे भानानुपपत्तिः, तस्य वृत्तिज्ञानजन्योपस्थितिविरहात् संसर्गताबोधकपदाभावात् संसर्गताभिन्नतत्तद्विषयताशालिशाब्दबोधं प्रति वृत्तिज्ञानाधीनतत्तद्विषयकोपस्थितित्वेन कारणत्वोक्तौ उक्तव्यभिचारवारणेऽपि कार्यतावच्छेदकगौरवापत्तेरिति प्राभाकरमतमाक्षिप्य समाधत्ते। इतराऽन्विते इति पदानामित्यादिः। अन्वयः सम्बन्धः। इतरानुयोगिकान्वयवति इतरप्रतियोगिकाऽन्वयवति च शक्तिरित्यर्थः। यथा घटपदस्य कर्मत्वाऽनुयोगिकाऽऽधेयता"संबन्ध"विशिष्टे शक्तिः तथाऽम्पदस्याऽपि घटप्रतियोगिकाऽऽधेयता"संबन्ध"विशिष्टे शक्तिः, विनिगमनाविरहेण एकशेषस्य कर्तुमशक्यत्वात्। तथा च पदार्थद्वयसंसर्गेऽपि शक्तेः स्वीकरणीयतया घटघटत्वयोः संसर्गः उभयपदलभ्य एवेति नोक्तानुपपत्तिः। एतन्मते इतरान्वितघटो घटपदशक्यः, इतरान्वितकर्मत्वं अम्पदशक्यम् इति वा शक्तिज्ञानं कारणम्। अत्र इतरत्वमुपलक्षणम्। इतरांशस्य कर्मत्वस्य पदान्तरलभ्यतया तत्र शक्त्यकल्पनात्, अन्वितघटे एव घटपदः शक्तिः। इति प्राभाकरा इति। वदन्तीति शेषः। वस्तुतस्तु भट्टानामिदं मतम्। तन्मतं निरस्यति। अन्वयस्येति। संसर्गस्येत्यर्थः

---

निकर्तृत्वप्रकारताशालिबोधं प्रति पंकजपदं पद्मशक्तं इत्याकारकं रूढिज्ञानं प्रतिबन्धकमिति भावः। एवं च पंकजपदात् अवयवार्थपंकजनिकर्तृत्वप्रकारकरूढ्यर्थपद्मविशेष्यकबोधो भवति। अतएव "पंकजं कुमुदं" इत्यत्र पंकजनिकर्तृत्वेन, "भूमौ पंकजमुत्पन्न" मित्यादौ च पद्मत्वेन, पंकजपदस्य लक्षणयैव कुमुद-स्थलपद्मयोर्बोध इति ध्येयम्।

**वाक्यार्थतयेति** । आकांक्षयेति यावत् । **अन्वयांशेऽपीति** । कस्यापि पदस्य संसर्गांशे शक्तिर्न कल्पनीयेत्यर्थः ।

अत्रेदं बोध्यम् । सामान्यतस्तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्विषयकोपस्थितिर्न कारणम्, तथा सति घटपदात् घटत्वप्रकारकबोधस्येव आधेयतासंबन्धेन घटप्रकारकघटत्वविशेष्यकबोधस्य, "घटत्वं घटीयमित्याकारकस्य" विश्रृंखलभावेन "घटः घटत्वं च" इत्याकारकस्य वा बोधस्याऽऽपत्तेः । किन्तु तद्धर्मप्रकार[1]कतद्विशेष्यकबोधे वृत्तिज्ञान[2]जन्यतद्धर्मावच्छिन्नविषयकोपस्थितिः कारणम् । तथा च संसर्गे विशेषणतास्वीकारेऽपि प्रकारताया अनभ्युपगमेन कार्यतावच्छेदकाऽनाक्रान्ततया व्यभिचाराऽभावेन पदार्थद्वयसंसर्गे शक्तिकल्पने प्रमाणाभाव इत्याशयेन नैयायिकाः घटादिपदानां घटादिमात्रे शक्तिं स्वीकुर्वन्तीति ।

पदार्थद्वयसंसर्गस्य शाब्दबोधभानप्रयोजिकाऽऽकांक्षैव । तथा च

---

टि०—१ अत्र तद्धर्मनिष्ठप्रकारतायां विधेयताभिन्नत्वं निवेशनीयम् । अन्यथा घटवद्भूतलमिति वाक्यात् घटप्रकारकभूतलविशेष्यकशाब्दबोधे वृत्तिज्ञानजन्यघटावच्छिन्नभूतलविषयकोपस्थितिरूपकारणविरहेण व्यतिरेकव्यभिचारापत्तेः । तन्निवेशे च घटस्य विधेयतया न व्यभिचार इति ।

टि०—२ इदं पुनरिहावधेयम् । शक्तिलक्षणोभयसाधारणवृत्तित्वस्य दुर्वचतया न वृत्तिज्ञानत्वेन कारणत्वम्, किन्तु तद्विषयकशाब्दबोधे तच्छक्तपदज्ञानजन्यतदुपस्थितिः, तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितिश्च कारणम्, एवं शक्तिज्ञानं लक्षणाज्ञानं चोभयविधम् पदविशेष्यकं अर्थविशेष्यकं च तत्र परस्परजन्यबोधे व्यभिचारवारणाय पदविशेष्यकशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानशाब्दबोधं प्रति पदविशेष्यकवृत्तिज्ञानाधीनोपस्थितिः कारणम् । एवमर्थविशेष्यकशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानशाब्दबोधं प्रति अर्थविशेष्यकशक्तिज्ञानाधीनोपस्थितिः कारणम् । एवं च वृत्त्यनुपस्थितस्याऽपि पदार्थद्वयसंसर्गस्य शाब्दबोधे भानोपगमे व्यभिचाराऽभावात् किं तत्र शक्तिकल्पनेनेति ध्येयम् ।

आधेयतासंबन्धेन घटप्रकारककर्मत्वविशेष्यकशाब्दबोधं प्रति घटपदाऽव्यवहितोत्तराऽम्पदत्वरूपानुपूर्वीज्ञानं, अम्पदाव्यवहितपूर्ववृत्तिघटपदत्वरूपाऽनुपूर्वीज्ञानं वा कारणम्। अन्यथा अम्घट इति वाक्यादपि शाब्दबोधापत्तेः। प्रत्ययः परश्चेत्याद्यनुशासनमपि आकांक्षाभिधायकमेवेति ध्येयम्।

## आकांक्षायोग्यतासन्निधिश्च वाक्यार्थज्ञाने हेतुः।

दी०—आकांक्षेति। आकांक्षादिज्ञानमित्यर्थः। अन्यथा आकांक्षादिभ्रमाच्छाब्दबोधो न स्यात्।

गं०—एतावता पदज्ञानं करणम्, "वृत्तिज्ञानसहकृतात्पदज्ञानात्" पदार्थोपस्थितिर्व्यापारः, शाब्दबोधः फलमित्यायातम्। परन्तु एवमपि घटं आनयनं कृतिः, घटः कर्मत्वं आनय, घटः कर्मत्वं आनयनं कृतिरित्यादि निराकांक्षवाक्याच्छाब्दबोधापत्तिवारणाय शाब्दबोधे कारणान्तराण्यपि कथयति। मूले। आकांक्षेति। वाक्यार्थज्ञाने इति। शाब्दबोधे इत्यर्थः। आकांक्षा स्वरूपसती न कारणम्, वक्ष्यमाणदोषात्, अत आकांक्षापदं आकांक्षाज्ञानपरतया व्याचष्टे दीपिकायां आकांक्षादि ज्ञानमित्यर्थ इति। अन्यथा। आकांक्षादेरेव हेतुत्वे। अकांक्षादिभ्रमादिति। घटः कर्मत्वमित्यत्र घटपदाऽव्यवहितोत्तराऽम्पदत्वभ्रमादित्यर्थः। शाब्दबोधो न स्यादिति। तथा च शाब्दबोधोपपत्तये आकांक्षादि ज्ञानस्य हेतुत्वमावश्यकमिति भावः। आदिना योग्यताभ्रमात्; सन्निधिभ्रमाच्छाब्दबोधोपपत्तये योग्यताज्ञानस्य सन्निधिज्ञानस्य च कारणता सूचिता। तेन वन्हिना सिञ्चतीत्यत्र सेके वन्हिकरणकत्वरूपयोग्यताभ्रमात्, असहोच्चरितवाक्येषु सान्निध्यभ्रमदशायां च न शाब्दबोधानुपपत्तिः।

## पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा।

न्या०—आकांक्षां लक्षयति। पदस्येति। अव्यवहितोत्तरत्वादि-

संबन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावः तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकांक्षा। यथा घटमित्यादिस्थलेऽव्यवहितोत्तरत्वसंबन्धेन "अम्पदं घटपदव"दित्याकारकाऽम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे घटीयं कर्मत्वमिति बोधो जायते। "अम्घट" इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते, अतस्तादृशाऽऽकांक्षाज्ञानं कारणम्।

दी० आकांक्षां लक्षयति। पदस्येति।

गं०—मूले। पदस्येति। पदनिष्ठमित्यर्थः। पदान्तरविरहप्रयुक्तेति। यत्पदविरहप्रयोज्येत्यर्थः। अन्वयाऽननुभावकत्वम्, शाब्दबोधजनकत्वाभावः तत्पदस्य तत्पदेन सहाऽऽकांक्षा यथा घटमित्यादौ घटपदस्य अम्पदव्यतिरेकप्रयुक्ताऽन्वयाननुभावकत्वं वर्तते न हि अम्पदव्यतिरेके घटपदं शाब्दबोधं जनयति "घटः कर्मत्व" मित्यादौ तादृश शाब्दबोधानुदयात्। अतो घटपदस्य अम्पदेनाऽऽकांक्षा एवं अम्पदस्य घटपदेनाऽऽकांक्षा प्रकृतिप्रत्ययोः परस्परं साकांक्षत्वात्"। बोधिन्यां यत्पदे इति। अम्पदे इत्यर्थः। विशेष्यत्वं सप्तम्यर्थः यत्पदेति। घटपदेत्यर्थः। तत्पदे। अम्पदे तत्पदवत्त्वं। घटपदवत्त्वम्। पदवत्ता चाऽव्यवहितोत्तरत्वसंबन्धेन तथा च आधेयत्वसंबन्धेन घटप्रकारककर्मताविशेष्यकशाब्दबोधं प्रति घटपदाव्यवहितोत्तराऽम्पदत्वरूपानुपूर्वीज्ञानं, अम्पदाऽव्यवहितपूर्ववृत्तिघटपदत्वरूपानुपूर्वीज्ञानं वा कारणम्। तादृशज्ञानाऽभावादिति। अव्यवहितोत्तरत्वसंबन्धेन घटपदवत् अम्पदमित्याकारकज्ञानाभावादित्यर्थः एवं घटौ घटानित्यत्रापि।

इदमुपलक्षणम्। राजपुरुष इत्यादि समासस्थलेऽपि अभेदसंबन्धेन राजसंबन्धिप्रकारकपुरुषविशेष्यकशाब्दबोधं प्रति राजपदाव्यवहितोत्तरपुरुषपदत्वरूपाऽऽकांक्षाज्ञानं पुरुषपदाऽव्यवहितपूर्ववृत्तिराजपदत्वरूपाऽऽकांक्षाज्ञानं वा कारणम्। तेन राजपुरुष इव राजपुरुष इतिवाक्यान्न तादृशोबोध इति।

## अर्थाऽबाधो योग्यता ।

न्या०—अर्थाऽबाध इति । बाधाभावो योग्यतेत्यर्थः । अग्निना सिञ्चेदित्यत्र सेककरणत्वस्य जलादिधर्मस्य वन्हौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः ।

दी०—योग्यतालक्षणमाह । अर्थेति ।

गं०—मूले अर्थाऽबाध इति । अर्थस्य बाधः—एकपदार्थे अपरपदार्थाऽभावः । तद्विरहोऽपरपदार्थ एव । तथा चैकपदार्थे अपरपदार्थवत्त्वं योग्यतेति पर्यवसितम् । सेचने पयःकरणकत्वसत्वात् पयसा सिञ्चतीत्यादौ योग्यता । वन्हिना सिञ्चतीत्यादौ तु न योग्यता । सेचने वन्हिकरणकत्वविरहात् । बोधिन्यां बाधाऽभाव इति बाधज्ञानाभाव इत्यर्थः । सेचनं पयःकरणकत्वाभाववदिति बाधनिश्चयाऽभावरूपयोग्यताबलात् पयसा सिंचतीत्यत्र बोधः । वन्हिना सिञ्चतीत्यादौ तु न योग्यता । सेचनं वन्हिकरणकत्वाभाववदिति बाधनिश्चयस्यैव सत्वेन बाधनिश्चयाभावरूपयोग्यताविरहात् । वन्हौ बाधनिश्चयसत्वादिति । वन्हिः सेककरणत्वाभाववानिति बाधनिश्चयसत्वादित्यर्थः । तुल्यवित्तिवेद्यतया सेचनं वन्हिकरणकत्वाभाववदिति बाधश्चियस्यापि सत्वात् ।

न च एतादृशयोग्यतायाः अर्थनिष्ठत्वेन वाक्यनिष्ठत्वाभावाद् वन्हिना सिञ्चतीत्यस्येव पयसा सिञ्चतीति वाक्यस्यापि अयोग्यवाक्यत्वापत्तिरिति वाच्यम् । वाक्ये स्वरूपसंबन्धेन योग्यताविरहेऽपि प्रतिपादकतासंबन्धेन योग्यतासत्वान्नोक्तापत्तिः ।

## पदानामविलंबेनोच्चारणं सन्निधिः ।

न्या०—सन्निधिं निरूपयति । पदानामिति ।

दी०—सन्निधिलक्षणमाह । पदानामिति । अविलंबेन पदार्थोपस्थितिः सन्निधिः । उच्चारणं तु तदुपयोगितया उक्तम् ।

गं०—मूले । पदानामिति अभिमतशाब्दबोधजनकानामित्यर्थः । कर्मणि षष्ठी **अविलंबेन** अव्यवधानेन । वैशिष्ट्यं तृतीयार्थः । तथा च परस्परव्यवधानाभावविशिष्टं यत्पदकर्मकमुच्चारणं स सन्निधिरित्यर्थः । तथा च शाब्दबोधानुकूलपदविशिष्टपदत्वमासत्तिरिति यावत् । वै० स्वाव्यवहितपूर्वत्व-स्वाव्यवहितोत्तरत्वान्यतरसंबन्धेनेति ।

ननु मौनिश्लोकादौ उच्चारणाऽभावेऽपि शाब्दबोधस्याऽनुभवसिद्धतया तत्र नोक्तसन्निधिसंभव इत्यालोच्य पदानामविलंबेनोच्चारणमित्यस्य अर्थानामविलंबेनोपस्थित्यर्थकतया तादृशोपस्थितिरेव सन्निधिरित्याह । दीपिकायां । **अविलंबेन पदार्थोपस्थितिरिति । अविलंबेन ।** अव्यवधानेन। एव च मौनिश्लोकादौ पदज्ञानेन पदार्थोपस्थितावेव शाब्दबोधो नान्यथा । ननु आसत्तेरुपस्थितिरूपत्वे "अविलंबेन पदोच्चारणं व्यर्थमित्यत आह । **उच्चारणन्त्विति ।** अविलंबेन पदोच्चारणन्त्वित्यर्थः । अवधारणार्थकस्तु शब्दः तदुपयोगितयेत्युत्तरं योज्यः । अविलंबेन पदार्थोपस्थितिसंपादकतयैवेत्यर्थः । तथा च यत्पदार्थस्य यत्पदार्थेनाऽन्वयोऽपेक्षितः तयोः पदयोः अव्यवधानेनोपस्थितिः शाब्दबोधे कारणमित्यर्थः ।

**तथा चाऽऽकांक्षादिरहितं वाक्यमप्रमाणम् । यथा गौरश्वः पुरुषो हस्तीति न प्रमाणम्, आकांक्षाविरहात् । वन्हिना सिञ्चेदिति न प्रमाणम् , योग्यताविरहात् । प्रहरे प्रहरे असहोच्चारितानि गाम् आनय इत्यादि पदानि न प्रमाणम्, सान्निध्याभावात् ।**

न्या०—असहोच्चारितानि । विलंबोच्चारितानि ।

दी०—गौः अश्व इति । घटः कर्मत्वमित्यप्यनाकांक्षोदाहरणं द्रष्टव्यम् ।

गं० — मूले । आकांक्षादि रहितं वाक्यमिति । आकांक्षादित्रयशून्यं वाक्यसामान्यमित्यर्थः । अप्रमाणमिति । अभ्रान्तस्य शाब्दबोधजननाऽसमर्थमिति यावत् आकांक्षारहितवाक्यमुदाहरति । यथेति । न प्रमाणमिति । अभ्रान्तस्य शाब्दबोधजननाऽसमर्थमित्यर्थः । तत्र हेतुमाह । आकांक्षाविरहादिति । गोपदस्याऽश्वपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वाभावेन तत्पदस्य तत्पदत्वरूपाऽऽकांक्षाया अभावादिति भावः । गौरश्व इत्यादौ अभेदसंबन्धेन तयोः शाब्दबोधस्य योग्यताविरहेणैव वारयितुं शक्यत्वादनाकांक्षोदाहारणान्तरमाह । दीपिकायां । घटः कर्मत्वमिति ।

**वाक्यं द्विविधम्-वैदिकं, लौकिकं च । वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम् । अन्यदप्रमाणम् । वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः । इति-शब्दप्रमाणम् ।**

न्या०—वैदिकमिति । वेदवाक्यमित्यर्थः । इदमुपलक्षणम् । वेदमूलस्मृत्यादीन्यपि ग्राह्याणि । लौकिकं त्विति । वेदवाक्यभिन्नमित्यर्थः । आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् ।

इति न्यायबोधिन्यां शब्दपरिच्छेदः ।

दी०—वाक्यं विभजते—वाक्यमिति । वैदिके विशेषमाह—वैदिकमीश्वरोक्तत्वादिति ।

गं०—दीपिकायां । वैदिके विशेषमाहेति । वैदिकस्य लक्षणमाहेत्यर्थः । ईश्वरोक्तत्वादिति । ईश्वरोक्तत्वमेव वैदिकानां लक्षणमिति भाव लौकिकस्य द्वैविध्यमुपपादयति । लौकिकन्त्विति । तु शब्दोऽवधारणार्थकः । आप्तोक्तं लौकिकं प्रमाणम्, अनाप्तोक्तं लौकिकमप्रमाणमित्यर्थः । वाक्यार्थज्ञानमिति । एकपदार्थे अपरपदार्थसंसर्गविषयकं ज्ञानमित्यर्थः । तत्क-

णमिति । शाब्दज्ञानकरणमित्यर्थः । शब्दः इति । शब्दज्ञानमित्यर्थः । नीलोघट इत्यादौ प्रथमं नीलादिपदानां शक्तिज्ञानं-ततः कालान्तरे नीलादिपदज्ञानम् । ततो वृत्तिज्ञानाधीननीलाद्युपस्थितिः । ततोऽभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशाली बोधः ।

दी०—ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमिति चेत्, न । 'वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत्' इत्यनुमानेन पौरुषेयत्वसिद्धेः । न च स्मर्यमाणकर्त्तृकत्वमुपाधिः । गौतमादिभिः शिष्यपरम्परया वेदेऽपि सकर्त्तृत्वस्मरणेन साधनव्यापकत्वात् । 'तस्मात्तेपानात् त्रयो वेदा अजायन्त' इति श्रुतेः ।

गं०—मीमांसकः शंकते । नन्विति । अनादित्वात् । नित्यत्वात् । पौरुषेय इति । पुरुषप्रणीत इत्यर्थः । जन्य इति यावत् । पौरुषेयत्वं च स्वसजातीयोच्चारणाऽनपेक्षभ्रमादिशून्यपुरुषोच्चरितत्वम् । वेदत्वं चाऽनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिग्रहीतवाक्यत्वम् वाक्यसमूहत्वादिति । वाक्यत्वादित्यर्थः । शेषभागो व्यर्थ एवेति ध्येयम् भारतादिवदिति । आदिना पुराणादेः परिग्रहः । स्मर्यमाणकर्त्तृकत्वमिति । ज्ञायमानकर्त्तृकत्वमित्यर्थः । यत्र यत्र पौरुषेयत्वं तत्र तत्र स्मर्यमाणकर्तृकत्वमिति साध्यव्यापकता पक्षान्तर्भावेण साधनाऽव्यापकता बोध्या । तेपानात् । तपोविशेषात् ।

दी०—ननु वर्णा नित्याः "स एवायं गकारः" इति प्रत्यभिज्ञाबलात् । तथा च कथं वेदस्यानित्यत्वमिति चेत्, न । उत्पन्नो गकारो नष्टो गकारः इत्यादिप्रतीत्या वर्णानामनित्यत्वात् सोऽयं गकारः इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत् जात्यावलम्बनत्वात् । वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्याऽनित्यत्वात् । तस्मादीश्वरोक्तो वेदः । मन्वादिस्मृतीनामाचाराणां च वेदमूलकतया

ामाण्यम् । स्मृतिमूलवाक्यानामिदानीमनध्ययनात् तन्मूलभूता
ाचित् शाखोच्छिन्नेति कल्प्यते

ननु पठ्यमानवेदवाक्योत्सादस्य कल्पयितुमशक्यतया विप्रकी-
र्णवादस्यायुक्तत्वादिति नित्यानुमेयो वेदो मूलमिति चेत्, न।
तथापि वर्णानुपूर्वीज्ञानाभावेन तस्य बोधकत्वासंभवात्।

गं०—वर्णमात्रस्य नित्यत्ववादिमीमांसकः शंकते । नन्विति । वर्णानां
नित्यत्वे प्रमाणमाह स एवायमिति । इति प्रत्यभिज्ञाबलादिति । इत्या-
ारकप्रत्यक्षप्रमाबलादित्यर्थः । तथा च । वर्णानां नित्यत्वसिद्धौ च ।
इत्यादि प्रतीत्येति । इत्याकारकप्रतीत्यन्यथानुपपत्त्येत्यर्थः । अनित्य-
त्वादिति । अनित्यत्वाङ्गीकारस्याऽवश्यकत्वादित्यर्थः । साजात्याऽ-
वलंबनत्वादिति । तज्जातीयाऽभेदविषयकत्वस्वीकारादित्यर्थः । ननु स
एवाऽयं गकार इति प्रतीतेः साजात्यावलंबनत्वे मानाभावः, अन्यथा सोऽयं
देवदत्त इत्यादि प्रत्यभिज्ञाया अपि साजात्यावलंबनत्वाऽपत्तेः, अतो वर्णानां
नित्यत्वमावश्यकमित्यत आह । नित्यत्वेऽपीति । नित्यत्वपक्षेऽपीत्यर्थः ।
अनित्यत्वादिति । रचनाविशेषरूपाऽऽनुपूर्व्या अनित्यत्वेन तद्विशिष्टवाक्य-
स्याऽनित्यत्वादित्यर्थः । तस्मादिति । वाक्यस्याऽनित्यत्वादित्यर्थः ।
ुष्पाणां चैत्रकर्तृकत्वाऽभावेऽपि मालायाः चैत्रकर्तृकत्ववदिति यावत् ।
इति कल्प्यते । इति स्वीक्रियते । कस्य चिद्वेदस्याऽनित्यत्वेऽपि कस्य-
चिद्वेदस्यनित्यत्वमित्येकदेशी शंकते । नन्वित्यादिना । पठ्यमानवेदवा-
क्योत्सादनस्येति । पठनकर्मीभूतवेदवाक्यनाशस्येत्यर्थः । कल्पयितुम-
शक्यतयेति । कल्पनायाः अप्रामाणिकतयेति यावत् । विप्रकीर्णवाद-
स्य । वेदः शिथिलः इति व्यवहारस्य । अयुक्तत्वात् । अप्रामाणिकत्वात् ।
नित्याऽनुमेय इति । नित्योऽनुमेयश्चेत्यर्थः । मूलमिति । स्मृत्याचारा-
ामित्यादिः । वर्णानुपूर्वीज्ञानाभावेनेति । अनुमितवेदस्याऽऽनुपूर्वीनि-
श्चयाभावेनेत्यर्थः । तस्य । अनुमितवेदस्य । बोधकत्वाऽसंभवात् ।
बोधजननाऽसमर्थत्वात् । अप्रमाणत्वादिति यावत् ।

दी०—ननु एतानि पदानि स्मारितार्थसंसर्गवन्ति आकांक्षादिमत्पदकदम्बकत्वात् "गामानय दण्डेनेति" मद्वाक्यवत् इत्यनुमानादेव संसर्गज्ञानसंभवात् शब्दो न प्रमाणान्तरमिति चेत्, न। अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य 'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात्।

गं०—शब्दमनुमानेऽन्तर्भावयन् वैशेषिकः प्रत्यवतिष्ठते। **नन्विति।** अत्र एतानि पदानि पक्षः। गामानयेति वाक्यघटकघटपद-अमूपद-आङ्पूर्वकणीञ्धातुपदलोट्पदानीत्यर्थः। स्मारितार्थसंसर्गवत्त्वं साध्यम्। स्मारिताश्च ते अर्थाश्च, तेषां संसर्गः, स यत्रास्तीति विग्रहः। न चाऽर्थसंसर्गवत्त्वं पदे बाधितमिति वाच्यम्। संसर्गज्ञापकत्वस्यैव साध्यत्वात्। न च घटमानयेत्यादौ घटकर्मत्वयोः, कर्मत्वानयनयोश्च तात्पर्याऽविषयकालिकसंसर्गज्ञानपूर्वकत्वमादायाऽर्थान्तरमिति वाच्यम्। 'साध्यघटक" संसर्गे तात्पर्यविषयत्वस्याऽपि निवेशनीयत्वात्। तथा च तत्तत्पदैः स्मारिताः ये तत्तदर्थाः तेषां तात्पर्यविषयो यः संसर्गः तद्ज्ञानप्रयोजकानीत्यर्थः। आकाशघटोभयबोधतात्पर्येण प्रयुक्ताद् घटपदाद् घटमात्रोपस्थितौ घटादेरिव गगनसंसर्गमादायाऽर्थान्तवारणाय स्मारितेति। स्मारितत्वं च वृत्त्या बोध्यम्। तेन घटपदश्रवणानन्तरं समवायेनाऽऽकाशोपस्थितौ आकाशसंसर्गमादाय नाऽर्थान्तराऽऽपत्तितादवस्थ्यात्। **आकांक्षादिमत्पदकदंबकत्वादिति।** आकांक्षायोग्यतासन्निधिमत्पदसमूहकत्वादित्यर्थः। तेन साध्याभाववति आकांक्षारहितेऽयोग्ये अनासन्ने च वाक्ये हेतुसत्त्वेऽपि न व्यभिचारः। **मद्वाक्यवदिति।** मया श्रुतगामानयेति वाक्यघटकगोपदादिवदित्यर्थः। **संसर्गज्ञानसंभवादिति।** पदार्थोपस्थित्यनन्तरं एकपदार्थे अपरपदार्थसंसर्गावगाहिज्ञानं हि शाब्दबोधः, तस्य संभवादित्यर्थः। तथा च शाब्दबोधोऽनुमितिः लिंगजत्वादित्यनुमानेन शाब्दबोधस्य प्रमाऽन्तरत्वेऽसिद्धे विलक्षणप्रमाकरणत्वाभावाच्छब्दोऽपि न प्रमाणान्तरमित्याह। **शब्दो नेति। शब्दात्।** गौरस्ती-

तिवाक्यात्। प्रत्येमि। जानामि। अस्तित्वेन गामित्यादिः। एवं अस्तित्वेन गां शाब्दयामि न त्वनुमिनोमीत्यनुव्यवसायोऽपि बोध्यः। अनुव्यवसायसाक्षिकस्य। अनुव्यवसायविषयस्य। इदमुपलक्षणम्। व्याप्तिशून्यकालेपि शाब्दबोधस्याऽनुभवसिद्धत्वात्। न च सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्तीत्यपि बोध्यम्। किं च एकसंबन्धिज्ञानविधया यथा पदज्ञानमर्थस्मारकं भवति, तथा अर्थज्ञानस्यापि पदस्मारकतया वन्हिरूपाऽर्थज्ञानेन पदस्मरणं कल्पयित्वा अनुमितिस्थले शाब्दबोध एव किं न स्वीक्रियतामित्यास्तां विस्तरः।

दी०—ननु अर्थापत्तिरपि प्रमाणान्तरमस्ति "पीनो देवदत्तो दिवा न भुङ्क्ते" इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यते इति चेन्न। "देवदत्तो रात्रौ भुङ्क्ते दिवाभुञ्जानत्वे सति पीनत्वात्" इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात्।

गं०—एतावता तत्करणं चतुर्विधमित्यादि मूलोपात्तानां चतुर्णां प्रमाणत्वमुपपाद्य अर्थापत्त्यादीनां अतिरिक्तत्वप्रमाणत्ववादिमीमांसकमतनिराकरणायाऽऽदौ तन्मतमुपन्यस्यति नन्वित्यादिना। अर्थापत्तित्वं जातिविशेषः, अर्थापद्यामीत्यनुभवसिद्धः। अर्थापत्तिशब्दः "अर्थस्याऽऽपत्तिर्यस्मादिति व्युत्पत्त्या प्रमाणपरः। अर्थापत्तिशब्देनाऽन्यथानुपपत्तिज्ञानं "अनुपपत्तिज्ञानं वा"ऽभिधीयते। तदेतत्प्रमाणम्। अन्यथानुपपत्तिर्द्विविधा। श्रुतार्थान्यथानुपपत्तिः। दृष्टार्थान्यथानुपपत्तिश्चेति"। अर्थस्याऽऽपत्तिरिति व्युत्पत्त्या अर्थापत्तिशब्दः प्रमापरः। साऽपि द्विविधा। श्रुतार्थाऽऽपत्तिः। दृष्टार्थाऽऽपत्तिश्च। उपपाद्यज्ञानं करणम्। उपपाद्यं चाऽत्र पीनत्वम्, उपपादकज्ञानं फलम्। उपपादकं रात्रिभोजनम्। येन विना यदनुपपन्नं तस्योपपादकत्वात् यदनुपपन्नं तस्योपपाद्यत्वात्। अर्थापत्तिरपीति।

अपिना प्रत्यक्षादिपरिग्रहः। तथा च यथा प्रत्यक्षादि विलक्षणप्रमितिकरणं तथाऽर्थापत्तिरपीति भावः। **दृष्टे** प्रत्यक्षते ज्ञाते। अनेन दृष्टार्थाऽऽपत्तिः सूचिता। **श्रुते**। शब्दादवगते। अनेन श्रुतार्थाऽऽपत्तिः सूचिता। **पीनत्वाऽन्यथाऽनुपपत्येति**। तादृशानुपपत्तिज्ञानरूपप्रमाणेनेत्यर्थः यथाश्रुते अनुपपत्तिसत्वेऽपि तद्ज्ञानविरहवतः पुंसः कल्पनाऽसंभवेनाऽनुपपत्तेः। अस्यैव विशेषणं **अर्थापत्या** इति। दिवाऽभुञ्जानस्य देवदत्तस्य रात्रिभोजनं बिना पीनत्वमनुपपन्नमिति ज्ञानेनेति यावत्। **रात्रिभोजनं कल्प्यते** इति। दिवाऽभुञ्जानः पीनो देवदत्तो रात्रिभोजीत्यर्थापत्तिः प्रमा जन्यते इत्यर्थः। **पीनत्वादिति**। योगाद्यजन्यपीनत्वादित्यर्थः। **सिद्धत्वादिति**। अनुमितत्वादित्यर्थः यन्नैवं तन्नैवं यथा मासोपवासी तापस इति व्यतिरेकेण दृष्टान्तः। अत्रेदं बोध्यम्। अव्याप्यस्य नोपपाद्यता। अव्यापको नोपपादकः। तथा चोपपादकाभावव्यापकीभूताभावप्रतियोगित्वं उपपाद्यस्येति पर्यवसितम्—तदेव च व्यतिरेकव्याप्तिरूपमिति ध्येयम्।

दी०—शते पञ्चाशदिति संभवोऽप्यनुमानमेव।

"इह वटे यक्षस्तिष्ठति" इत्यैतिह्यमपि अज्ञातमूलप्रवक्तृकः शब्द एव।

चेष्टाऽपि शब्दानुमानद्वारा व्यवहारहेतुरिति न प्रमाणान्तरम्। तस्मात्प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि।

इति दीपिकायां शब्दपरिच्छेदः।

गं०—**अनुमानमेवेति**। न प्रमाणान्तरमिति भावः। अनुमानप्रयोगस्तु अयं पञ्चाशद्वान् शतवत्वादित्याकारकः। **ऐतिह्यमपीति**। **शब्द एव**। शब्दः प्रमाणमेवेत्यर्थः। अज्ञातः मूलं प्रवक्ता यस्य स तथा इत्यर्थः। **चेष्टापि**। शब्दानुमाने एव न तु प्रमाणान्तरम्। **शब्दानुमानद्वारेति**। शब्दस्मृतिद्वारा इत्यर्थः। **व्यवहारहेतुरिति**। द्वित्वादिबोधप्रयोजकम्।

अनुमानद्वारा । अयं एतादृशशब्दविषयकतात्पर्यवान् विलक्षणचेष्टावत्वात् अहमिवेत्यनुमानेन शब्दज्ञाने जाते शाब्दबोध उत्पद्यते इति ।

इति गंगायां शब्दपरिच्छेदः ।

दी०--(अथ) ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतो ग्राह्यं परतो वेति विचार्य्यते ।

गं०—प्रसंगात् प्रमात्वस्य परतोग्राह्यत्वव्यवस्थापयितुमुपक्रमते । ज्ञानानामिति । संस्कारनिष्ठ"तद्वतितत्प्रकारकत्वरूप"प्रमात्वस्याऽतीन्द्रियतया इच्छानिष्ठप्रमात्वस्य परैरपि परतो ग्राह्यत्वाभ्युपगमेनाऽविवादादाह । ज्ञानानामिति । ज्ञानभेदेन प्रमात्वं भिन्नमिति सूचयितुं बहुवचननिर्देशः । निष्ठत्वं षष्ठ्यर्थः । अन्वयश्चाऽस्य तद्वति तत्प्रकारकत्वमित्यनेन । स्वतो ग्राह्यमिति । ज्ञानग्राहकसामग्रीजन्यग्रहविषय इत्यर्थः । परत इति । ग्राह्यमित्यनुपज्यते । अनुमानादिजन्यग्रहविषय इत्यर्थः । विचार्यते इति । निर्णीयते इत्यर्थः । अत्रेदं बोध्यम् । स्वत इत्यस्य स्वस्मात्—स्वकीयादिति चाऽर्थः । तत्र गुरूणां मते ज्ञानं, मिति ' ज्ञान" मातृ "आत्मा" मेय "विषय" एतत्त्रितयविषयकम् । तन्मते चक्षुःसंयोगाद्यनन्तरं "घटमहं जानामीति प्रत्यक्षस्यैवोत्पत्तेः, स्वविषकत्वमेव ज्ञानस्य स्वप्रकाशत्वम्[1] । एवं च व्यवसायस्य स्वप्रकाशात्मकतया स्वेनैव स्वगतप्रामाण्यस्य ग्रहणाद्, भवति प्रामाण्यस्य स्वतोग्राह्यत्वम् । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणतायास्तैरनंगीकारादनुपस्थितस्याऽपि प्रमात्वस्य भानसंभवात् । तथा च स्वत इत्यस्य स्वस्मादित्यर्थः । तथा च स्वस्यैव स्वप्रामाण्यविषयकतया स्वजनकसामग्री एव स्वनिष्ठप्रामाण्यनिश्चायिका ।

---

१ गुरूणां मते ज्ञानस्य स्वप्रकाशत्वं तेषामयमभिप्रायः । ज्ञानस्य तद्गतप्रामाण्यस्य वा ज्ञानान्तरग्राह्यत्वे तादृशज्ञानान्तरस्य तद्गतप्रामाण्यस्य च ग्रहार्थं ज्ञानान्तराऽपेक्षायामनवस्थापत्त्या स्वप्रकाशरूपत्वमावश्यकमिति ।

मिश्रमते तु अयं घट इति "व्यवसायात्मकं" ज्ञानं अनुव्यवसायग्राह्यम्, अनुव्यवसायश्च व्यवसायप्रत्यक्षम्, घटमहं जानामीत्याकारकम्। तज्जनिका सामग्री आत्ममनः संयोगादिकम्, तथाचाऽनुव्यवसायेन व्यवसायनिष्ठं प्रामाण्यं गृह्यते। एतन्मते स्वत इत्यस्य स्वकीयादित्यर्थः। स्वप्रयोज्यादिति यावत्। तथा च व्यवसायजन्यो योऽनुव्यवसायः, तत्सामग्री प्रथम"व्यवसायात्मक"ज्ञाननिष्ठप्रमात्वनिश्चायिका, अनुव्यवसायस्य व्यवसायविषयकत्ववद् व्यवसायनिष्ठप्रामाण्यविषयकत्वाच्चेति।

भट्टमते ज्ञानमतीन्द्रियम्[1], ज्ञानेन ज्ञाततानामकः कश्चिद्धर्मो जन्यते स च धर्मो विषयनिष्ठः "ज्ञातो घट इति प्रतीतिसाक्षिकः" प्रत्यक्षसिद्धः। ज्ञातता[2] च ज्ञानमनुमापयति। अनुमानप्रयोगस्तु इयं ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या घटसमवेतघटत्वप्रकारकज्ञातताात्वात्। या यत्समवेतयत्प्रकारकज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या पटविशेष्यकपटत्वप्रकारकज्ञाततावदिति सामान्यव्याप्तिरिति। एतन्मतेऽपि स्वत इत्यस्य स्वकीयादित्येवाऽर्थः। तथा च स्वजन्या या ज्ञाततालिंगकाऽनुमितिः तत्सामग्री स्वनिष्ठप्रामाण्यनिश्चायिकेति भावः।

दी०—तत्र विप्रतिपत्तिः। ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावद्ज्ञानग्राहकसामग्रीग्राह्यम् न वा। अत्र विधिकोटिः स्वतस्त्वम्। निषेधकोटिः परतस्त्वम्।

गं० तत्र। विचारे। प्रयोजकत्वं सप्तम्यर्थः। विप्रतिपत्तावन्वेति। विप्रतिपत्तिस्वरूपमाह। ज्ञानप्रामाण्यमिति। तद्वतितत्प्रकारकत्वविशिष्टं ज्ञानं प्रपूर्वकमाधातोरर्थः, ल्युट्प्रत्ययश्च प्रयोगसाधुत्वसंपादकः, ष्यञ् प्रत्ययश्च

---

१ आत्मसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति धर्माऽधर्मादेरिव ज्ञानस्यापि तादात्म्यसंबन्धेन प्रतिबन्धकत्वात्। २ ज्ञानजन्यविषयसमवेतपदार्थान्तररूपा इत्यर्थः।

भावार्थकः। एवं च प्रामाण्यमित्यस्य तद्वतितत्प्रकारकज्ञानत्वमर्थः। तत्रापि ज्ञानत्वांशनिवेशो व्यर्थः, प्रयोजनविरहात्। एवं च तद्वतितत्प्रकारकत्वमेवाऽवशिष्टम्। करणार्थकल्युट्प्रत्यये तु प्रमाकरणत्वमित्यर्थः स्यात्, तादृशप्रमाकरणत्वभ्रमनिरासाय ज्ञानपदम्[1], तदपि सावधारणम्, तथा च प्रमाकरणत्वं न ज्ञानमात्रवृत्ति, प्रमाकरणे मनसि व्यभिचारात्, किन्तु तद्वतितत्प्रकारकत्वरूपप्रमात्वमेव ज्ञानमात्रवृत्तीति, ज्ञाननिष्ठप्रमात्वं पक्षः। तद्वति तत्प्रकारकज्ञानत्वमिति यावत्। **तदप्रामाण्याऽग्राहकेति**। तत्पदं पक्षीभूतप्रकृतप्रामाण्याश्रयज्ञानपरम्, तत्राऽप्रामाण्याऽग्राहिकाः "अयं घट इत्याकारकं ज्ञानं अप्रमा इत्याकारकं यत्तादृशप्रमात्वाश्रयविशेष्यकाप्रमात्वप्रकारकं ज्ञानं तदजनिकाः" अथ च यावद् ज्ञानग्राहिकाः "प्रकृतप्रामाण्याश्रयज्ञानग्रहजनिकाः" सामग्र्यः तज्जन्यग्रहविषयो न वेत्यर्थः। तज्जन्यग्रहविषयत्वं विधिकोटिः। तदभावो निषेधकोटिः **स्वतस्त्वमिति**। स्वतस्त्ववादिनो मीमांसकाः गुरुमिश्रभट्टास्त्रयः। परतस्त्ववादिनो नैयायिकाः। गुरुमते तादृशज्ञानविषयकग्रहः प्रथमज्ञानमेव "घटमहं जानामीत्याकारकं" तन्मते ज्ञानस्य स्वप्रकाशरूपत्वात्। मिश्रमते तु अनुव्यवसायात्मकम्, भट्टमते च अनुमितिः। तज्जनिका सामग्री क्रमेण चक्षुःसंयोग-आत्ममनःसंयोग-परामर्शादिकम्। विधिकोटिप्रसिद्धिस्तु तादृशप्रामाण्याश्रयज्ञाने "अयं घट इत्याकारके", तादृशज्ञानविषये घटत्वे-ज्ञानत्वे च।

दी०—अनुमानग्राह्यत्वेन सिद्धसाधनवारणाय यावदिति। 'इदं ज्ञानमप्रमा' इति ज्ञानेन प्रामाण्याग्रहाद्बाधवारणाय अप्रामाण्याग्राहकेति। "इदं ज्ञानमप्रमा" इति अनुव्यवसायनिष्ठप्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न स्यादतः तदिति। तस्मिन् ग्राह्यप्रामाण्याश्रये अप्रामाण्याग्राहकेत्यर्थः। उदाहृतस्थले

---

टि० १ तथा च प्रमाकरणत्वे समभिव्याहृतज्ञानमात्रवृत्तित्वान्वयानुपपत्त्या प्रामाण्यपदे तत्परत्वभ्रमनिरासः।

व्यवसाये अप्रामाण्यग्राहकस्याऽप्यनुव्यवसाये तदग्राहकत्वात् स्वतस्त्वसिद्धिः ।

गं०—सामग्र्यां यावत्त्वनिवेशस्य प्रयोजनमाह । अनुमानग्राह्यत्वेनेति । इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमेत्यनुमितिजनकसामग्र्या अपि निरुक्तज्ञानग्राहकसामग्रीतया तादृशसामग्रीजन्याऽनुमितिरूपग्रहविषयत्वस्योभयवादिसिद्धत्वेन सिद्धसाधनापत्तेरिति भावः । यावत्त्वविशेषणे च प्राथमिकानुव्यवसायसामग्र्या अपि यावदन्तर्गततया तद्ग्राह्यत्वस्य नैयायिकैरनभ्युपगमान्न सिद्धसाधनाऽवकाश इति ध्येयम् । नैयायिकमते च तादृशसामग्रीग्राह्यत्वाभावसाधने बाधवारणायेत्यपि बोध्यम् ।

इदं ज्ञानमिति । रजतविशेष्यकरजतत्वप्रकारकज्ञानमित्यर्थः । इति ज्ञानेनेति । इति ज्ञानग्राहकेणेत्यर्थः । इत्याकारकज्ञानग्रहजनकसामग्र्या इति यावत् प्रमाण्याऽग्रहादिति । प्रमात्वग्रहाऽनुपपत्तेरित्यर्थः । तथा चेदं ज्ञानमप्रमेत्याकारकरजतविशेष्यकरजतत्वप्रकारकज्ञानविशेष्यकाऽप्रमात्वप्रकारकज्ञानजनकसामग्र्या यावदन्तर्गततया प्रतिबन्धकवशेन प्रामाण्याऽग्रहात् "स्वतस्त्वस्य" बाधवारणाय अप्राण्याऽग्राहकेति विशेषणमिति भावः । अप्रामाण्याऽग्राहकेतीति । तथा च तादृशसामग्र्याः साध्यकोटिप्रविष्टतया प्रामाण्यस्याग्रहेऽपि न बाध इति भावः ।

इदं ज्ञानमिति । शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानमित्यर्थः । इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्येति । इत्याकारको य इदं ज्ञानमप्रमेत्यनुव्यवसायः तन्निष्ठनिरुक्तप्रामाण्यप्रकारको यो ग्रहः तज्जनकचक्षुःसन्निकर्षादिघटितकारणकलापस्येत्यर्थः । अप्रामाण्याऽग्राहकत्वाभावादिति । व्यवसायनिष्ठाऽप्रामाण्यग्राहकत्वेनेत्यादिः । स्वतस्त्वं न स्यादिति । अनुव्यवसायनिष्ठनिरुक्तप्रमात्वस्य स्वतो ग्राह्यत्वानुपपत्तिरित्यर्थः । तदिति लुप्तसप्तमीकम् तदग्राहकत्वात् अप्रामाण्याग्राहकत्वात् स्वतस्त्वसिद्धि-

रिति । तथा च तत्पदस्य स्वाश्रयपरतया स्वाश्रयविशेष्यकाप्रमात्व-प्रकारकग्रहाजनकस्वाश्रयग्राहकसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकत्वमेव स्वनिष्ठस्वतस्त्वमिति फलितम् । एवं च निरुक्तस्थले व्यवसायस्य प्रमात्वरूपस्वाश्रयत्वाभावात् अनुव्यवसायस्यैव स्वाश्रयतया तद्ग्राहक सामग्र्याः स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानाजनकतयोदाहृतस्थले तादृशसामग्र्याः प्रसिद्धत्वात् तादृशसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकत्व-रूपस्वतस्त्वस्यानुव्यवसायनिष्ठप्रामाण्ये सत्त्वात् नोक्तानुपपत्तिरिति भावः । अत्र प्रत्यक्षमात्रस्य ज्ञानज्ञातृज्ञेयरूपत्रितयविषयकत्ववादिनां प्राभाकराणां मते प्रत्यक्षमात्रस्यानुव्यवसायरूपत्वेन प्रमाणत्वानुमितिजनकसामग्र्यामिव विषयचक्षुस्संयोगात्ममनस्संयोगघटितसामग्र्यामपि स्वाश्रयग्राहकसामग्री-त्वसत्त्वात्तत्र स्वग्राहकसामग्रीत्वरूपव्यापकस्यापि सत्त्वेन प्रामाण्ये तन्मत-रीत्या विधिकोटिप्रसिद्धिः, मुरारिमिश्रमते अनुव्यवसायस्य व्यवसायविषय-कत्ववत् तन्निष्ठप्रामाण्यविषयकत्वस्यापि सत्त्वेन चक्षुस्संयोगालोकसंयोगाद्य-घटितात्ममनस्संयोगघटितसामग्र्यामपि स्वाश्रयग्राहकसामग्रीत्वसत्त्वेन तत्र स्वग्राहकसामग्रीत्वरूपव्यापकस्यापि सत्त्वात् तन्मतरीत्या विधिकोटि-प्रसिद्धिः । भट्टमते ज्ञानमतीन्द्रियं तज्जन्यज्ञातततयानुमेयम् । ज्ञातता तु ज्ञानवत् सविषया घटो ज्ञात इत्याकारकप्रत्यक्षसिद्धा समवायेन स्वरूप-संबन्धेन वा विषयवृत्तिः । एवं च घटवृत्तिज्ञातता घटत्वप्रकारकघटविशेष्य-कज्ञानजन्या जन्यतासंबन्धेन तादृशज्ञानवती वा घटवृत्तिघटत्वप्रकारक-ज्ञाततात्वात् यन्नैवं तन्नैवं यथा पटनिष्ठज्ञाततेत्यादिव्यतिरेक्यनुमानेन इदानींतनघटवृत्तिज्ञाततापक्षकनिरुक्तसाध्यकनिरुक्तहेतुकपूर्वकालीनघटवृत्ति-ज्ञातताहृष्टान्तघटितान्वय्यनुमानेन वा ज्ञानवत् तन्निष्ठप्रामाण्यस्याप्यनुमिति-संभवात् । तथा च ज्ञाततापक्षकानुमितिजनकसामग्र्यामपि तन्मते स्वाश्रय-ग्राहकसामग्रीत्वसत्त्वेन तत्र स्वग्राहकसामग्रीत्वरूपव्यापकस्यापि सत्त्वा-त्तत्र भट्टमतरीत्या विधिकोटिप्रसिद्धिर्बोध्या ।

दी०—ननु स्वत एव प्रामाण्यं गृह्यते, "घटमहं जानामि"

इत्यनुव्यवसायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात् व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्। पुरोवर्त्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वादिति चेत्, न। स्वतःप्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा' इत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात्। अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्। तस्मात् स्वतोग्राह्यत्वाभावात् परतो ग्राह्यत्वम्। तथाहि—प्रथमं जलज्ञानान्तरं प्रवृत्तौ सत्यां जललाभे सति "पूर्वोत्पन्नं ज्ञानं प्रमा" समर्थप्रवृत्तिजनकत्वात् 'यन्नैवं तन्नैवं यथा अप्रमा' इति व्यतिरेकिणा प्रमात्वं निश्चीयते। द्वितीयादि ज्ञानेषु पूर्वज्ञानदृष्टान्तत्वेन तत्सजातीयत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते।

दी०—इत्थं विप्रतिपत्तिं प्रदर्श्य मीमांसकमतं दूषयितुमुपन्यस्यति। नन्विति। स्वत एव प्रामाण्यं गृह्यते इति। प्रामाण्यं स्वतो गृह्यत एवेति योजना। प्रामाण्यं स्वतोग्राह्यमेवेत्यर्थः। घटत्वादिमति घटत्वादिप्रकारकत्वरूपं प्रामाण्यं ज्ञानग्राहकसामग्रीग्राह्यमेवेति यावत्। स्वतोग्राह्यत्वमुपपादयति। घटमहं जानामीत्यनुव्यवसायेनेति। इदं च मिश्रमताभिप्रायेण। मतत्रयसाधारण्येन तु प्राथमिकज्ञानग्रहेणेति यावत् तत्संबन्धस्यापीति। घटघटत्वयोः समवायरूपसंबन्धस्यापीत्यर्थः। विषयीकरणादिति। तथा च स्वनिरूपितविषयताश्रययावद्विषयकत्वस्य स्वनिष्ठविषयताकप्रत्यक्षत्वव्यापकत्वादिति भावः।

सिद्धान्तयति। स्वतः प्रामाण्यग्रहे इति। प्रामाण्यस्य निरुक्तस्वतोग्राह्यत्वस्वीकारे इत्यर्थः। जलज्ञानमित्यादि। अनभ्यासदशायां जलज्ञानं प्रमा न वेति संशयो न स्यादिति योजना। अनभ्यासदशायां—जलज्ञानं प्रमेत्याकारकजलज्ञानविशेष्यकप्रमात्वप्रकारकनिश्चयाभावदशायाम्। जलज्ञानं प्रमा न वेति। जलज्ञानानन्तरजातजलज्ञानवानहमिति ज्ञानानन्तरमित्यादिः। इति संशयो न स्यादिति। इत्याकारकसंशयो

नोत्पद्यतेत्यर्थः । न चेष्टापत्तिः । अनुभवविरोधादिति भावः । तत्र हेतुमाह । अनुव्यवसायेनेति ।

न च प्राभाकरमते घटादिज्ञानस्यैव तद्ज्ञानविषयकत्वात् तद्ज्ञाननिष्ठ-प्रामाण्यावगाहित्वावश्यकतया संशयानुपपत्तिसत्वेऽपि भाट्टादिमते प्राथमिक-तादृशज्ञानस्य तद्ज्ञानाविषयकतया प्रमात्वविषयकत्वाभावात् प्राथमिकतादृ-शज्ञानोत्तरं तन्मते संशयो नाऽनुपपन्न इति वाच्यम् । तथा सति धर्मिज्ञा-नाऽभावात्संशयाऽनुपपत्तितादवस्थ्यात् । संशये धर्मितावच्छेदकप्रकारकनि-श्चयहेतुतायाः क्लृप्तत्वादिति । तस्मादिति । संशयानुपपत्तिरूपबाधकसत्वा-दित्यर्थः । इदं च स्वतोग्राह्यत्वाभावे हेतुः । स्वतोग्राह्यत्वाभावादिति । निरुक्तस्वतोग्राह्यत्वस्य वक्तुमशक्यत्वादित्यर्थः । इदं च परतोग्राह्यत्वे हेतुः । परतोग्राह्यत्वमिति । अनुमानग्राह्यत्वमित्यर्थः । अनुमानप्रकारमाह । तथाहीत्यादिना । प्रथमं जलज्ञानानन्तरमिति । प्राथमिकजलज्ञानान-न्तरमित्यर्थः । यत्र प्रथमं जलज्ञानं ततः जलज्ञानवानहमित्यनुव्यवसायः—तत इदं ज्ञानं प्रमा न वेति संशयः । अनन्तरं जले इष्टसाधनताज्ञानाधीनेच्छा तदनन्तरमिति यावत् । प्रवृत्तौ सत्यां जललाभे सतीति । प्रवृत्तिसम-कालं जलप्राप्तौ सत्यामित्यर्थः । पूर्वोत्पन्नजलज्ञानमिति । प्राथमिकजल-ज्ञानमित्यर्थः । प्रमेति । जलत्ववतिजलत्वप्रकारकत्वरूपप्रमात्ववदित्यर्थः । सफलप्रवृत्तिजनकत्वादिति । इच्छाद्वारा जलत्ववतिजलत्वप्रकारकप्रवृ-त्तिप्रयोजकत्वादित्यर्थः तत्सजातीयत्वलिंगेनेति । समर्थप्रवृत्तिजनकत्वे-नेति यावत् ।

दी०—प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वम् । प्रमाऽसाधार-णकारणं गुणः, अप्रमाऽसाधारणकारणं दोषः । तत्र प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः, अनुमितौ व्यापकवति व्याप्य-ज्ञानम् । उपमितौ यथार्थसादृश्यज्ञानम् । शाब्दज्ञाने यथार्थयोग्यता-ज्ञानम् इत्याद्यूहनीयम् । पुरोवर्त्तिनि प्रकाराभावस्यानुव्यवसायेना-

नुपस्थितत्वात् अप्रमात्वं परत एव गृह्यते। पित्तादिदोषजन्यत्वमुत्पत्तौ परतस्त्वम्।

गं०—प्रमोत्पत्तेः परतस्त्वमुपपादयति प्रमाया इति। प्रमाया उत्पत्तौ गुणजन्यत्वं परतस्त्वमिति योजना। परतस्त्वमिति। परत्वमेवेत्यर्थः। स्वीकार्यमिति शेषः। अनुपस्थितत्वादिति अविषयीकरणादित्यर्थः। अप्रमात्वमिति। तदभाववति तत्प्रकारकत्वरूपमप्रमात्वमित्यर्थः। परत एव गृह्यते इति। तथाहि। शुक्तिविशेष्यकरजतत्वभ्रमानन्तरं इष्टसाधनताज्ञानादिक्रमेण प्रवृत्तौ सत्यां रजताऽलाभे पूर्वोत्पन्नं रजतज्ञानमप्रमा विफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमा इति व्यतिरेकिणा निश्चीयते इति। अप्रमात्वस्य परतो ग्राह्यत्वमुपपाद्याऽप्रमोत्पत्तेरपि परतस्त्वमुपपादयति। पित्तादीति। आदिना मण्डूकवसाञ्जन परिग्रहः।

दी०—ननु सर्वेषां ज्ञानानां यथार्थत्वात् अयथार्थज्ञानमेव नास्तीति। न च "शुक्ताविदं रजतम्' इति ज्ञानात् प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम्। रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसंभवात्। उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदं रजतम्" इत्यादौ अतिप्रसङ्गाभावादिति चेत् न। सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात्।

गं०—प्राभाकरः शंकते। नन्विति। सर्वेषां ज्ञानानामिति। घटत्वादिधर्मप्रकारकज्ञानमात्रस्येत्यर्थः। यथार्थत्वादिति। घटत्वादिमद्विशेष्यताकत्वादित्यर्थः। अयथार्थज्ञानमेव नास्तीति। विप्रतिपत्तिस्तु तदभाववद्विशेष्यकतत्प्रकारकत्वरूपाऽयथार्थत्वं ज्ञानवृत्ति न वेत्याकारिका बोध्या। तेन न सिद्ध्यसिद्धिभ्यां व्याघातः। इच्छादौ विधिकोटिप्रसिद्धिर्बोध्या। शंकते। नचेति। शुक्ताविदं रजतमिति ज्ञानादिति। अत्रेदं

रजतमिति ज्ञानमिदन्त्वेन शुक्तिविशेष्यकमेव, न तु रजतविशेष्यकमिति स्फुटीकरणाय शुक्तावित्युक्तम्। प्रवृत्तिदर्शनादिति। प्रवृत्तेरनुभवसिद्धत्वादित्यर्थः। अन्यथाख्यातिरिति। अयथार्थज्ञानमित्यर्थः। स्वीकार्येति शेषः। तथा च विशेष्यतासंबन्धेन तद्धर्मप्रकारकप्रवृत्तौ विशेष्यतासंबन्धेन तद्धर्मप्रकारकेच्छायाः, तेन संबन्धेन तद्धर्मप्रकारकेच्छायां तेन संबन्धेन तद्धर्मप्रकारकज्ञानस्य च हेतुत्वमिति रीत्या कार्यकारणभावस्य सर्वमतसिद्धत्वेन तव मते रङ्गविशेष्यकरजतत्वप्रकारकज्ञानाऽप्रसिध्या कारणाभावेन रजतार्थिनो रङ्गे प्रवृत्त्यनुपपत्तिरिति भावः। प्रभाकरमते इदं, रजतमितिज्ञानद्वयं—इदमिति प्रत्यक्षात्मकम्, रजतमिति स्मृत्यात्मकम्। अत एव यथार्थम्। उभयमेव प्रवृत्तौ कारणमित्याह। रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेवेति। एवकारोऽप्यर्थकः। प्रवृत्तिसंभवादिति। पुरोवर्त्तिविशेष्यकरजतत्वप्रकारकप्रवृत्तेरनुभवसिद्धत्वादित्यर्थः। तथा च ज्ञानद्वयात्प्रवृत्त्युपपत्तेः, अन्यथाख्यातिर्न स्वीकार्येति शेषः। नन्वेवं सति नेदं रजतमिति ज्ञानात्प्रवृत्त्यापत्तिः, निरुक्तकारणसत्वादत आह। उपस्थितेष्टभेदाऽग्रहस्यैवेति। रजतभेदाऽग्रहस्यैवेत्यर्थः। प्रवर्त्तकत्वेन। प्रवृत्तिजनकत्वेन। इत्यादौ। इत्यादिज्ञानोत्तरमित्यर्थः। अतिप्रसंगाभावादिति। प्रवृत्त्यापत्त्यसंभवादित्यर्थः।

**अयथार्थानुभवस्त्रिविधः, संशय-विपर्यय-तर्क-भेदात्।**

न्या०—यथार्थाऽनुभवं निरूप्याऽयथार्थाऽनुभवं विभजते। संशयेत्यादिना।

दी०—अयथार्थानुभवं विभजते अयथार्थ इति, स्वप्नस्य मानसविपर्ययरूपत्वात् न त्रैविध्यविरोधः।

गं०—यथार्थाऽनुभवं निरूप्येति। यथार्थानुभवविषयकनिरूपणध्वंसकालीनाऽयथार्थानुभवत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृति-

मान् मूलकार इति बोधः। स्वप्नाऽनध्यवसाययोरन्तर्भावमाह। स्वप्नस्येति। तथा च विपर्ययेऽन्तर्भाव इत्यर्थः। यद्यपि प्रदेशविशेषावस्थितमनःसंयोगः स्वप्नः, एवं च संयोगरूपस्य तस्य न विपर्ययेऽन्तर्भावयितुं शक्यते, तथापि तादृशसंयोगाऽसमवायिकारणकज्ञाने भाक्ततयाऽन्तर्भाव इति ध्येयम्। एवं किंस्विदित्याकारकाऽनवध्यवसायस्याऽपि विपर्ययेऽन्तर्भाव इत्यपि बोध्यम्।

**एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः। यथा स्थाणुर्वा पुरुषोवेति।**

न्या०—एकेति। एकधर्मावच्छिन्नविशेष्यकभावाऽभावप्रकारकज्ञानं संशय इत्यर्थः। भावद्वयकोटिकसंशयप्रसिद्धेः स्थाणुर्वेत्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्व-पुरुषत्वाभावकोटिक एव संशयः।

दी०—संशयलक्षणमाह एकेति घटपटौ इति समूहालंबनेऽतिव्याप्तिवारणाय एकेति। घटो द्रव्यमित्यादौ अतिव्याप्तिवारणाय विरुद्धेति। घटत्वविरुद्धपटत्ववानित्यत्र अतिव्याप्तिवारणाय नानेति।

गं०—मूले। एकस्मिन्निति। सप्तम्यर्थो विशेष्यत्वम् धर्मिपदं मुख्यविशेष्यतालाभार्थम्। विरुद्धेति। विरुद्धाः परस्पराऽसमानाधिकरणाः ये धर्माः तेषां वैशिष्ट्यं संबन्धः। तस्य ज्ञानं विषयत्वं षष्ठ्यर्थः। तथा चैकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मप्रकारताशालिज्ञानत्वमिति यावत्। अत्र नानाधर्मपदं भावाऽभावोभयपरम्। अतएवोक्तं न्यायबोधिन्यां भावद्वयकोटिकसंशयाऽप्रसिद्धेरिति। मूले। स्थाणुर्वा पुरुषो वेति। इत्याकारक इत्यर्थः। स्थाणुत्वस्थाणुत्वाभावकोटिकः स्थाणुर्वेत्येकः संशयः। पुरुषत्वपुरुषत्वाभावकोटिकः पुरुषो वेत्याकारकोऽपरः संशयः। अथवा कोटिचतुष्टयविषयत्वं संशये स्वीक्रियते न तु भावद्वयमात्रकोटिक इति ध्येयम्।

अयं स्थाणुर्वा पुरुषो वा, अयं स्थाणुः पुरुषश्चेति संशयसमुच्चययोर्वैलक्षण्याय संशये कोटित्वाख्यविषयता स्वीक्रियते । अथवा समुच्चये विशेष्यता विशेष्यभेदेन भिन्ना, संशये उभयप्रकारतानिरूपिताविशेष्यतैका, परन्तु वन्हिप्रकारतानिरूपितविशेष्यतायाः वन्ह्यभावप्रकारतानिरूपितविशेष्यताया ऐक्येपि तयोरवच्छेद्याऽवच्छेदकभावः स्वीक्रियते ।

संशये साधारणधर्मवद्धर्मिज्ञानं असाधारणधर्मवद्धर्मिज्ञानं विप्रतिपत्तिश्च कारणम् । यथा उच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वा स्थाणुर्नवेति संशयं करोति । यथा वा शब्दत्वस्य नित्याऽनित्यव्यावृत्तत्वं गृहीत्वा शब्दो नित्यो नवेति सशयं करोति । विप्रतिपत्तिश्च शब्दात्मिका । एकेनोक्तं शब्दो नित्य इति अपरेण तु शब्दोऽनित्य इति । तत्र मध्यस्थस्य संशयो भवत्येवेति ।

**मिथ्याज्ञानं विपर्ययः, यथा शुक्तौ इदं रजतमिति ।**

न्या०—मिथ्याज्ञानमिति । अयथार्थज्ञानमित्यर्थः विपर्ययो नाम भ्रमः ।

दी०—विपर्ययलक्षणमाह मिथ्येति तदभाववति तत्प्रकारकनिश्चय इत्यर्थः ।

गं०—तदभाववतीति । इदं च प्रमायामतिव्याप्तिवारणाय । संशये इच्छायां चाऽतिव्याप्तिवारणाय निश्चयपदं निश्चयत्वं च संशयान्यज्ञानत्वम् । तदभावाऽप्रकारकत्वे सति तत्प्रकारकज्ञानत्वमिति यावत् । अत्र यद्वक्तव्यं तदुक्तं प्राक् । यथा शुक्तौ इदं रजतमिति । इत्याकारकनिश्चय इत्यर्थः ।

ननु रजतत्वप्रकारकप्रत्यक्षकारणीभूतस्य इन्द्रियसन्निकर्षस्य संयुक्तसमवायस्य विरहेण कथं शुक्तौ इदं रजतमित्याकारकप्रत्यक्षं, रङ्गस्य चक्षुःसंयुक्तत्वेऽपि रजतत्वे तत्समवायाऽभावादिति चेन्न । लौकिकसन्निकर्षविरहेऽपि अलौकिकसन्निकर्षस्य ज्ञानलक्षणाया स्वीकारादिति ध्येयम् ।

**व्याप्यारोपेण व्यापकारोपस्तर्कः, । यथा यदि वन्हिर्नस्यात्तर्हि धूमोऽपि न स्यादिति ।**

न्या०—व्याप्यारोपेणेति । तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम्, अन्यथा इष्टापत्तिदोषेण तर्कानुत्पत्तेः ।

दी०—तर्कलक्षणमाह । व्याप्येति । यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वात् भेदेन कीर्तनम् ।

गं०—मूले । व्याप्यारोपेणेति । आरोपः आहार्यज्ञानम् । तच्च बाधकालीनेच्छाजन्यज्ञानम् । तृतीयार्थो जन्यत्वम् । तथा च व्याप्यविषयकाऽऽहार्यज्ञानजन्यव्यापकविषयकाऽहार्यज्ञानत्वं तर्कलक्षणम् । आपाद्यव्याप्य-आपादकवत्तानिश्चयः तर्के कारणम् । वन्ह्यभावः आपादकः आपाद्यो धूमाभावः । तथा च धूमाभावव्याप्यवन्ह्यभाववत्तानिश्चयो "मूलोक्ततर्के" कारणम् । वस्तुत आपाद्यव्यतिरेकनिश्चय एव तर्के हेतुरिति ध्येयम् । न्यायबोधिन्यां व्याप्यस्य आपादकस्य । व्यापकस्य आपाद्यस्य । तर्कस्य विपर्ययान्तर्भूतत्वात् त्रैविध्यकथनमसंगतमित्याक्षिपति । यद्यपीत्यादिना । प्रमाणाऽनुग्राहकत्वादिति । व्याप्तिज्ञानप्रतिबन्धकव्यभिचारशंकानिवर्त्तकत्वादित्यर्थः । संशयनिश्चयसाधारणव्यभिचारज्ञानत्वेन व्याप्तिबुद्धौ प्रतिबन्धकतया "धूमोऽस्तु वन्हिर्मास्तु इति" व्यभिचारशंकायाः व्याप्तिबुद्धौ प्रतिबन्धकत्वे तन्निवृत्त्यर्थं तर्कोऽपेक्षणीय इति भावः । स चाऽयं पञ्चविधः । आत्माश्रय-अन्योन्याश्रय-चक्रक-अनवस्था-तदन्यबाधितार्थप्रसंगभेदात् ।

**स्मृतिरपि द्विधा । यथार्थाऽयथार्था च । प्रमाजन्या यथार्था । अप्रमाजन्या अयथार्था ।**

दी०—स्मृतिं विभजते स्मृतिरिति ।

गं०—स्मृतिलक्षणं प्रागुक्तं वेदितव्यम् । प्रमाजन्या यथार्थाऽनु-

भवजन्या । तथा च तद्वति तत्प्रकारकस्मृतित्वं यथार्थस्मृतेर्लक्षणम् । अप्रमाजन्या अयथार्थाऽनुभवजन्या । तथा च तदभाववति तत्प्रकारकस्मृतित्वं अयथार्थस्मृतेर्लक्षणम् ।

## सर्वेषामनुकूलतया वेदनीयं सुखम् ॥

न्या०—सुखं निरूपयति । सर्वेषामिति । इतरेच्छानधीनेच्छाविषयत्वमिति निष्कर्षः । यथाश्रुते घटोऽनुकूल इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्वाद् घटादावतिव्याप्तिरिति । सुखेच्छाधीने भोजनादावतिव्याप्तिवारणाय इतरेच्छाधीनेच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥

दी०—सुखं लक्षयति । सर्वेषामिति । "सुखी अहम्" इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम् । यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् ॥

गं०—मूले सर्वेषामिति । सकलप्राणिनामित्यर्थः । अनुकूलतया । इच्छाविषयतया । वेदनीयमिति । ज्ञायमानमित्यर्थः । सुखमिति । सुखस्वरूपमित्यर्थः । तथा च सकलप्राणिनामभिलषितमेव सुखमिति यावत् । दीपिकायां—सुखी अहमिति । इदमुपलक्षणम् । सुखपदशक्यतावच्छेदकतया सिद्धसुखत्वजातिमत्वमपि लक्षणं बोध्यम् । यथाश्रुतं त्विति । सर्वेषामनुकूलतयेत्यादिकमित्यर्थः स्वरूपकथमिति । अन्यथा अगम्यागमनादिजन्यसुखेऽव्याप्तेः । साधूनां "नपरदारान्गच्छेदिति" तस्य प्रतिकूलतया वेदनीयत्वात् ॥

## प्रतिकूलतया वेदनीयं दुःखम् ॥

न्या०—दुःखं निरूपयति । प्रतिकूलेति । अत्रापीतरद्वेषानधी-

न्द्वेषविषयत्वमितिनिष्कृष्टलक्षणम् । द्वेषविषयत्वमात्रोक्तौ सर्पादावति-व्याप्तिः । तत्रापि द्वेषविषयत्वसत्वादत इतरद्वेषानधीनेति द्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात् सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषा जन्यद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः । फलेच्छा उपायेच्छां प्रति कारणम् । अतः फलेच्छा-वशादुपायेच्छा भवति । एवं फले द्वेषादुपाये द्वेषः ।

गं०—मूले प्रतिकूलतयेति । द्वेषविषयतयेत्यर्थः । अत्रापि सर्वेपा-मित्यनुपपद्यते । अत्रापि दुःखी अहमिति प्रत्यक्षसिद्धदुःखत्वजातिमत्वं दुःख-पदशक्यवच्छेदकतया सिद्धदुःखत्वजातिमत्वं वा दुःख लक्षणं बोध्यम् । यथा-श्रुते विपश्चिविशेषेण विषभक्षणादिजन्यदुःखे प्रतिकूलतया वेदनीयत्वाभावे-नाऽव्याप्तिःस्यादिति ध्येयम् ॥

## इच्छा कामः । क्रोधो द्वेषः । कृतिः प्रयत्नः ।

गं०—मूले । इच्छा काम इति । इच्छाकामयोः पर्यायतासूचनाय । लक्षणन्तु प्रवृत्तेः साक्षादनुकूलत्वम् । ज्ञानवारणाय साक्षादिति । एवमह-मिच्छामीति प्रत्यक्षसिद्धेच्छात्वजातिमत्वमिच्छासामान्यस्य लक्षणम् । इच्छा द्विविधा । फलेच्छा— उपायेच्छा च । फलं तु सुखं दुःखाऽभावश्च । इतरेच्छानधीनेच्छाविषयत्वं फलस्य लक्षणम् । फलमेव पुरुषार्थः । फलविशे-ष्यकेच्छात्वं फलेच्छाया लक्षणम् । फलेच्छां प्रति फलज्ञानं कारणम् । उपाय-विशेष्यकेच्छात्वं उपायेच्छाया लक्षणम् । उपायेच्छां प्रति इष्टसाधनता-ज्ञानं कारणम् । मूले । क्रोधो द्वेष इति । तयोः पर्यायतासूचनाय ! निवृत्तेः साक्षादनुकूलत्वं द्वेषलक्षणम् । ज्ञानवारणाय साक्षादिति । बलवद्-द्विष्टसाधनताज्ञानं द्वेषे कारणम् । एवं च "द्विष्टसाधनताज्ञानजन्यतावच्छे-दक" द्वेषत्वजातिमत्वमपि द्वेषस्य लक्षणम् । द्वेषं प्रतीष्टसाधनताज्ञानं प्रति-बन्धकमिति ध्येयम् । मूले । कृतिः प्रयत्न इति । तथा च कृतित्वजाति-

त्वं प्रयत्नस्य लक्षणम् । प्रयत्नस्त्रिविधः । प्रवृत्तिनिवृत्तिजीवनयोनियत्न-भेदात् । "प्रवृत्तोस्मीतिप्रतीतिसिद्ध—" प्रवृत्तित्वजातिमत्वं प्रवृत्तेर्लक्षणम् । चिकीर्षा कृतिसाध्यताज्ञानं इष्टसाधनताज्ञानं उपादानप्रत्यक्षं च कारणम् । निवृत्तौ द्वेषः कारणम् । जीवनयोनियत्नस्तु प्राणपंचकसंचारे कारणम्, अतीन्द्रियश्च ।

## विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः ।

न्या०—धर्माऽधर्मौ निरूपयति । विहितेति । वेदविहितेत्यर्थः । निषिद्धेति । वेदनिषिद्धेत्यर्थः ।

गां०—मूले । विहितकर्मजन्येति । वेदविहितं यत्कर्म तज्जन्येत्यर्थः । कर्तव्यतया श्रुतिचोदितकर्मजन्येति यावत् । इदं च धर्मकारणप्रदर्शनपरम् । लक्षणं तु धर्मत्वजातित्वम् । सुखत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक-तया धर्मत्वजातिसिद्धिर्बोध्या । मूले । निषिद्धकर्मजन्येति । वेदनिषिद्धं यत्कर्म तज्जन्येत्यर्थः । अकर्तव्यत्वेन श्रुतिचोदितकर्मजन्य एवेति यावत् । लक्षणं तु अधर्मत्वजातिमत्वम्, अधर्मत्वजातिसिद्धिस्तु दुःखत्वावच्छिन्न-जन्यतानिरूपितकारणतावच्छेदकतया बोध्या । अदृष्टत्वन्तु न जातिरिति ध्येयम् ।

ननु यागादिकर्मैव स्वर्गादिहेतुरस्तु किमदृष्टस्वीकारणेति चेन्न । यागा-दिकं फलकालपर्यन्तस्थायिस्वजन्यफलानुकूलव्यापारवान् तावत्कालमस्थायित्वे सति जनकत्वात् अनुभववदित्यनुमानेनाऽदृष्टसिद्धेः । नचाऽप्रयोजकत्वम् । यागो यदि चिरध्वस्तत्वे सति सव्यापारो न स्यात्तदा स्वर्गकारणं न स्याद् यदिति विपक्षबाधकतर्कसत्वात् । न च यागध्वंस एव व्यापारोऽस्तु किमदृष्टेनेति वाच्यम् । क्रियाकलापात्मकयागस्य ध्वंसानामानन्त्येन लाघवादे-वाऽदृष्टसिद्धेः । नचाऽत्र क्रियाणां युगपद्विनाशः, येनैकोध्वंसः स्यात् । न च चरमक्रियाध्वंसस्तथा । पूर्वपूर्वक्रियाणामानर्थक्यापत्तेः । तन्मात्रानुष्ठानेऽपि फलापत्तेश्च । किं च गंगास्नानादेः फलजनकतायां स्नानध्वंसस्य व्यापारत्वं

वाच्यम्, स्नानं च सर्वाङ्गजलसंयोगः, तेषामानन्त्यादनन्तध्वंसानां हेतुत्व-कल्पने गौरवम्। किं च कर्मनाशाजलस्पर्शादिना धर्मनाशोऽप्येवं सति नोपपद्येत ध्वंसस्याऽविनाशित्वात्।

किं च ध्वंसे वैजात्याभावेन कार्यवैजात्यानुपपत्तिः, तथा च कार्यवैजात्य-स्य कारणवैजात्यप्रयोज्यतया विजातीयकारणानुमानम्। वस्तुतः प्रतियोगि-ध्वंसयोरेकत्र कारणत्वं नास्त्येव। तथा च स्वर्गो न यागध्वंसजन्यः याग-जन्यत्वाद् घटजन्यं जलाहरणं न घटध्वंसजन्यमिति। किं च ध्वंसस्य कारणत्वे यागस्य प्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगिन एव कारणत्वे यागस्य प्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगिन एव तत्त्वात्। अत एव "ध्वंसत्वेनाऽपि हेतुत्वे प्रतियोगी न कारणमिति व्याप्ति-रेव व्यभिचाराऽभावात्" इति शब्दमणिटिप्पण्यां रुचिदत्तेनोक्तमित्यलम्।

**बुद्ध्यादयोऽष्टौ आत्ममात्रविशेषगुणाः। बुद्धी-च्छाप्रयत्ना नित्या अनित्याश्च। नित्या ईश्वरस्य। अनित्या जीवस्य।**

न्या०—बुद्ध्यादयोष्टाविति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्न-धर्माऽधर्माः इत्यर्थः।

शं०—आत्ममात्रविशेषगुणा इति। आत्मसमवेतविशेषगुणा इत्यर्थः। बुद्धीच्छाप्रयत्नानां विभागमाह। नित्या अनित्याश्चेति। नित्या-ईश्वरस्येति। नित्याः ईश्वरसमवेता इत्यर्थः। अत्र प्रयत्ननिरूपणानन्तरं तेषां विभागमकृत्वाऽदृष्टनिरूपणानन्तरं विभागकरणे मूलं मृग्यमिति।

**संस्कारस्त्रिविधः। वेगो-भावना स्थितिस्थापक-श्चेति। वेगः पृथिव्यादिचतुष्टयमनोमात्रवृत्तिः। अ-नुभवजन्या स्मृतिहेतुर्भावना। आत्ममात्रवृत्तिः।**

न्या०—संस्कारं विभजते। संस्कार इति। भावनां लक्षयति।

अनुभवेति । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । अत्राऽनुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिः, आत्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वात्, अत स्तदुपादानम् । आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वेनाऽनुभवध्वंसस्याप्यनुभवजन्यत्वादतः स्मृतिहेतुत्वोपादानम् । अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः ।

दी०—संस्कारं विभजते । संस्कार इति । संस्कारत्वजातिमान् संस्कारः । वेगस्याश्रयमाह । वेग इति । वेगत्वजातिमान् वेगः ।

गं०—संस्कारत्वजातिमत्वं संस्कारस्य लक्षणम् । संस्कारपदशक्यतावच्छेदकतया संस्कारत्वजातिसिद्धिर्बोध्या । प्रत्यक्षसिद्धवेगत्वजातिमत्वं वेगस्य लक्षणम् । वेगो द्विविधः, कर्मज वेगजभेदात् ।

भावना हि अनुभवेन जन्यते, स्मृतिं जनयति । अतोऽनुभवजन्यत्वे सति स्मृति हेतुत्वस्य भावनायां सत्वाल्लक्षणसमन्वयः । मूले । स्मृतिहेतुरिति । इदमुपलक्षणम् । प्रत्यभिज्ञाहेतुरित्यपि बोध्यम् । भावनां प्रति उपेक्षान्यनिश्चयः कारणम् । न चाऽनुभव एव स्मृतिं प्रति कारणमस्तु किं भावनाकल्पनेनेति वाच्यम् । विना व्यापारं पूर्वानुभवस्य स्मरणादिजननाऽसामर्थ्यात्, स्व-स्वव्यापाराऽन्यतराभावे कारणत्वाऽसंभवात्, कार्याव्यवहितप्राक्क्षणवृत्ति स्व स्वव्यापाराऽन्यतरकत्वस्यैव कारणतात्मकत्वात् । न चाऽनुभवध्वंस एव व्यापारोऽस्त्विति वाच्यम् । प्रतियोगिध्वंसयोरेकत्राऽजनकत्वात् । अनुभवस्य स्मृतिं प्रति प्रतिबन्धकत्वापत्तेश्च, कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकतापदार्थत्वात् । वस्तुतोऽपूर्वसाधकयुक्त्या संस्कारसिद्धिर्निराबाधैवेति ध्येयम् ।

न्या०—ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा, यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानं कारणम्। दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकबुद्धिः, तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापतितम्। दण्डप्रकारकबुद्धिः दण्डी पुरुष इत्याकारकबुद्धिस्तत्र दण्डज्ञानं कारणम्, नहि दण्डमजानानः पुमान् दण्डीपुरुष इति प्रत्येति एवं च यत्रायं दण्ड इति प्रत्यक्षं जातं तदनन्तरं दण्डीपुरुष इत्याकारकप्रत्यक्षमुत्पन्नं तत्र दण्डी पुरुष इत्याकारकप्रत्यक्षेऽतिव्याप्तिः। तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं जनिष्यमाणे दण्डीपुरुष इत्याकारकस्मरणे कारणं च, स्मृतिं प्रति अनुभवस्य कारणत्वात्, तथा चाऽनुभवजन्यत्वे सति स्मृतिहेतुत्वरूपभावनालक्षणस्य यथोक्तदण्डी पुरुष इत्याकारकानुभवे विद्यमानत्वादतिव्याप्तिरितिचेद्। अत्र ब्रूमः। अनुभवजन्यत्वं हि अनुभवनिष्ठकारणतानिरूपितकार्यताश्रयत्वम्, तत्र कारणतायामनुभवत्वावच्छिन्नत्वं निवेश्यते, तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वमनुभवजन्यत्वमिति फलितम्, अतोनोक्तातिव्याप्तिः, तथा हि दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपिता दण्डज्ञाननिष्ठा या कारणता तस्यां न दण्डानुभवत्वमवच्छेदकं, दण्डानुभवादिवद्दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः, अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति अनुभवस्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात्, तथा चाऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः। भावनायां तु लक्षणमिदं वर्त्तते। तथा हि। अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रति अनु-

भवस्याऽनुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपिता-नुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम्, अतोऽनुभवत्वावच्छिन्न कारणतानिरूपितकार्यताश्रयत्वं भावनायां वर्त्तते इति नासंभवः।

नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम्, तद्धि अनुभवध्वंसेऽति-व्याप्तिवारणाय प्रागुपात्तम्, न हि यथोक्तानुभवजन्यत्वविवक्षायां-मनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते। तथा हि। ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेः तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः। तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च नत्वनुभव-त्वमपीत्यनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवज-न्यत्वविरहेणैवाऽतिव्याप्तिवारणसंभवात्कृतं स्मृतिहेतुत्वविशेषणेनेति-चेन्न। स्मृतावतिव्याप्तिवारणायैव तदुपादानात्। तथा हि। स्मृतिं प्रति अनुभव एव कारणं न तु स्मृतिरपि, अतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं न तु घटज्ञानत्वेन, तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठाकारणता तस्यां घटानुभवत्वमवच्छेदकम्, तेनाऽनुभवत्वावच्छिन्नकारणतानि-रूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिवारणाय स्मृति-हेतुत्वमुक्तम्, न हि स्मृतिः स्मृतिहेतुः अतो न तत्रातिव्याप्तिरित्यल-मनल्पजल्पनेन।

दी०—भावनां लक्षयति। अनुभवेति। अनुभवध्वंसेऽतिव्या-प्तिवारणाय स्मृतीति। आत्मादौ अतिव्याप्तिवारणायाऽनुभवेति। स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम्।

गं०—स्मृतेरपीति । अपिना अनुभवपरिग्रहः । तथा चैतन्मते अनुभवजन्या इत्यस्य ज्ञानजन्या इत्यर्थो बोध्यः । नवीनैरुक्तमिति । तेषामयमाशयः । स्मृतिं प्रति अनुभवः अनुभवत्वेन न कारणम्, अपि तु ज्ञानत्वेनैव, अनुभवत्वेन कारणत्वे स्मरणानन्तरं स्मरणं न स्यात्, संस्कारस्य फलनाश्यतया पूर्वस्मरणेन विनाशात् । ज्ञानत्वेन कारणत्वे तु पूर्वस्मृतेरपि स्वजन्यसंस्कारद्वारा उत्तरस्मृतौ कारणतया नोक्तानुपपत्तिरिति । प्राचीनानान्त्वयमाशयः । अनुभवत्वेनैव कारणत्वम्, न तु ज्ञानत्वेन, अनुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवाभावात् । न च विनिगमनाविरहः । विशेषधर्मेण व्यभिचाराऽज्ञाने सामान्यधर्मेणाऽन्यथासिद्धत्वात् । संस्कारनाशकत्वं च कालस्य— रोगस्य— चरमफलस्य वा, नत्वान्तरालिकस्मरणानामिति नोक्तानुपपत्तिरित्यत्र विस्तरः ।

**अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः । कटादिपृथिवीवृत्तिः ।**

दी०—स्थितिस्थापकं लक्षयति अन्यथेति ।

संख्यादयोष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः अन्ये रूपादयो विशेषगुणाः । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमत्वं विशेषगुणत्वम् ।

गं०—मूले अन्यथाकृतस्य । अवस्थान्तरं प्रापितस्य । तदवस्थापादकः । पूर्वावस्थाजनकक्रियाहेतुः । वेगभावनाऽन्यसंस्कारत्वं तल्लक्षणम् । अत्रेदंबोध्यम् । गुणाः द्विविधाः सामान्यगुणाः विशेषगुणाश्च । संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व-गुरुत्व-नैमित्तिकद्रवत्व-वेग-स्थितिस्थापकाः सामान्यगुणाः । रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वाऽवृत्तिजातिशून्यगुणत्वम् । द्रव्यविभाजकतावच्छेदकं यत्पृथिवीत्वादि तद्व्याप्यतावच्छेदकं च गन्धत्वादि तच्छू-

न्यगुणत्वस्य संख्यादौ सत्त्वाल्लक्षणसमन्वयः अन्येरूपादय इति । रूपरसगन्ध-स्पर्श-बुद्धि-सुख-दुःख इच्छा-द्वेष-प्रयत्न-सांसिद्धिद्रवत्व-धर्म अधर्म भावना-शब्दा इत्यर्थः । द्रव्यविभाजकेति । द्रव्यविभाजकीभूतं यदुपाधिद्वयं "पृथिवीत्वजलत्वादिरूपं" तत्तत्समानाधिकरणाः "द्वित्वपृथक्त्वसंयोगादयः तद्वृत्तिजातिमद्गुणत्वमित्यर्थः ।

भावनाऽन्यो यो वायुवृत्तिवृत्तिस्पर्शाऽवृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाऽजलद्रवत्वान्यगुणत्वमिति यावत् । तेन एकत्वे परिमाणे च नातिव्याप्तिः कटादिपृथिवीवृत्तिरिति । केषां चिन्मते पृथिव्यादिचतुष्टयवृत्तिरिति ध्येयम् । संस्कारः सर्वोऽप्यनित्य एव ।

**चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् । पृथिव्यादिचतुष्टयमनोवृत्ति ।**

दी०—कर्मणो लक्षणमाह चलनेति । उत्क्षेपणादीनां कार्यभेदमाह । ऊर्ध्वेति । वक्रतासंपादकं कर्म आकुंचनम् । ऋजुतासंपादकं प्रसारणमित्यर्थः ।

गं०—कर्मत्वजातिमत्वं कर्मणो लक्षणम् । ऊर्ध्वदेशेति । आदौ क्रिया ततो विभागः-ततः पूर्वसंयोगनाशः-तत उत्तरदेशसंयोगः इति क्रमः । स चोत्तरदेशसंयोगः यद्यूर्ध्वदेशसंयोगः स्यात् तदा तादृशसंयोगजनकीभूतं कर्म उत्क्षेपणमित्युच्यते । एवमपक्षेपणादिष्वपि बोध्यम् । लक्षणन्तु ऊर्ध्वदेशसंयोगाऽसमवायिकारणत्वम् । एवमुत्क्षेपणत्वादिजातिमत्त्वमपि । अन्यत्सर्वमिति । भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनात्मकं सर्वं गमनस्वरूपमित्य-

र्थः। उत्क्षेपणादीनामपि गमनेऽन्तर्भावात् पृथङ्निरूपणं शिष्यबुद्धिवैशद्याय स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनियोगानर्हत्वाच्चेति ध्येयम्।

**नित्यमेकमनेकानुगतं सामान्यम्। द्रव्यगुणकर्मवृत्ति। तद् द्विविधं, पराऽपरभेदात्। परं सत्ता। अपरं द्रव्यत्वादि।**

न्या०—सामान्यं निरूपयति। नित्यमेकमिति। नित्यत्वे सति अनेकसमवेतत्वं सामान्यलक्षणम्। नित्यत्वानुपादाने संयोगादावतिव्याप्तिः, तत्राऽपि अनेकसमवेतत्वसत्वात्, तद्वारणाय नित्यत्वविशेषणम्। अनेकसमवेतत्वानुपादाने आकाशादावतिव्याप्तिः, तद्वारणायाऽनेकसमवेतत्वविशेषणम्। अनेकत्वानुपादाने जलपरमाणुरूपादावतिव्याप्तिः, अतोऽनेकेति।

दी०—सामान्यं लक्षयति। नित्यमिति। संयोगेऽतिव्याप्तिवारणाय नित्यमिति। जलपरमाणुगतरूपेऽतिव्याप्तिवारणाय एकेति। परमाणुपरिमाणादावतिव्याप्तिवारणाय अनेकेति। अनुगतत्वं समवेतत्वम्। तेन नाऽभावादावतिव्याप्तिः।

गं०—तत्रापि। संयोगादावपि। न चैवमपि नित्यसंयोगेऽतिव्याप्तिरिति वाच्यम्। नित्यसंयोगे मानाभावात्। दीपिकायां एकेतीति। वस्तुतस्तु एकपदं प्रामादिकमेव प्रतिभाति। न च नित्यत्वे सति अनेकवृत्तित्वमेवास्तु किं समवायसंबन्धावच्छिन्नवृत्तित्वनिवेशनेनेति वाच्यम्। अत्यन्ताऽभावेऽतिव्याप्तेः, तस्य नित्यत्वात् अनेकवृत्तित्वाच्च। अतोऽनेकेतीति। नचाऽनेकत्वं यदि यत्किंचिदेकभिन्नत्वं तदा उक्तदोषतादवस्थ्यम्, जलीयपरमाणोरपि यत्किंचिदेकभिन्नत्वात्, यदि एकत्वावच्छिन्नसामान्यभेदः तदाऽप्रसिद्धिः, एकत्वस्य केवलान्वयित्वादिति वाच्यम्। स्वप्रतियोगिसमवेतत्व

स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वस्यैव अनेकसमवेतत्वान्न कोपि दोषः।

## नित्यद्रव्यवृत्तयो व्यावर्त्तका विशेषाः।

न्या०—नित्यद्रव्येषु परमाण्वादिषु वर्त्तमानाः। "अतएव" व्यावर्त्तकाः इतरभेदाऽनुमितिहेतवः। नित्यद्रव्यवृत्तित्वरूपपक्षधर्मता-प्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः। नित्यद्रव्यनिष्ठविशेष्यता-निरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः। पार्थिवपरमाणौ जलादिभेदानुमापक-गन्धेऽतिव्याप्तिवारणाय एकमात्रवृत्तित्वं भेदविशेषणम्। घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपितान्तं प्रकार-ताविशेषणम्। एतेन व्यावर्त्तका इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदा-नुमितिप्रयोजका इत्यर्थकतया लक्षणपरत्वेन साफल्येऽपि नित्यद्रव्य-वृत्तय इति विफलमेव, स्वरूपाख्यानस्याऽपि कृतत्वादिति प्रत्युक्तम्।

दी०—विशेषं लक्षयति। नित्येति।

गं० – नित्यद्रव्याणि च पृथिव्यादिचतुष्टयपरमाणवः, आकाशकालदि-गात्ममनांसि च। अयं घटः घटान्तराद् भिन्नः एतत्कपालसमवेतत्वादिति रीत्या सावयवघटादि द्व्यणुकपर्यन्तद्रव्याणां तत्तदवयवभेदाद् भेदः। परमाणूनां निरवयवत्वान्नाऽवयवभेदप्रयुक्तो भेदः संभवतीति परमाणूनां परस्पर भेदसिद्ध्यर्थं विशेषनामकः पदार्थः स्वीक्रियते। अयं परमाणुः परमाण्वन्तर-भिन्नः विशेषादिति प्रकारः। न च परमाणुभेदकस्याऽसत्वे क्षतिविरह इति वाच्यम्। घटारंभकपरमाणुतः पटारंभकपरमाणोरवैलक्षण्येन पटघटयोर-वैलक्षण्यप्रसंगात्। कारणवैलक्षण्यं विना कार्यवैलक्षण्याऽदर्शनात्। परमाणोरेव व्यावर्त्तकत्वमिति न शंक्यम्। परमाणुः न स्वतो व्यावर्त्तकः रूपस्पर्शाऽन्यत-रवत्वाद् घटवदित्यनुमानबाधात्। तथा च परमाणूनां परस्परभेदसिद्ध्यन्य-

थाऽनुपपत्त्या विशेषोऽङ्गीकर्त्तव्य इति भावः। परमाणुषु परस्परभेदाऽनुमितिः किंचिल्लिङ्गज्ञानजन्या अनुमितित्वाद् वन्ह्याद्यनुमितिवदित्यनुमानाद् विशेषसिद्धिर्बोध्या। न च परमाणूनां तत्तन्नीलपीतादिरूपभेदेन भेदसंभवाद्विशेषाङ्गीकारो व्यर्थ इति वाच्यम्। एकजातीयरूपवतां तेषां तदनभ्युपगमे भेदानुपपत्तेः। ननु विशेषाणां परस्परव्यावर्त्तनाय विशेषान्तरमुपगन्तव्यम्. तथा चाऽनवस्थेति चेन्न। परमाणुव्यावर्त्तनाय कल्प्यमानविशेषस्य स्वव्यावर्त्तकनिरपेक्षस्यैव कल्पनात्[1]। नव्यास्तु विना व्यावर्त्तकं परेषां विशेषाणामिव नित्यानामपि द्रव्याणां स्वतो व्यावर्त्तकत्वादित्याहुः। केचित्तु शब्दसमवायिकारणतावच्छेदकतया तत्कल्पनमावश्यकम्, अनेकशब्दादौ तत्कल्पने गौरवात्। न च तत्परिमाणव्यक्तिस्तथास्तु। तदेकत्वादिना विनिगमनाविरहात्। न चाऽक्लृप्ते विनिगमनाविरहः संभवतीति तत्सिद्धिरित्याचक्षते। तच्चिन्त्यम्। यत्राऽननुगतानि कारणानि तत्राऽपेक्षते कारणतावच्छेदकोऽनुगतो धर्मः कारणतायाः। प्रकृते तु कारणाऽननुगमाभावान्नापेक्षणीयोऽनुगतोधर्मः। न च कारणता सावच्छिन्नेति नियमः। मानाभावात्।

**नित्यसंबन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमपराश्रितमेवाऽवतिष्ठते तावयुतसिद्धौ। यथा अवयवाऽवयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती-विशेषनित्यद्रव्ये चेति।**

न्या०—समवायं निरूपयति। नित्येति। संबन्धत्वं विशिष्टप्रतीतिनियामकत्वम्। तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो नित्य इति विशेषणम्। ययोर्द्वयोर्मध्ये इति। यन्निष्ठकालनिरूपिताऽऽधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः।

---

टि० १ तथा च विशेषाः स्वतो व्यावृत्ता इति भावः। स्वतो व्यावृत्तत्वं च स्वभिन्नलिंगजन्यस्वविशेष्यकस्वसजातीयेतरभेदाऽनुमित्यविषयत्वम्।

दी०—समवायं लक्षयति नित्येति। संयोगेऽतिव्याप्तिवारणाय नित्येति। आकाशादावतिव्याप्तिवारणाय सम्बन्ध इति। अयुतसिद्धलक्षणमाह ययोरिति। 'नीलोघट' इति विशिष्टप्रतीतिः विशेषणविशेष्यसम्बन्धविषया विशिष्टप्रत्ययत्वात् दण्डीति प्रत्ययवदिति समवायसिद्धिः। अवयवावयविनाविति। द्रव्यसमवायिकारणमवयवः। तज्जन्यं द्रव्यमवयवि।

गं०—विशिष्टप्रतीतिनियामकत्वमिति। विशेष्यता-प्रकारताऽन्यविशिष्टधीविषयत्वमिति यावत्। ययोर्द्वयोर्मध्ये-घटकपालयोर्मध्ये। एकं घटः। अपराश्रितमेवावतिष्ठते कपालाश्रितमेवावतिष्ठते। तौ घटकपालावित्यर्थः। इह कपाले घट इति प्रतीतेः कपालावच्छेदेन एतत्काले घटवत्त्वावगाहितया घटनिष्ठकालनिरूपिताऽऽधेयतासामान्यस्य कपालावच्छिन्नतया कपालघटोभयमयुतसिद्धमिति। घटभूतलवारणाय सामान्यमिति।

**अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य।**

दी०—प्रागभावं लक्षयति। अनादिरिति। आकाशादावतिव्याप्तिवारणाय सान्त इति। घटादावतिव्याप्तिवारणाय अनादिरिति। प्रतियोगिसमवायिकारणवृत्तिः, प्रतियोगिजनकः, भविष्यतीति व्यवहारहेतुः प्रागभावः।

गं०—मूले अनादिरिति। आदिरहित इत्यर्थः। आदिः उत्पत्तिः। उत्पत्तिश्चाऽऽद्यक्षणसंबन्धः। प्रागभावाऽप्रतियोगित्वमिति यावत्। सान्त इति। अन्तो ध्वंसः। प्रतियोगितासंबन्धेन तद्वान्। तथा चोत्पत्तिशून्यत्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य लक्षणम्। दीपिकायां। सान्त इति। विशेष्यदलमित्यर्थः। अनादिरिति। सत्यन्तदलमित्यर्थः। प्रतियोगि-

**समवायिकारणवृत्तिरिति** । प्रतियोगिनो यत्समवायिकारणं तत्र वर्त्तते इत्यर्थः । कार्यस्योत्पत्तेः पूर्वमिति मूलमपि अत्रैवोपतिष्ठते । **ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वनियमात्** । प्रयोजनमाह । **प्रतियोगिजनक इति** घटे कारणमित्यर्थः । प्रमाणमाह । **भविष्यतीति व्यवहारहेतुरिति** । भविष्यतीति व्यवहाराऽसाधारणकारणमित्यर्थः । भविष्यतीत्यस्य प्रतियोगितासंबन्धेन प्रागभाववान् इत्यर्थः, व्यवहर्तव्यतावच्छेदकं प्रागभाववत्त्वम् । तच्च प्रागभाव एव । एवं च भविष्यतीति शब्दप्रयोगे प्रागभावः कारणम् । व्यवहारे व्यवहर्त्तव्यतावच्छेदकस्य कारणत्वादिति ।

नव्यास्तु प्रागभावे मानाभावः । न च तत्र प्रत्यक्षं, इह घटप्रागभाव इति प्रत्ययवासनाकल्पिततया तदसाधकत्वात् । भविष्यतीति प्रत्ययस्य वर्त्तमानकालोत्तरकालोत्पत्तिकत्वविषयकत्वेन निर्वाहेऽतथात्वात् । अभावत्वं विनाशिवृत्ति पदार्थविभाजकोपाधित्वाद्भावत्ववदित्यनुमानस्याप्रयोजकतया तदसिद्धिः । स्यादेतत् उत्पन्नस्य पुनरुत्पादवारणाय तदभ्युपगमो दुर्वारः । तदानीमपि सामग्र्याः अक्षतत्वात् । न च तदुत्पादोत्तरकालीनतदुत्पादरूपस्य पुनरुत्पादस्याऽप्रसिद्धतयाऽपादनासंभवः । घटाद्युत्पत्तिद्वितीयक्षणः यद्येतद्घटसामग्र्यव्यवहितोत्तरः स्यात् घटाद्युत्पादवान् स्यादित्याकारकापत्तेः संभवात् । नचेहाऽप्रसिद्धिरस्ति इति चेत् । सत्यं । संभवति तदेदं यदि सामग्र्यव्यहितोत्तरत्वं तदुत्पादवत्त्वव्याप्यम् तत्रैव मानाभावात् किं—तु तद्वृत्ताव्याप्यमेव । एवं चोत्पादकेन द्वितीयादिक्षणे तद्वृत्तैवाऽपादनीया । न चेयमनिष्टावहा । अथवोत्पत्स्यन्तर्भावेन व्याप्तिरस्तु । तथापि न घटोत्पत्तिद्वितीयक्षणे तदुत्पादः, किन्तु जन्यद्रव्यत्वावच्छिन्नं प्रति द्रव्यत्वेन प्रतिबन्धकतया प्रतिबन्धकाभावरूपहेत्वभावेनैव तदनुपपत्तेः । अनन्तप्रागभावां हेतुहेतुमद्भावकल्पनापेक्षया ईदृशकल्पनाया एवोचितत्वात् । न च महाघटनाशानन्तरं यत्र खंडघट उत्पद्यते तत्र खण्डघटोत्पत्तिकाले तद्घटापत्तिः कार्याव्यवहितप्राक्कालावच्छेदेन प्रतिबन्धकाभावहेतोः सत्त्वादिति वाच्यम् । तत्र यादृशारम्भकसंयोगनाशाद् घटो नष्टः तादृशसंयोगव्यक्तेरेव हेतुत्वोपगमेन

नापत्तिगन्धोऽपि। न च यत्र सहस्रतन्त्वारब्धपटस्य विंशतितन्तुसंयोगनाशानन्तरं खंडपट उत्पते तत्र तादृशखंडपटोत्पत्तिकाले तत्पटोत्पादवारणाय विंशतिसंयोगानां हेतुत्वकल्पनापेक्षया तत्प्रागभावहेतुत्वकल्पनमेव साधीय इति वाच्यं। तत्र तादृशघटत्वावच्छिन्नं प्रति तत्पटनाशत्वेन प्रतिबन्धकत्व कल्पनात्। न च तत्तत्पटत्वावच्छिन्नं प्रति तत्तत्पटनाशत्वेन जन्यद्रव्यत्वावच्छिन्नं प्रति द्रव्यत्वेन च प्रतिबन्धकत्वकल्पनागौरवेण तत्पटं प्रति तत्पटप्रागप्रागेवत्वेन हेतुत्वकल्पनैव साधीयसीति वाच्यं। यत्र महापटनाशान्तरं न खंडपटोत्पन्नः तत्र प्रागभावहेतुत्वकल्पनातो द्रव्यत्वावच्छिन्नाभावस्य हेतुत्वकल्पनायां लाघवात्। यत्र च महापटनाशान्तरं खंड पट उत्पद्यते तत्र तदुत्पादवारणाय नाशत्वेन स्वातन्त्र्येण प्रतिबन्धकत्वं कल्प्यते इत्यनवद्यम्।

यत्तु तत्वज्ञानिनां धर्माधर्मोत्पत्तिवारणायाद्यतत्वज्ञानप्रागभावत्वेन हेतुत्वं कल्पनीयमिति तत् सिद्धि रिति तदसत्। तत्वज्ञानध्वंसत्वेन प्रतिबन्धकत्वकल्पनया तदुत्पादवारणात्। न च तत्वज्ञानोत्पादकालेऽदृष्टोत्पत्त्यापत्तिः। न च तवापि तुल्यं। अव्यहितप्राक्कालावच्छेदेनाद्यतत्वज्ञानप्रागभावस्य सत्त्वादिति वाच्यं। कार्यसहभावेन तत्प्रागभावस्य हेतुत्वोपगमेनास्मन्मते आपत्तिवारणादिति सांप्रतं। अदृष्टत्वावच्छिन्नं प्रति तत्वज्ञानत्वेनापि प्रतिबंधकत्वकल्पनात्। न च कार्यकारणभावद्वयगौरवमिति वाच्यं। तवाप्याद्यत्वस्य तत्वज्ञानप्रागभावे स्वसामानाधिकरण्यकालिकविशेषणतावच्छिन्नस्ववृत्तित्वोभयसम्बन्धेन तत्वज्ञानवदन्यत्वरूपतया तत्वज्ञानवदन्यत्वप्रागभावत्वयो मिथोविशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणभावद्वयस्य त्वया स्वीकारात्। अधितिष्ठते च जनकतावच्छेदकशरीरनिबन्धनं लाघवमिति मंतव्यम्।

परे तु प्रागभावानंगीकारे तत्पटानधिकरणतंतौ तत्पटापत्तिवारणाय तत्पटप्रागभावत्वेन हेतुत्वं स्वीकरणीयमिति तत्सिद्धिः। न च तत्पटत्वावच्छिन्नं प्रति तत्तत्संयोगत्वेन हेतुत्वोक्त्याऽपि निर्वाहेण प्रागभावासिद्धिरिति वाच्यम्। अनेकसंयोगानां हेतुत्वकल्पनापेक्षया तत्कल्पनाया एवोचितत्वा-

दिति। तन्न। तवापि सहस्रतन्तुकपटस्य त्र्यादितंतुषु आपत्तिवारणाय चरम-संयोगत्वेन हेतुत्वकल्पनावश्यकतया तेनैव तत्पटानधिकरणतंतौ वारणसंभवात्। नचैकस्मादेवाग्निसंयोगाद्विलक्षणा रूपरसादयः उत्पद्यन्ते, तेषां च सामग्रीभेदावश्यकतया प्रागभावः सिद्ध्यतीत्युक्तं युक्तं। तत्तत्प्रतिबन्धकाभावघटितसामग्रीवैचित्र्यादेव कार्यवैचित्र्यसिद्धेस्तदसाधकत्वात्।

यत्तु धूमपरामर्शजन्यतावच्छेदकताघटकसंबंधतया तत्सिद्धिः। अन्यथा धूमलोकलिङ्गकपरामर्शजन्यानुमितेरपि पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवन्हित्वावच्छिन्नविधेयताशाल्यनुमितित्वाक्रांततया व्यभिचारात्। अतो जन्यतावच्छेदकं धूमलिङ्गकत्वं वाच्यम्। तच्च स्वसमानाधिकरण्य स्ववृत्तिप्रागभावप्रतियोगित्व स्ववृत्तिकृतिमत्वैतत्त्रितयसंबन्धेन धूमपरामर्शविशिष्टत्वमिति तत्सिद्धिरिति। तत्तु धूमलिङ्गकत्वस्य विषयताविशेषरूपस्य व्यवस्थापनीपतया तत्सिद्धौ साधकाभावादिति।

अत्र वदन्ति। भिन्नविषयकानुमितिसामग्रीकाले भिन्नविषयकप्रत्यक्षापत्तिवारणायानुमितिसामग्रीत्वेन प्रतिवन्धकत्वं कल्पनीयम्। तत्र बाधसिद्ध्यभावविशिष्टपरामर्शत्वेन प्रतिवन्धकत्वोक्तौ विशेषणविशेष्यभावे विनिगमनाविरहेणानंतप्रतिवध्यप्रतियन्धकभावापत्त्या गौरवात्। प्रागभावाभ्युपगमे तु सिद्ध्यभावत्व बाधाभावत्वाद्यनिवेशेन स्ववृत्तिप्रतियोगित्वसम्बन्धेन कृतिविशिष्टानुमितिप्रागभावत्वेन प्रतिबंधकत्वं कल्पयितुं युज्यते। एतादृशसंवन्धेन कृतिविशिष्टस्य प्रागभावस्यानुमित्यव्यवहितप्राक्कालावच्छेदेन वर्त्तमानतया प्रतिबंधकाभावहेतोरभावात् न कार्यापत्तिरिति।

यत्तु चित्रत्वावच्छिन्नं प्रति षड्भावहेतुत्वापेक्षया लाघवाच्चित्रप्रागभावत्वेन हेतुत्वात्तत्सिद्धिरिति तत्तु रूपवद्रपत्वेन हेतुत्वोक्त्यापि निर्वाहेण तत्कल्पनायां गौरवादिति।

यदपि तत्त्वज्ञानजन्यतावच्छेदकं चरमदुःखध्वंसत्वं तत्र चरमत्वं स्वसामानाधिकरण्यावच्छिन्नकालिकसंबन्धेन दुःखप्रागभाववदन्यत्वमिति तत्सि-

द्धिरिति । तदप्युक्तसंबन्धेन दुःखवदन्यत्वस्य ध्वंसे निवेशसंभवेनाऽप्युपपत्त्या तत्साधकाभावादित्यलमतिप्रसङ्गेन ।

## सादिरनन्तः प्रध्वंसः उत्पत्त्यनन्तरं कार्यस्य ।

दी०—ध्वंसं लक्षयति । सादिरिति । घटादावतिव्याप्तिवारणाय अनन्तेति । आकाशादावतिव्याप्तिवारणाय सादिरिति । प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः, ध्वस्त इति व्यवहारहेतुः ध्वंसः ।

गं०—मूले । सादिरिति । उत्पत्तिमानित्यर्थः । प्रागभावप्रतियोगीति यावत् । अनन्तः । अन्तरहितः अन्तो ध्वंसः । प्रतियोगितासंबन्धावच्छिन्नप्रतियोगिताकध्वंसाभाववानित्यर्थः । ध्वंसाऽप्रतियोगीति यावत् । तथा च प्रागभावप्रतियोगित्वे सति अभावत्वं ध्वंसस्य लक्षणम् । दीपिकायां । अनन्तेति । विशेष्यदलमित्यर्थः । सादिरिति । सत्यन्तदलमित्यर्थः । प्रतियोगिजन्य इति प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्यसंबन्धेन प्रतियोगी कारणमित्यर्थः । शेषं पूर्ववद् ।

## त्रैकालिकः संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । यथा भूतले घटो नास्तीति ।

न्या०—अत्यन्ताभावं निरूपयति—त्रैकालिकेति । प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथा क्रमं विशेषणोपादानम् । वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे त्रैकालिकेति स्वरूपाख्यानमेवेति बोध्यम् ।

दी०—अत्यन्ताभावं लक्षयति—त्रैकालिक इति । अन्योन्याभावेऽतिव्याप्तिवारणाय संसर्गावच्छिन्नेति । ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिक इति ।

गं०—त्रैकालिक इति । नित्य इत्यर्थः । संसर्गपदं तादात्म्यभिन्नसंसर्गपरम् । तथा च नित्यत्वे सति तादात्म्यभिन्नसंबन्धावच्छिन्नप्रतियोगिताकाऽभावत्वं अत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावयोः संबन्धावच्छिन्नप्रतियोगिताकत्वविरहादेवाऽतिव्याप्तिवारणे नित्यत्वोपादानं व्यर्थमित्याह । वस्तुतस्त्विति । दीपिकायां । संसर्गावच्छिन्नेतीति । तादात्म्यसंबन्धानवच्छिन्नेत्यर्थकम् । त्रैकालिक इतीति । ध्वंसप्रागभावप्रतियोगितयोः किंचित्संबन्धानवच्छिन्नत्वेन तादात्म्यसंबन्धानवच्छिन्नत्वस्य सुतरां सत्वात् । स्वरूपमाह यथेति । अनुयोगिवाचकसप्तम्यन्तपदसमभिव्याहृतप्रतियोगिवाचकपदसमव्याहृतनञ्शब्दोल्लेखितप्रत्ययविषयाऽभावोऽत्यन्ताभावस्वरूपम् ।

अत्र बोध्यम् । नञ्पदाऽसत्वे यादृशवाक्यात् यद्धर्मिणि येन संबन्धेन यद्वत्ता प्रतीयते, नञ्सत्वे तादृशवाक्यात् तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति नियमः । यथा नञसत्वे भूतले घटवत्ता संयोगेन प्रतीयते नञ्सत्वे स एव प्रतियोगितावच्छेदकसंबन्धः, प्रतियोगिता च तत्संबन्धावच्छिन्नेतीति ।

**तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः यथा घटः पटो नेति ।**

न्या०—अन्योन्याभावं निरूपयति—तादात्म्येति ।

दी०—अन्योन्याभावं लक्षयति—तादात्म्येति ।

गं०—मूले । तादात्म्यसंबन्धावच्छिन्नेति । संसर्गविधया तादात्म्यावच्छिन्नेत्यर्थः । तेन संयोगेन घटतादात्म्यवान्नास्तीत्यस्य न संग्रहः तदीयप्रतियोगितायां प्रकारविधया तादात्म्यावच्छिन्नत्वेऽपि संसर्गविधया तादात्म्यान-

वच्छिन्नत्वादिति ध्येयम् । अन्योन्याभावस्वरूपमाह । यथेति तथा च प्रथमान्त-विभक्तिकप्रतियोग्यनुयोगिवाचकपदसमिव्याहृतनञ्शब्दोल्लेखितप्रत्ययविषयाऽभावोऽन्योन्याभावस्वरूपमित्यर्थः ।

दी०—प्रतियोगितावच्छेदकारोप्यसंसर्गभेदात् एकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्बहुत्वम् । 'केवलदेवदत्ताभावात् दण्ड्यभावः' इति प्रतीत्या विशिष्टाभावः 'एकसत्त्वेऽपि द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगसम्बन्धेन च घटवति समवायसम्बन्धेन घटाभावः, तत्तद्घटाभावाद्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः । एवमन्योन्याभावोऽपि । घटत्वेन पटोनास्तीति व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते । पटे घटत्वं नास्तीति तस्यार्थः । अतिरिक्तत्वे स केवलान्वयी । सामयिकाभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमानः, घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीते घटापसारणे सति प्रतीतेर्भूतलघटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते । घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः । घटापसारणे च संयोगध्वंससत्त्वात्प्रतीतिरिति ।

गं०—अत्यन्ताभावाऽन्योन्याभावयोर्बहुत्वं दर्शयति । प्रतियोगितावच्छेदकेत्यादि । आरोप्यसंसर्गः-प्रतियोगितावच्छेदकसंबन्धः । तथा च प्रतियोगितावच्छेदकधर्मभेदात् प्रतियोगितावच्छेदकसंबन्धभेदाच्च एकप्रतियोगिकस्याऽप्यत्यन्ताभावस्य बहुत्वम् । अन्योन्याभावस्य तु प्रतियोगितावच्छेदकधर्मभेदादेव बहुत्वम्, न तु प्रतियोगितावच्छेदकसंबन्धभेदात्, तत्र तादात्म्यस्यैव प्रतियोगितावच्छेदकत्वात् । तदेव दर्शयति । केवलदेवदत्ताभावादिति विशिष्टाभावोऽतिरिक्त इत्यन्वयः । दण्ड्यभाव इति । दण्डनिष्ठावच्छेदक-

ताकदेवदत्तनिष्ठप्रतियोगिताकाभाव इति भावः। एकसत्त्वेऽपि। वन्हिसत्त्वेऽपि। द्वौ न स्त इत्यादि प्रतीत्येति। वन्हि घटौ न स्त इत्यादि प्रतीत्येत्यर्थः। सिद्ध इति शेषः। द्वित्वावच्छिन्नाभाव इति। केवलवन्हित्वावच्छिन्नाभावादिति-शेषः। अतिरिक्त इत्यनेनाऽन्वयः। संबन्धभेदेनाऽभावस्याऽतिरिक्तत्वं दर्शयति। समवायेन घटाभाव इति। संयोगेन घटाभावादिति शेषः। अस्याप्य-तिरिक्त इत्यनेनाऽन्वयः। सामान्याभावविशेषाभावयोर्भेदं दर्शयति। तत्तद् घटाभावादिति। एवमन्योन्याभावोपीति। अत्यन्ताभाववत् अन्योन्याभावोपि प्रतियोगितावच्छेदकभेदेनातिरिक्तः स्वीकार्य इत्यर्थः। नाङ्गीक्रियते इति। प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इति नियमात्। ननु तादृशप्रतीतेः को विषय इत्यत आह। पटे इति। ननु संयोगेन घटाभावस्या-ऽत्यन्ताभावरूपत्वे घटाऽऽनयनेऽपि घटाभावप्रत्यक्षाऽपत्तिः, अत्यन्ताभावस्य नित्यत्वात्, अतः सामयिका भावोऽतिरिक्तः स्वीकार्य इति प्राचीनमतं दूषयति। सामयिकाऽभावोपीति। सामयिकाभावः समयविशेषे प्रतीयमा-नोऽप्यत्यन्ताभाव एवेति योजना। घटाभाववतीति। तादृशभूतलादावित्यर्थः। प्रथममित्यादिः। घटानयने इति। घटवतीत्यर्थः। एतस्याऽप्रतीतेरित्यनेनाऽ-न्वयः। प्रतीतेरिति। तस्मिन्नेवाऽधिकरणे इत्यादिः। तत्तत्कालीनतत्तद्भूत-लादेरेव घटाद्यभावसंसर्गतया घटकालस्य संबन्धाऽघटकतया घटकाले न घटाऽत्यन्ताभावबुद्धिरित्यपि बोध्यम्।

दी०—केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तौ अभावो न पदार्थान्तरमिति गुरवः। तन्न। अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात्। अभावाभावो भाव एव। नातिरिक्तः। अनव-स्थाप्रसङ्गात्। ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येवेति प्राञ्चः। अभावाभावः अतिरिक्त एव। तृतीया भावस्य प्रथमाभावरूपत्वात्— नानवस्थेति नवीनाः।

गं०—ननु अभावानां अधिकरणरूपत्वैवाऽस्तु अतिरिक्ताऽभावे अभाव-

त्वकल्पनातः क्लृप्ताऽधिकरणे एव अभावत्वकल्पनायां लाघवात्, किं च तत्त-त्कालीनतत्तद्भूतलादिरूपाऽधिकरणविशेषस्यैवाऽभावसंबन्धतया तादृशाऽधि-करणविशेषेऽभावत्वकल्पनाया एवोचितत्वात्। नच अभावादिकरणयोरभेदात् घटाभाववद् भूतलं इति प्रतीत्यनुपपत्तिः प्रत्युत घटाभावोभूतलम् इति प्रतीत्यापत्तिः। अन्यथा भूतलं भूतलवदित्यपि प्रतीतिः स्यादिति वाच्यम्। अभेदेपि अवच्छेदकभेदेनैव तादृशप्रत्ययोपगमादिति प्राभाकरमतं दूषयितुं तन्मतमुपन्यस्यति केवलाधिकरणादेवेऽति। अधिकरणविशेषं विषयी-कृत्यैवेत्यर्थः, एवकारेणातिरिक्ताभावविषयकत्वपरिच्छेदः, इति गुरव इति। वदन्तीति शेषः। कैवल्यस्य निर्वक्तुमशक्यत्वादिति। निर्वक्तुमसमर्थ-त्वादित्यर्थः। तथा च कैवल्यं यदि भूतलस्वरूपं तदा घटवद्भूतलेऽपि घटा-भाववत्ताबुद्धिप्रसङ्गः, भूतलस्य घटाभावरूपत्वात्। यदि तु कैवल्यं घटा-भाववत्त्वम्, तदासिद्धोऽतिरिक्तोऽभाव इति भावः। अभावाभाव इति। घटाभावाभाव इत्यर्थः। नातिरिक्त इति। किन्तु घटरूप एवेत्यर्थः। प्रति-योग्येवेति। अनवस्थापत्तेरिति शेषः। अतिरिक्त एवेति। भावत्वाभावत्व-योर्विरोधादिति भावः। नन्वेवमनवस्था स्यादित्यत आह—तृतीयेति।

**सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भा-वात्सप्तैव पदार्था इति सिद्धम्।**

न्या०—ननु सादृश्यादीनामतिरिक्तपदार्थानामनिरूपणेन न्यूनतेत्यत आह। सर्वेषामिति। "प्रमाणप्रमेयसंशयप्रयोजनदृष्टा-न्तसिद्धान्ताऽवयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजाति-निग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगम" इति न्यायस्याऽऽदिमसूत्रे उक्तानां प्रमाणप्रमेयादीनामित्यर्थः। तद्भिन्नत्वविशिष्टतद्गतभूयो-धर्मस्यापि घटपटादिरूपत्वेन नातिरिक्तत्वम्, एवमन्येषामप्यूह्यम्।

गं०—ननु सादृश्यं अतिरिक्तः पदार्थः षड्भावानन्तर्भूतत्वे सति अभा-

वाऽनन्तर्भूतत्वात् यन्नैवं तन्नैवं यथा घटः। न च विशेषणासिद्धिरिति वाच्यम्। सादृश्यं षड्भावानन्तर्भूतं सामान्यवृत्तित्वे सति सामान्येतरवृत्तित्वात् गगनाभाववदित्यनुमानेन तस्या निरासात्। सादृश्यं अभावानन्तर्भूतं भावत्वेन प्रतीयमानत्वात् घटवदित्यनुमानेन विशेष्याऽसिद्धिनिरासाच्च। तथा च कथं सप्तैव पदार्था इत्याक्षिपति। नन्वित्यादिना। प्रमाणादीनां यथायथं द्रव्यादिषु अन्तर्भावो वक्ष्यते सादृश्यस्याऽतिरिक्तत्वखंडनेन पूर्वोक्तशंकां परिहरति। तद्भिन्नत्वविशिष्टेति। भूयः पदं काचित्कम्, तद्गताऽसाधारणधर्मपरम्, तेन तद्व्यक्तिवृत्ति तद्व्यक्तित्वादेरभावसत्वेऽपि तद्व्यक्तिवृत्ति प्रमेयत्वादिमत्वेऽपि घटस्य नाऽप्रसंगाऽतिप्रसंगौ। तथा च तद्भिन्नत्वे सति तद्गताऽसाधारणधर्मवत्वं सादृश्यम्। सादृश्यनिरूपकेऽतिव्याप्तिवारणाय सत्यन्तम्। घटादौ चन्द्रसादृश्यवारणाय विशेष्यदलम्।

वस्तुतस्तु आलंकारिकचमत्कृतिविषयतावच्छेदकधर्मवच्छेदसमानाधिकरणोक्तविषयतावच्छेदकधर्मसजातीयधर्मशालित्वं सादृश्यम्। सा च प्रकारताविशेष्यतावेत्यन्यदेतत्। नच धर्मयोरेकप्रतीतिविषयत्वाभावान्नतत्वम्। शशी आल्हादकः, मुखमाल्हादकमिति समूहालंबनप्रतीतिविषयतया तदुपपत्तेः एतेनासाधारणत्वं न तदितरावृत्तित्वे सति तद्वृत्तित्वरूपं तद्व्यक्तिमात्रवृत्तिधर्मस्यैवेदृशतया मुखे तथात्वानापत्तेः। न च मेयत्वादेर्व्यतिरेकितया तद्वृत्तिवृत्तिव्यतिरेकिधर्मत्वं तत्वं वाच्यम्। तद्वृत्तिद्रव्यत्वादिमति घटादौ अतिप्रसंगादिति निरस्तम्।

अथ ननूपमानोपमेयत्वं यदैकस्यैव वस्तुनः इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वय इत्यादावुपमानोपमेयत्वे एकस्यैवैकवाक्यगे। अनन्वय इत्यत्र न केवलं भाति नितान्तकीर्त्तिर्नितंबिनी सैव नितंबिनीव। यावद् विलासायुधलासवासास्ते तद् विलासा एव तद्विलासाः इत्यादौ चान्वयालंकारस्थले एकस्यैव वस्तुनोपमानोपमेयत्वप्रदर्शनात् तस्य च सादृश्यघटिततया तल्लक्षणाव्याप्तिः। स्वभेदस्य स्वावृत्तित्वादिति चेन्न। अनन्वयालंकारस्थले निरुपमत्वस्य कवितात्पर्यविषयत्वात्।

एकस्यैव पुनर्व्यवच्छेदाय इत्याहुर्गुरुचरणाः ।

केचित्तु एकस्यैवेत्यनेन भिन्नशब्दबोध्यत्वव्यवच्छेदो बोध्यते । अस्यामुख-मिवास्याः वक्त्रमित्यादौ नानन्वयः । किन्तूपमैवेत्याहुः । तन्न । एकस्यैवार्थस्य शब्दभेदेनापाततो भेदः प्रतीयते । न वस्तुभेद इति तदन्वय एव । उदेति सविता ताम्रः ताम्र एवास्तमेतीत्यादाविवात्रैकशब्दोपादानामेव युक्तमिति ध्येयम् ।

दी०—ननु "प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-ऽवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्था-नानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ।" इति न्यायशास्त्रे षोडश-पदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह सर्वेषामिति । सर्वेषां सप्तस्वे-वान्तर्भाव इत्यर्थः ।

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गा-स्तु प्रमेयम् इति द्वादशविधं प्रमेयम् । प्रवृत्तिर्धर्माधर्मौ । रागद्वेष-मोहा दोषाः । रागः इच्छा । द्वेषो मन्युः । मोहः शरीरादौ आत्म-त्वभ्रमः । प्रेत्यभावो मरणम् । फलं भोगः । अपवर्गो मोक्षः । स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । प्रयोजनं सुखप्राप्तिः दुःखहानिश्च । दृष्टान्तो महानसादिः । प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्तः । निर्णयो निश्चयः । स च प्रमाण-फलम् । तत्त्वबुभुत्सोः कथावादः उभयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापनाहीना वितण्डा । कथा नाम नानावक्तृक-पूर्वोत्तरपक्षप्रतिपादकवाक्यसंदर्भः । अभिप्रायान्तरेण प्रयुक्तस्यार्था-न्तरं प्रकल्प्य दूषणं छलम् ।

गं०—प्रत्यक्षप्रमाणस्य द्रव्ये, अनुमानोपमानशब्दानां च गुणेन्तर्भावस्य स्फुटत्वात्प्रमेयादीनामन्तर्भावमाह । आत्मेत्यादिना । तथाचात्मशरीरेन्द्रिय-

रूपप्रमेयस्य द्रव्ये, अर्थस्य 'रूपरसगन्धस्पर्शशब्दात्मकस्य' गुणे, मनसः द्रव्ये, बुद्धेर्गुणे, प्रवृत्तेर्गुणे, दोषाणां गुणे, प्रेत्यभावस्य गुणे, फलस्य गुणे, दुःखस्य गुणे, अपवर्गस्याभावेऽन्तर्भावः, संशयस्य गुणे सुखरूपप्रयोजनस्य गुणे, दुःखाभाव-रूपप्रयोजनस्याभावे, दृष्टान्तसिद्धान्तयोः यथायथं द्रव्यादिषु, अवयवस्य तर्कस्य निर्णयस्य च गुणे वादजल्पवितण्डानां गुणे, हेत्वाभासानां यथायथं द्रव्यादिषु, छलस्य गुणेऽन्तर्भावः जातेर्गुणे, निग्रहस्थानानां यथायथं द्रव्यादिष्वन्तर्भावः अपवर्गपदार्थमाह । अपवर्गो मोक्ष इति । स च । मोक्षश्च । दुखध्वंस इति । दुःखानि तु षड़िन्द्रियाणि, षड्विषयाः, षड्बुद्धयः शरीरं सुखं दुःखं चेत्येकविंशतिरिति । इदानीन्तनाऽस्मदादि दुःखध्वंसे मुक्तित्वापत्तिवारणाय दुःखप्रागभावाऽसमानकालीनेति दुःखध्वंसविशेषणम् । शुकादि मुक्तावतिव्या-प्तिवारणाय स्वसामानाधिकरण्यनिवेशः ।

दी०—असदुत्तरं जातिः । साधर्म्य—वैधर्म्य—उत्कर्षापक-र्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसंगप्रतिदृष्टान्तानुत्पत्तिसंशयप्र-करणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्धिनित्यानित्यकार्यसमा जातयः ॥

पं०—जातिस्वरूपमाह—असदुत्तरमिति । स्वाभिमतार्थव्याघातक-स्वोत्तरवाक्यमित्यर्थः । जातेश्चतुर्विंशतिभेदानाह । साधर्म्येति । अत्र साधर्म्यादि कार्यान्तानां द्वन्द्वः । तैः समा । इति विग्रहः । तत्र साधर्म्येण वाद्यभिमतसाधकहेतुदूषकमुत्तरं साधर्म्यसमा । यथा शब्दोऽनित्यः कृतकत्वाद् घटवत् व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवं, यद्यनित्यघट-साधर्म्यान्नित्याऽऽकाशवैधर्म्याद्वाऽनित्यः स्यान्नित्याकाशसाधर्म्यादमूर्तत्वान्नि-त्यः स्याद्विशेषो वा वक्तव्यः । वैधर्म्येण वाद्यभिमतसाधकवाद्युक्तहेतुदूषकं उत्तरम् वैधर्म्यसमा । यथा शब्दोऽनित्यः कृतकत्वाद् घटवदाकाशवद्वेति स्थापनायां अनित्यघटवैधर्म्यादमूर्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्य इति । स्वाभिमतसाधकवाद्युक्तदृष्टान्तसाधर्म्यात् वाद्यनभिमतसाधकमुत्तरं उत्कर्ष-समा । यथा शब्दोऽनित्यः कृतकत्वादिति स्थापनायामनित्यत्वं कृतकत्वं

च घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात्। वाद्यभिमतसाधकदृष्टान्तहेतुभ्यां वाद्यभिमतार्थान्तरस्याभावसाधनमुत्तरमपकर्षसमा। यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरिघटधर्मरूपवत्त्वव्यावृत्त्या शब्देऽकृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात्। वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधकमुत्तरं वर्ण्यसमा। पक्षवृत्तिर्हेतुर्हि गमकः पक्षश्च सन्दिग्धसाध्यकः, तथा च सन्दिग्धसाध्यकवृत्तिहेतुस्त्वया दृष्टान्तेऽपि स्वीकार्य्यः तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वानिश्चयात् असाधारणो हेतुः। हेतुः सन्दिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते तदा गमकहेत्वाभावात् साधनविकलो दृष्टान्तः स्यादिति भावः। पक्षे असिद्धधर्मयोः तुल्यतया नियामकाभावप्रयुक्तासाधकमुत्तरमवर्ण्यसमा। यथा दृष्टान्ते हेतोर्यादृशत्वं तादृशो हेतुरेव गमक इत्यभिमानेनैवमुत्तरम्, दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः, स चेन्न पक्षे, तदा गमकहेत्वभावात् स्वरूपासिद्धिः स्यादतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्यः, तथा च सन्दिग्धसाध्यकत्वलक्षणपक्षत्वाभावादाश्रयासिद्धिः। दृष्टान्तविकल्पप्रदर्शनपूर्वकदार्ष्टान्तिकविकल्पकथनं विकल्पसमा। यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद् गुरुत्वस्याऽनित्यत्वव्यभिचारदर्शनादनित्यत्वस्य मूर्तत्वव्यभिचारदर्शनात् धर्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति। दृष्टान्तस्य साध्यतुल्यताकथनं साध्यसमा। अत्रायमाशयः– एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वं, तथा च पक्षादेरनुमितिविषयत्वात् साध्यवदेतत्प्रयोगसाध्यत्वमतः साध्यसमा, तथाहि—पक्षादेः पूर्वसिद्धत्वे एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वं पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयः। प्राप्त्या हेतुनिष्ठसाध्यसामानाधिकरण्यरूपया साध्येन हेतुसाधनरूपप्रत्यवस्थानं प्राप्तिसमा। यथा घटेन सम्बद्धो दण्डो घटकारणमित्युच्यते तदा घटो दण्डकारण स्यात् संबद्धत्वाविशेषात्। अप्राप्त्या पक्षे असिद्धरूपया दोषोद्भावनं अप्राप्तिसमा। यथा घटेनासम्बद्धो दण्डो घट-

कारणमित्युच्यते तदा दण्डः पटस्यापि कारणं स्यादसंबद्धत्वाविशेषात् । साधन-परंपराविषयकः प्रश्नः **प्रसङ्गसमा** । यथा शब्दोऽनित्यः श्रावणत्वादित्यत्र श्रावणत्वमनित्यत्वसाधकम् तत्र किं साधकं, साधकं विना तस्य सिद्धेरभावात् तत्रापि किंचित्साधकप्रदर्शने तत्रापि किंचित्साधकं इति प्रश्नपरंपरासंभव इति । दृष्टान्तान्तरेण साध्याभावसाधकं **प्रतिदृष्टान्तसमा** । यथा यदि घटदृष्टान्तेनानित्यश्शब्दस्तदाकाशदृष्टान्तेन नित्य एव किं नस्यादिति । उत्पत्त्यभावरूपया अनुत्पत्त्या दोषोद्भावनम**नुत्पत्तिसमा** । यथा घटो रूपवान् गन्धात् पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः, पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः । उभयसाधारणधर्मप्रदर्शनपूर्वकसाध्यसंशयोद्भावनम् **संशयसमा** । यथा शब्दोऽनित्यः कार्यत्वाद् घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे चैन्द्रियकत्वं तुल्यं, तथा च यथा कार्यत्वात् निर्णायकादनित्यत्वं निर्णीयते, तथा ऐन्द्रियकत्वात् संशयकारणादनित्यत्वं सन्दिह्यताम् । वाद्युक्तहेतोः साध्याभावसाधकहेत्वन्तरोद्भावनं **प्रकरणसमा** । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात् । हेतुत्वासंभवपूर्वकाहेतुत्वकथनम**हेतुसमा** । यथा घटादिकं दण्डादेर्न पूर्ववर्त्तितया कारणम् तदानीं घटादेरभावात् नापि घटाद्युत्तरकालवर्त्तितया पूर्वं कारणभावात् अविद्यमानो दण्डः कथं घटं जनयेत् नापि समानकालवर्तितया एककालीनत्वाविशेषात्किं कस्य कारणमित्यत्र नियामका भावात्तथा च कारणं अकारणेन सम इति । अर्थापत्तिसिद्धहेतुना साध्याभावोद्भावनम**र्थापत्तिसमा** । अयमाशयः—अर्थापत्तिर्हि उक्तेनानुक्तमाक्षिपति, तथा च शब्दोऽनित्य इत्युक्तेऽर्थादापाद्यतेऽन्यन्नित्यं, तथा च दृष्टान्ताऽसिद्धिर्विरोधश्च । सर्वाविशेषप्रसंगोद्भावनं **अविशेषसमा** । यथा अनित्यत्वेन शब्दघटयोरविशेष उच्यते तदा प्रमेयत्वेन सर्वेषामविशेषप्रसङ्ग इति । उभयपक्षसाधर्म्येण साधनोपपत्तिकथन**मुपपत्तिसमा** । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति, तथा मत्पक्षोऽपि सप्रमाणकः त्वत्पक्षऽमत्पक्षान्यतरत्वात्पक्षवत् वाद्युक्तसा-

धनाभावेऽपि पक्षोपलब्धिकथनमुपलब्धिसमा। यथा पर्वतो वह्निमान् धूमात्युक्ते वह्निर्न धूमसाध्यः धूमं विना आलोकादिनाप्युपलम्भात् तथा धूमो न वह्निसाधको द्रव्यत्वसाधकत्वेनोपलम्भात् तथा पर्वतो न वह्निमान् वह्निविरहिणोऽपि पर्वतस्योपलम्भादित्यादि बोध्यम्। वादिना कस्यचित् पदार्थस्यानुपलब्धिवशादनङ्गीकारेऽनुपलब्धिवशादेव वाद्यभिमतयत्किंचित्पदार्थाभावसाधनमनुपब्धिसमा। शब्दोऽनित्यः, यदि शब्दो नित्यः स्यादुच्चारणात् प्राक् कुतो नोपलभ्यते न हि घटाद्यावरणकुड्यादिवच्छब्दस्यावरणमस्ति तदनुपलब्धेरिति नैयायिकैरुक्ते प्रतिवादी प्रत्यवतिष्ठते यद्यावरणानुपलब्धेरावरणाभावः सिध्यति तदावरणानुपलब्धेरप्यनुलम्भात् तदावरणानुपलब्धेरभावसिद्धौ तद्विपरीतस्य तदावरणस्योपपत्तेस्तन्नित्यत्वमेव स्यादिति। धर्मस्य नित्यानित्यत्वविकल्पात् धर्मिणो नित्यत्वसाधनं नित्यसमा। अनित्यत्वस्य नित्यमस्वीकारे तदभावदशायां नित्य एव शब्दः स्यात् न हि दण्डाभावशून्यतादशायां न दण्डीति प्रयुज्यत इत्थनित्यत्वं नित्यमेवास्तीत्युपगन्तव्यम्। तथा च शब्दस्यापि नित्यत्वमन्यथा तत्रानित्यत्वस्य सर्वकालवृत्तित्वासंभवादिति अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसंगोद्भावनं अनित्यसमा। सत्वरूपघटादिसाधर्म्येण सर्वानित्यत्वप्रसङ्गः। अन्यकार्येणापि वाद्युक्तहेतोः संभवाभिधान कार्यसमा। शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति प्रयोगे प्रयत्नान्तरीयकत्वं प्रयत्नकार्ये घटादौ प्रयत्नानन्तरोपलभ्यमाने कीलकादौ च दृष्टम् तत्र द्वितीयं न तज्जन्यत्वसाधकम्, प्रथमं त्वसिद्धम्।

दी०—वादिनोऽपजयहेतुर्निग्रहस्थानम्। प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम, निरर्थकम् अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालं, न्यूनं, अधिकम्, पुनरुक्तम्, अननुभाषणम, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि। शेषं सुगमम्।

सं०—वादिनि इति । तथा च वादिनिष्ठपराजयसंपादकत्वं निग्रहस्थानसामान्यलक्षणम् । तस्य द्वाविंशति भेदानाह प्रतिज्ञाहानिरित्यादिना । यत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा तत्र प्रतिज्ञाहानिः । यथा 'शब्दोऽनित्यः प्रत्यक्षगुणत्वात्' इत्यत्र 'सोयं गकारः' इत्यादि प्रत्यभिज्ञाबलात्परेण बाधे उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन् वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति । इयञ्च पक्षत्यागस्साध्यत्यागो हेतुत्यागो दृष्टान्तत्यागः तद्विशेषणत्यागश्चेति पञ्चधा भवति । आद्यस्तु शब्दोऽनित्यः प्रयत्नजन्यगुणत्वात् इत्युक्ते केनिचद् सोयं गकार इति प्रत्यभिज्ञाबलात् बाधे उद्भाविते अस्तु तर्हि घटोऽनित्यः इति पक्षत्यागः । पूर्वोक्तदोषाच्च शब्दो नित्य एवेति स्वीकारे साध्यत्यागः अनित्यः शब्दः द्रव्यत्वादित्युक्ते परेण स्वरूपासिद्धोऽयमिति दूषिते कृतकत्वादिति पुनर्हेतुप्रयोगे हेतुत्यागः दृष्टान्तत्यागस्तु उदाहृतः । एवमेव द्रव्यात्मकशब्दः अनित्यः कृतकत्वादित्यत्राश्रयासिद्धेरुद्भावने अस्तु तर्हि शब्दोऽनित्य इति पक्षविशेषणत्यागः । एवमेव साध्यविशेषणत्यागः । एवमेव हेतुविशेषणत्यागादिकमिति बोध्यम् । प्रतिज्ञान्तरमिति । पूर्वोक्तप्रतिज्ञायां दूपितायां तत्र विशेषणान्तरदानम् प्रतिज्ञान्तरमित्यर्थः । तद्विविधम् पक्षविशेषणदानात् साध्यविशेषणदानाच्च । यथा शब्दोऽनित्य इत्यत्र ध्वनावंशतस्सिद्धसाधने उद्भाविते वर्णरूपेति पक्षविशेषणदानम् । अन्त्यं यथा क्षित्यादिकं गुणजन्यं कार्यत्वादित्यत्रादृष्टजन्यत्वेन सिद्धसाधने उद्भाविते सविषयकेति गुणविशेषणदानमिति । प्रतिज्ञाविरोध इति । प्रतिज्ञाहेत्वोः विरोधः । प्रतिज्ञाविरोध इत्यर्थः । यथा द्रव्यं गुणभिन्नं रूपत्वादित्यादि । प्रतिज्ञासंन्यास इति । स्वयं प्रतिज्ञातस्यापह्नवः प्रतिज्ञासंन्यासः । यथा अनित्यः शब्दः इन्द्रियवेद्यत्वादित्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते केनोच्यते अनित्यश्शब्द इति स्वोक्तमपलपति । तत्रापह्नवश्चतुर्विधो भवति । क एवं माह इत्येकः । परमतानुवादोऽयं मया इदमेवोक्तमिति द्वितीयः । त्वयमुक्तेऽपि एवमुक्तमिति त्वं वदेति तृतीयः । तत्परोक्तं मया इदमेवोक्तमिति चतुर्थः ।

हेत्वन्तरमिति। शुद्धहेतौ दूषिते तत्र विशेषणान्तरोपादानं हेत्वन्तरम्। यथा शब्दोऽनित्यः। प्रत्यक्षत्वादित्यत्र सामान्ये व्यभिचारे उद्भाविते जातिमत्त्वे सतीति विशेषणदानम्। अर्थान्तरमिति। प्रयुक्तस्यानुपयुक्तार्थकथनं अर्थान्तरमित्यर्थः। यथा (रसं सैन्धववत्त्वात् इत्युक्ते नाश्वे रसोऽस्तीति दूषणमिति)। नित्यः शब्दः अस्पर्शवत्त्वादित्युक्ते हेतुरिति पदं हिनोतेस्तुनिप्रत्यये कृते कृदन्तम्। पदं च सुप्तिङन्तमित्याद्यर्थान्तरकथनम्॥ निरर्थकमिति। अवाचकवर्णप्रयोगो निरर्थकमित्यर्थः। यथा शब्दोऽनित्यः जबगडदशत्वात् झभघढधषिति वत्। अथवाऽसाधुशब्दप्रयोगो निरर्थकमित्यर्थः। यथा शब्दमनित्यमित्यादि। अविज्ञातार्थकमिति। वादिना वारत्रयमुक्तमपि प्रतिवादिना सदस्यैरपि यन्न बुध्यते तदविज्ञातार्थकमित्यर्थः। तच्चासिद्धार्थकं त्वरितोच्चरितं लाक्षणिकमित्यादिरूपं स्वसामर्थ्यवारणार्थं प्रयुक्तमिति। अपार्थकमिति। परस्परानन्वितार्थकपदसमूहोऽपार्थकमित्यर्थः। यथा शब्दः शब्दत्वं घटः पटो वा नित्यमनित्यञ्च परत्वादित्यादि। अप्राप्तकालमिति। अवयवानां व्युत्क्रमेण कथनमप्राप्तकालमित्यर्थः। यथा कृतकत्वाच्छब्दोऽनित्य इत्यादि। न्यूनमिति। स्वमतसिद्धावयवानां मध्ये एकस्यानुक्तिः न्यूनमित्यर्थः। उदाहरणन्तु स्फुटम्। अधिकमिति। अनन्वितानुपयुक्तपुनरुक्तभिन्नस्य सिद्धप्रयोजनस्य पुनः कथनमधिकमित्यर्थः। हेतूदाहरणधिक्यमिति वा। यथा शब्दोऽनित्यः श्रावणत्वाच्छब्दत्वाच्चेति। एवमुदाहरणद्वयेऽपि बोध्यम्। पुनरुक्तमिति वादिमध्यस्थानुमितिं बिना शब्दार्थयोः पुनः कथनम् पुनरुक्तमित्यर्थः। यथा 'शब्दोऽनित्यः शब्दोऽनित्य इति' शब्दपुनरुक्तम्। शब्दोऽनित्यः ध्वंसप्रतियोगीत्यर्थपुनरुक्तम्। अननुभाषणमिति। वादिना त्रिरुक्तस्य वाक्यस्य सदस्यैर्विज्ञातार्थस्याननुवादोऽननुभाषणमित्यर्थः। उदाहरणं स्पष्टम्। अज्ञानमिति। वादिना त्रिरुक्तवाक्यस्य सदस्यैः ज्ञातार्थस्यार्थानवबोधोऽज्ञानमित्यर्थः। स्पष्टम्। अप्रतिभेति। प्रतिवादिनानूदिते वादिवाक्ये तदर्थे विज्ञातेऽपि उत्तरास्फूर्तिवशात् तूष्णींभावोऽप्रतिभेत्यर्थः। स्पष्टम्। विक्षेप इति। असम्भवत्का-

र्थान्तरव्यासङ्गात् कथाविच्छेदो विक्षेपः। यथा इदमेकं कार्यन्तिष्ठति तत्कृत्वाऽवशिष्टं करिष्यामीति। **मतानुज्ञेति**। स्वपक्षे दोषाभ्युपगमपूर्वकं परपक्षे दोषप्रसञ्जनं मतानुज्ञेत्यर्थः यथा त्वं चोर इत्युक्ते त्वमपि चोर इत्युक्तम्। **पर्यनुयोज्योपेक्षणमिति**। वादिनो निग्रहस्थानसत्वेऽपि प्रतिवादिनस्तदनुद्भावनं पर्यनुयोज्योपेक्षणमित्यर्थः। इदमपि स्पष्टम्। **निरनुयोज्यानुयोग इति**। अनिग्रहे भ्रान्त्या निग्रहोद्भावनमित्यर्थः। छलजात्योरेतन्मध्ये अन्तर्भाव इति। **अपसिद्धान्त इति**। एकसिद्धान्तमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमवलम्ब्य उत्तरदानमित्यर्थः यथा व्यक्तमेकप्रकृतिकं विकारत्वात् एकमृत्पिण्डवृत्तिघटकलशवदिति सांख्यमतमवलम्ब्य प्रयुक्ते का प्रकृतिः को विकार इति प्रतिवादिना पृष्टे यस्मिन् धर्मण्यवस्थिते एकधर्मनिवृत्तौ धर्मान्तरमुत्पद्यते सा प्रकृतिः यो धर्मो निवर्त्तते उत्पाद्यते च स विकार इति वादिनोक्ते पुनः प्रतिवादी वदति—अपसिद्धान्तः। तव मते असतः उत्पत्त्यभावात् सतो विनाशाभावाच्च किन्त्वाविर्भावतिरोभावमात्रं कार्यकारणयोरभेदात्। कारणरूपेण सूक्ष्मतया अवस्थितिः तिरोभावः। कार्यरूपेण स्थूलतयावस्थानमाविर्भाव इति। सत्कार्यवादिमते प्रकृतिविकारयोः उद्भवाभावात् इदमनुमानं न सिध्यति, असतः कार्यतावादे त्वपसिद्धान्त इति। **हेत्वाभासाश्चेति**। तल्लक्षणं तु प्रागुक्तम्। **निग्रहस्थानानीति**। द्वाविंशतिधा भवन्तीति। शेषः। ननु निग्रहस्थानानां द्वाविंशतिधा विभागेऽपि अन्तर्भावानुक्तेः न्यूनतेत्यत आह— शेपमिति। क्लृप्तपदार्थान्तर्भूतत्वमित्यर्थः। सुगममिति। तेषां मध्ये केषांचित् शब्दविशेषरूपत्वात्। गुणान्तर्भूतत्वं, केषांचित् द्रव्यान्तर्भूतत्वं केषांचित् अभावान्तर्भूतत्वं अनायासेन ज्ञातुं शक्यत इत्यर्थः।

दी०—ननु करतलाऽनलसंयोगे सत्यपि प्रतिबन्धके सति दाहानुत्पत्तेः शक्तिः पदार्थान्तरमिति चेन्न। प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात् कारणत्वस्यैव शक्तिपदार्थत्वात्।

शं०—ननु दाहं प्रति शक्तिमत्वेन वन्हेः कारणत्वम्, न तु वन्हित्वेन, तथा सति मणिसमवधाने दाहाऽऽपत्तेः। शक्तिमद्वन्हेः कारणत्वे तु "मणिसमवधानकाले शक्तेर्नाशात्" विशिष्टकारणाऽभावान्न तदापत्तिरिति कारणतावच्छेदकतया शक्तिः स्वीकार्येति प्रभाकरमतमुपन्यस्यति। नन्वित्यादिना। **करतलाऽनलसंयोगे सत्यपीति**। इदं च दाहकारणसत्त्वप्रदर्शनाय। **प्रतिबन्धके सतीति**। इदं च कारणतावच्छेदकविरहप्रदर्शनाय। **दाहानुत्पत्तेः**। दाहोत्पत्त्यभावात्। अत्र करतलदाहो यदि करतलानलसंयोगमात्रजन्यः स्यात् तदा प्रतिबन्धके सत्यपि स्यात् इति तर्कोऽनुसन्धेयः। प्रतिबन्धकत्वं न कार्यानुकूलशक्तिविघटकत्वम् किन्तु कारणीभूताभावप्रतियोगित्वम्, तथा च मणेः प्रतिबन्धकत्वेन तदभावरूपकारणान्तरविरहादेव दाहानुत्पत्तिसंभवेऽतिरिक्तशक्तिस्वीकारोऽनुचित इत्याशयेन समाधत्ते। **प्रतिबन्धकाभावस्येति शक्तेरनुपयोगादिति**। शक्तेरप्रमाणिकत्वादित्यर्थः नन्वेवं वन्हौ स्वभाविकी दहनशक्तिरिति। प्रवादोऽव्याहन्येतेत्यत आह **कारणत्वस्यैवेति**। दाहकारणत्वस्यैवेत्यर्थः।

दी०—ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादाधेयशक्तिरङ्गीकार्येति चेन्न। भस्मादिसंयोगसमानकालीनाऽस्पृश्यस्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वात्।

शं०—एतावता सहजशक्तिं निरस्याऽऽधेयशक्तिं निरसितुं तन्मतमुपन्यस्यति। **नन्वित्यादिना भस्मादिनेति**। आदिनाऽम्लादेः परिग्रहः। **कांस्यादाविति**। आदिना ताम्रादेः परिग्रहः "भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति। गोमयाच्छुद्ध्यते भूमिः नारी तु रजसा तथा" इति वचनात् शुद्धेर्भस्मादिजन्यत्वप्रतिपादनात् **अङ्गीकार्येति**। कांस्यादेरस्पृश्यवस्तुस्पर्शे सति न कार्यक्षमता, शक्तिमत्कांस्यादेरेव तद्योग्यत्वात्, अस्पृश्यस्पर्शे सति शक्तेर्नाशात्, भस्मसंयोगे तु पुनः शक्तेरुत्पादात्तद्योग्यता तथा च कांस्यादौ आधेयशक्तिः स्वीकार्येति भावः। भस्मादि-

**संयोगेत्यादि ।** भस्मादिसंयोगसमानकालीनाः यावन्तः अस्पृश्यस्पर्शप्रतियोगिकाऽभावाः तत्समुदायविशिष्टभस्मादिसंयोगध्वंसस्येत्यर्थः ।

तथा च भस्मादिसंयोगध्वंसविशिष्टकूटत्वावच्छिन्नाधिकरणत्वं शुद्धिपदार्थः । कूटत्वे तादृशसंयोगध्वंस वै० स्वाधिकरणकालनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्व, स्वप्रतियोगिभस्मादिसंयोगकालीनाऽस्पृश्यस्पर्शसंसर्गाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वोभयसंबन्धेनेति ।

दी०—स्वत्वमपि न पदार्थान्तरम् । यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात् । तदवच्छेदकं च प्रतिग्रहादि लब्धत्वमेवेति ।

गं०—स्वत्वं तावत्पदार्थान्तरम्, मम स्वत्वम्, तव स्वत्वम्, ब्रह्मस्वम्, इति प्रतीतिसिद्धम्, षष्ठीवाच्यम् । तच्च स्वरूपसंबन्धेन स्वर्णादिनिष्ठम् । स्वर्णे स्वत्वमितिप्रतीतेः । निरूपकतासंबन्धेन स्वामिनिष्ठम् । तच्च न द्रव्यगुणकर्मस्वरूपं गुणवृत्तित्वात् । नापि सामान्यविशेषसमवायाद्यन्यतमस्वरूपं आपत्तिमत्त्वे सति विनाशित्वात्, अतएव नाऽभावस्वरूपं भावत्वेन प्रतीयमानत्वाच्चेत्यत आह । **न पदार्थान्तरमिति ।** तत्त्वे प्रमाणाऽभावादिति शेषः । ननु तर्हि स्वत्वं किं स्वरूपमित्यत आह । **यथेष्टविनियोगयोग्यत्वमिति ।** योग्यतानियामकमाह । **तदवच्छेदकं चेति ।** योग्यतानियामकं चेत्यर्थः । **प्रतिग्रहादिति ।** आदिना विक्रयादिपरिग्रहः । तथा च मानाभावात् स्वत्वं न पदार्थान्तरमिति भावः ।

दी०—अथ विधिर्निरूप्यते— प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः तत्प्रतिपादको लिङादिर्वा ।

गं०—प्रसंगसंगत्या विधिनिरूपणं प्रतिजानीते । **अथेति । अथ**—पदार्थानां सप्तविधत्वव्यवस्थापनानन्तरम् । मयेत्यध्याहार्यम् । तथा च पदार्थनिष्ठसप्तविधत्वव्यवस्थापनान्तरमत्समवेतकृतिजन्यवर्त्तमानकालाव्यवहितोत्तरकालवृत्तिज्ञानानुकूलव्यापारनिरूपितविषयतावान् विधिरिति बोधः ।

लिङर्थो विधिः, विध्यर्थश्च कृतिसाध्यत्वम्, इष्टसाधनत्वम्, बलवदनिष्टान-नुबन्धित्वं च। कथमिति चेत्तदाह। प्रयत्नेति। प्रयत्नपदं चाऽत्र प्रवृत्तिपरम्। तथा च प्रवृत्तिजनिका या चिकीर्षा तज्जनकं यद् ज्ञानं तद्विषय इत्यर्थः। तथाहि। प्रवृत्तिं प्रति चिकीर्षा कारणम्, चिकीर्षा च कृतिसाध्यत्वप्रकारिका इच्छा "सा च पाको मत्कृतिसाध्यो भवतु इत्याकारिका—पाकं कृत्या साधयामी-त्याकारिका वा" तत्र पाको मत्कृतिसाध्यः—पाको मदिष्टसाधनं पाकोबलवद-निष्टाननुबन्धीति पाकविशेष्यककृतिसाध्यत्वप्रकारकस्य इष्टसाधनत्वप्रकारकस्य बलवदनिष्टाननुबन्धित्वप्रकारकस्य च ज्ञानत्रयस्यैव कारणत्वं विनिगमना-विरहात्। तादृशज्ञानविषयत्वं कृतिसाध्यत्वे-इष्टसाधनत्वे बलवदनिष्टाननु-बन्धित्वे च, तान्येव विधिप्रतिपाद्यानि। तथा च प्रवर्त्तकचिकीर्षाजनकताव-च्छेदकप्रकारताश्रयत्वं विधित्वं पर्यवसितम्। धात्वर्थमुख्यविशेष्यकश्चात्र बोधः। तथा च यजेतेत्यत्र यागः कृतिसाध्यः इष्टसाधनम्, बलवदनिष्टाननु-बन्धी चेति बोधः। तत्प्रतिपादकः तादृशविषयप्रतिपादकः। लिङा-दिर्वा—विधिरित्यर्थः।

दी०—कृत्यसाध्ये प्रवृत्त्यदर्शनात् कृतिसाध्ये प्रवृत्तिदर्शनात् कृतिसाध्यताज्ञानं प्रवर्त्तकम्। न च विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले, विहितकालशु-चिजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले, प्रवर्त्तकत्वात्। न चाननुगमः। स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्यानुगतत्वादिति गुरवः।

शं०—प्राभाकरमतमुपन्यस्य दूषयति। कृत्यसाध्ये। चन्द्रमण्डलाऽऽ-नयनादौ। प्रवृत्त्यदर्शनादिति। प्रवृत्तिविरहादित्यर्थः। प्रवर्त्तकमिति। प्रवृत्तिजनकमित्यर्थः। तथा चाऽन्वयव्यतिरेकाभ्यां कृतिसाध्यताज्ञानमेव प्रवृत्तिकारणमिति भावः। न चेति। प्रवृत्तिप्रसंग इत्यनेनाऽन्वयः। कृतिसाध्यताज्ञानस्य सत्वादिति शेषः। निराचष्टे। इष्टसाधनतालिंग-

केति। काम्यस्थले इति। अस्य प्रवर्त्तकत्वादित्यनेनाऽन्वयः। ज्योतिष्टोम-यागादावित्यर्थः। तथा च काम्यं मत्कृतिसाध्यं मत्कृतिं विना असत्त्वे सति बलवदनिष्टाऽननुबन्धित्वे सति इष्टसाधनत्वात् यन्नैवं तन्नैवं यथा चैत्यवन्दनम् इत्यनुमानाधीनकृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वान्न विषभक्षणादौ प्रवृत्त्यापत्तिः, तत्र बलवदनिष्टाननुबन्धित्वरूपविशेषणाभावात्। नित्ये प्रवर्त्तकमाह। विहितकालेत्यादि। विहितकालशुचिजीवित्वज्ञानजन्यस्य कृतिसाध्यता-ज्ञानस्य नित्ये प्रवर्त्तकत्वात्, "अशौचादिरूप" निमित्तज्ञानाधीनस्य तस्य नैमित्तिके प्रवर्त्तकत्वादित्यर्थः। तथा च अहमेतत्कालिककृतिसाध्यसन्ध्या-वन्दनकः एतत्कालिकशुचिजीवित्वात् यन्नैवं तन्नैवं यथा बौद्धः इति रीत्या कृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वादिति यावत् अननुगम इति। प्रवृत्तिसामा-न्यप्रयोजकस्यैवाऽभावादिति भावः। स्वविशेषणेति। स्वं प्रवृत्त्याश्रयः पुरुषः तद्विशेषणं तत्र वर्त्तमानः स्वाभिमतो धर्मः। स च काम्ये कामना नित्ये कालशौचादि। तद्वत्ता तत्संबन्धः, "स्वविषयसाधनत्वरूपः" तत्प्रति-सन्धानं तन्निश्चयः लिंगविधया तज्जन्यत्वस्येत्यर्थः। अनुगतत्वादिति। तथा च तज्जन्यत्वेन निखिलकृतिसाध्यत्वप्रकारकाऽनुमितीनामनुगमादिति भावः।

दी०—तन्न। लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकी-र्षाद्वारा प्रयत्नजनकत्वात्। न च नित्ये इष्टसाधनत्वाभावादप्रवृत्तिप्र-सङ्गः। तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात्। तस्मात्कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः।

गं०—दूषयति। तन्नेति। लाघवेनेति। कारणतावच्छेदकलाघवात्। व्याप्तिज्ञानाद्यकल्पनाच्च। कृतिसाध्येष्टसाधनताज्ञानस्यैवेति। इदमु-पलक्षणम्। बलवदनिष्टाननुबन्धित्वज्ञानस्यापि प्रवर्त्तकत्वं बोध्यम्। एवकारेण स्वविशेषणवत्ताप्रतिसन्धानजन्यकृतिसाध्यताज्ञानस्य कारणत्वव्यवच्छेदः। प्रयत्नजनकत्वात्। प्रवृत्तिजनकत्वात्। अप्रवृत्तिप्रसंगः। प्रवृत्त्यभाव-प्रसंगः। इष्टसाधनताज्ञानस्य कारणतया "इष्टानुत्पत्त्या" कारणाभावात्प्रवृत्ति-

र्न स्यादिति भावः। प्रत्यवायपरिहारस्य। पापप्रागभावस्य। पापक्षयस्य चेति। चकारः पूर्वकल्पेऽस्वरससूचनाय। तथा च 'सन्ध्यामुपासते ये तु सततं संश्रितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्' इति वचनेन पापनाशस्य ब्रह्मलोकावाप्तेः फलत्वप्रतिपादनादिति भावः। उपसंहरति। तस्मादिति।

दी०—ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र लिङा स्वर्गसाधनकार्यं प्रतीयते यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायि कार्यमपूर्वमेव लिङाद्यर्थः। कार्यं कृतिसाध्यम्। कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति। 'कस्य कार्यम्' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयाऽन्वेति। कार्यभोक्ता नियोज्यः तेन 'ज्योतिष्टोमनामकयागविषयं स्वर्गकामस्य कार्यम्। इति वाक्यार्थः संपद्यते। वैदिकलिङ्त्वात् यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं इति कल्प्यते। "आरोग्यकामोभेषजपानं कुर्यात्" इत्यादि लौकिकलिङः क्रियाकार्ये लक्षणा इति चेत् न। यागस्याप्ययोग्यतानिश्चयाभावेन साधनतया प्रतीत्यनन्तरं निर्वाहार्थं अवान्तरव्यापारतयाऽपूर्वकल्पनात्। कीर्त्तनादिना नाशश्रुतेर्न यागध्वंसो व्यापारः। लोकव्युत्पत्तिबलात् क्रियायामेव कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम्। आख्यातत्वेन यत्नार्थकत्वम्। पचति पाकं करोतीति विवरणदर्शनात्, किं करोतीति प्रश्ने पचतीत्युत्तराच्चाख्यातस्य प्रयत्नार्थकत्वनिश्चयात्।

गं०—अपूर्वे एव लिङादेः शक्तिरिति मतमुपन्यस्यति। नन्विति। स्वर्गसाधनकार्यमिति। स्वर्गं प्रति व्यापारविधया कारणं कार्यं-कृतिसाध्यतावत्। प्रतीयते शक्त्या बोध्यते। तथा च कार्यं "कृतिसाध्यत्वप्र-

कारकधीविशेष्ये अपूर्वे इति यावत्" लिङादीनां शक्तिरिति भावः। तत्र हेतुमाह। **यागस्येति**। **स्थायि**। फलपर्यन्तस्थायि। कार्यपदार्थमाह। **कृतिसाध्यमिति**। कृतिजन्यमित्यर्थः। **कस्य कार्यमिति**। कीदृशपुरुषस्य कृतिसाध्यमित्यर्थः। **अन्वेतीति**। तथा च स्वर्गकामपदार्थस्य समवेतत्वसंबन्धेन कृतावन्वय इति भावः। **कार्यभोक्तेति**। स्वर्गादिरूपफलभोक्तेत्यर्थः। कुत्रचित् कार्यबोद्धेति पाठः। तत्र इदं मत्कृतिसाध्यमिति ज्ञानवानित्यर्थः। **नित्यवाक्ये इति**। नित्यवाक्यघटकलिङ्पदस्यापीत्यर्थः **अपूर्वमेव वाच्यमिति**। अपूर्वं वाच्यमेवेति योजना। **कल्प्यते**। अनुमीयते इत्यर्थः यावज्जीवमित्यादिश्रुतिघटकलिङ्पदं अपूर्ववाचकं वैदिकलिङ्त्वात् वैदिकलिङन्तरवदित्यनुमानम्। **क्रियाकार्ये इति**। कृतिसाध्यत्वे इत्यर्थः। यागध्वंसस्य व्यापारत्वं निरस्यति। **कीर्तनादिनेति**। अधिकं अदृष्टनिरूपणे द्रष्टव्यम्। **क्रियायामेवेति**। धात्वर्थविशेष्यककृतिसाध्यत्वादिप्रकारकबोधो लिङा जायते इत्यर्थः।

ननु तर्हि प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधानुपपत्तिरित्यत आह। **लिङ्त्वेनीति**। तृतीयार्थोऽवच्छिन्नत्वम्। लिङ्निष्ठेष्टसाधनत्वादिनिरूपितशक्तता लिङ्त्वावच्छिन्नेत्यर्थः। **आख्यातत्वेनेति**। लिङ्निष्ठा कृतिनिरूपितशक्तता आख्यातत्वावच्छिन्नेत्यर्थः। तथा च लिङ्त्वेनेष्टसाधनत्वादिबोधनेऽपि आख्यातत्वेन रूपेण कृतेरपि बोधनात् कृतिसाध्येष्टसाधनयागानुकूलकृतिमानित्याकारकप्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्य नानुपपत्तिरिति भावः। ननु आख्यातस्य यत्नार्थकत्वे किं मानमित्यत आह। **पचतीति**। विवरणं च तत्समानार्थकपदान्तरेण तदर्थकथनम्। पाकं करोतीति वाक्यघटकद्वितीयान्तपाकपदज्ञानजन्यपाकत्वावच्छिन्नविषयकबोधात्, एतादृशवाक्यघटककृञ्धातुपदज्ञानजन्यकृतित्वावच्छिन्नविषयकबोधाच्च, पचधातोः पाकत्वावच्छिन्ने शक्तिग्रहः आख्यातस्य कृतौ शक्तिग्रहः। पाकपदेन पचधातोर्विवरणं दृष्टान्तार्थम्। आख्यातं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टशक्तकरोतिप्रतिपादितार्थप्रतिपादकत्वात्, यद्धर्मावच्छिन्नपदप्रतिपादितार्थप्रतिपा-

दकं भवति तत्तद्धर्मावच्छिन्नशक्तं पाकपदेन विवृतपच्धातुवत्। प्रश्नोत्तरान्यथानुपपत्याऽपि आख्यातं यत्नत्वावच्छिन्ने शक्तमित्याह। **किं करोतीति प्रश्ने इति।** किंविषयकयत्नवानयमिति जिज्ञासाबोधकशब्दप्रयोगे कृते सतीत्यर्थः। **पचतीत्युत्तरादिति।** पाकविषयकयत्नवानित्युत्तरादित्यर्थः। वस्तुविशेषविषयकयत्नजिज्ञासायाः वस्तुविशेषविषयकयत्नार्थकपदघटितोत्तरवाक्यं विना निवृत्त्यसंभवादाख्यातस्य यत्नार्थकत्वमावश्यकमिति भावः।

**दी०—रथो गच्छतीत्यादौ अनुकूलव्यापारे लक्षणा।**

गं०—ननु लकारसामान्यस्य न कृतौ शक्तिः, रथो गच्छतीत्यादौ रथे कृत्यभावेनाऽऽख्यातस्य व्यापारे लक्षणाऽऽपत्तेः, किन्तु व्यापारमात्रे शक्तिः, रथो गच्छतीत्यादावपि गमनानुकूलव्यापारस्य रथे सत्वेन शक्त्यैव बोधोपपत्तेरिति मीमांसकमतं निरस्यति। **रथो गच्छतीत्यादाविति।** आदिना घटो नश्यति जानातीत्यादेः परिग्रहः। **व्यापारे इति।** इदमुपलक्षणम्। नश्यतीत्यत्र आख्यातस्य प्रतियोगित्वे—जानातीत्यत्र आश्रयत्वे निरूढलक्षणा बोध्या।

इदमत्रबोध्यम्। चैत्रो ग्रामं गच्छतीत्यत्र कर्मत्वं द्वितीयार्थः "कर्मणि द्वितीयेत्यत्र कर्मणीति भावप्रधाननिर्देशतया कर्मत्वे द्वितीयाविधानात्" कर्मत्वं च क्रियाजन्यफलशालित्वम्, "क्रिया धात्वर्थः"—सा च प्रकृते गमनम्, तच्च उत्तरदेशसंयोगानुकूलोव्यापारः। व्यापारमात्रं वा। तथाचाऽत्र क्रियापदेन तादृशव्यापारो गृह्यते, तज्जन्यं फलं उत्तरदेशसंयोगात्मकं तदाश्रयत्वस्य ग्रामे सत्वात् ग्रामस्य कर्मत्वम्। तथा च द्वितीयार्थे कर्मत्वे प्रकृत्यर्थस्य ग्रामस्याऽऽधेयतयाऽन्वयः। कर्मत्वस्य "उत्तरदेश संयोगस्य" अनुकूलत्वसंबन्धेन धात्वर्थे "व्यापारे"ऽन्वयः। तस्य अनुकूलत्वसंबन्धेनाऽऽख्यातार्थकृतावन्वयः। तस्याः समवायसंबन्धेन प्रथमान्तपदार्थे चैत्रादावन्वयः। तथा च ग्रामकर्मकगमनानुकूलकृतिमांश्चैत्र इति बोधः।

चैत्रेण गम्यते ग्राम इत्यत्र, कृतिस्तृतीयार्थः। तस्यामाधेयतासंबन्धेन

प्रकृत्यर्थस्य चैत्रादेरन्वयः। तस्याश्च जन्यतासंबन्धेन धात्वर्थगमने। तस्य आख्यातार्थकर्मत्वे "फले" जन्यतासंबन्धेनाऽन्वयः। तस्य आश्रयतासंबन्धेन ग्रामेऽन्वयः। तथा च चैत्रवृत्तिकृतिजन्यव्यापारजन्यफलाश्रयो ग्राम इति बोधः।

दी०—देवदत्तः पचति, देवदत्तेन पच्यते तण्डुलः, इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम्, किन्तु तद्गतैकत्वादीनामेव। तयोराक्षेपादेव लाभः।

गं०—वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरङ्गीक्रियते। तेषामयमभिप्रायः। लः कर्मणि च भावेचाऽकर्मकेभ्य इति सूत्रे कर्तरिकृदिति सूत्रस्थं कर्त्तरीति पदमनुवर्त्य— सकर्मकधातुसमभिव्याहृतलकाराः कर्तृकर्मवाचकाः स्युः। अकर्मकधातुसमभिव्याहृतलकाराः भावकर्तृवाचकास्युरित्यर्थः स्वीक्रियते। तथा च देवदत्तस्तण्डुलं पचतीत्यत्र आख्यातार्थः कर्त्ता, तस्याऽभेदेन प्रथमान्तपदार्थे कर्त्तरि अन्वयः। एवं च तण्डुलकर्मकः देवदत्ताऽभिन्नैककर्तृको विक्लित्यनुकूलो व्यापार इति धात्वर्थमुख्यविशेष्यको बोधः। चैत्रेण पच्यत तण्डुल इत्यत्रापि आख्यातार्थः कर्म, तस्य अभेदेन प्रथमान्ततण्डुलपदार्थेऽन्वयः। शाब्दबोधस्तु तथैव। चैत्र स्तिष्ठतीत्यादौ च चैत्रकर्तृकास्थितिरिति बोधः। तथा चैतन्मते आख्यातस्य कर्त्तरि कर्मणि च शक्तिः।

शक्यतावच्छेदकं कर्तृत्वम्, तच्च कृतिमत्त्वम्, कृतिरेवेति यावत्। शक्यतावच्छेदकीभूतकृतीनामानन्त्येन गौरवम्, अतो नैयायिकैः कृतौ "कर्मत्वे च" आख्यातस्य शक्तिः स्वीक्रियते। कृतित्वजातेः शक्यतावच्छेदकत्वे लाघवादिति।

ननु आख्यातस्य कृतौ "कर्मत्वे" च शक्तिस्वीकारे चैत्रः पचतीत्यत्र चैत्रपदोत्तरं तृतीया स्यात्, आख्यातेन कर्त्तुरनभिधानात्। एवं पच्यते तण्डुल इत्यत्र तण्डुलपदोत्तरं द्वितीया स्यात्, आख्यातेन कर्मानभिधानादित्यत आह। देवदत्त इति। इत्यादाविति। घटकत्वं सप्तम्यर्थः।

तस्याऽऽख्यातेऽन्वयः। तथा च कर्त्तुः कर्मणश्च नाऽऽख्यतार्थत्वमिति भावः। नन्वेवमुक्ततृतीयाद्वितीययोरापत्तिरित्यत आह। किन्त्विति। तद्गतैकत्वादीनामेवेति। कर्त्तृकर्मगतैकत्वादीनामेवेत्यर्थः। आख्यातार्थत्वमित्यनुवर्त्तनीयम्। आदिपदाद् द्वित्वबहुत्वयोः परिग्रहः। तथा च यत्र आख्यातेन कर्त्तृगतसंख्या नाऽभिधीयते तत्र तृतीयेत्यनुशासनार्थत्वात्, एवं यत्र आख्यातेन कर्मगतसंख्या नाऽभिधीयते तत्र द्वितीयेत्यनुशासनार्थत्वाच्च नोक्तस्थले तृतीयाद्वितीययोरापत्तिरिति ध्येयम्। नन्वेवं देवदत्तः पचतीति वाक्यात् कर्त्तृकर्मणोः शाब्दबोधो न स्यात्, तयोराख्यातेनाऽनुपस्थितेरित्यत आह। तयोरिति। कर्त्तृकर्मणोरित्यर्थः। आक्षेपादेवेति। प्रथमान्तकर्त्तृकर्मवाचकपदसमभिव्याहारादेवेत्यर्थः। लाभः। शाब्दबोधः। भवतीति शेषः।

दी०—प्रजयतीत्यादौ धातोरेव प्रकर्षे शक्तिः। उपसर्गाणां द्योतकत्वमेव न तत्र शक्तिः।

वा०—उपसर्गाणां द्योतकत्वमाह। प्रजयतीत्यादाविति। आदिना पराजयते इत्यादेः परिग्रहः। धातोरेवेति। जिधातोरेवेत्यर्थः। एवकारेण प्रेत्युपसर्गस्य शक्तताव्यवच्छेदः। प्रकर्षे शक्तिरिति। प्रकर्षेऽपि शक्तिरित्यर्थः। प्रकृष्टजये शक्तिरिति यावत्। ननु प्रादेर्निरर्थकत्वे कथं न जयतीत्येव प्रयोग इत्यत आह। द्योतकत्वमेवेति। तात्पर्यग्राहकत्वमेवेत्यर्थः। उपसर्गेण धात्वर्थो बलादन्यत्र नीयते प्रहाराऽऽहारसंहारविहारपरिहारवदिति। हरिकारिकाऽपि द्योतकत्वं व्यवस्थापयतीति, उपसर्गभिन्ननिपातानां तु वाचकत्वमिष्यते। यथा एवकारस्य अन्ययोगव्यवच्छेदे शक्तिः।

दी०—पदार्थज्ञानस्य परमप्रयोजनं मोक्षः। तथा हि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्या श्रवणादीनां तत्वसाक्षात्कारे हेतुत्वबोधनात्। श्रुत्या देहादिविलक्षणाऽऽत्मज्ञाने सत्यपि, असंभावनानिवृत्तेः युक्त्यनुसन्धानरूपमनन-

साध्यत्वात्। मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्याऽपि मोक्षो-पयोगित्वम्। तदनन्तरं श्रुत्योपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहादिविलक्षणाऽऽत्मसाक्षात्कारे सति देहादौ अहमभिमा-नरूपमिथ्याज्ञाननाशे सति दोषाऽभावात् प्रवृत्त्यभावे धर्माऽधर्मयोर-भावाज्जन्माभावे पूर्वधर्माधर्मयोरनुभवेन नाशे चरमदुःखध्वंसरूपो मोक्षो जायते। ज्ञानमेव मोक्षसाधनम् मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्र-साध्यत्वात्। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽ-नाय" इति साधनान्तरनिषेधाच्च।

गं०—पदार्थज्ञानजनकन्यायशास्त्रस्य प्रयोजनवत्तां दर्शयति। पदार्थ-ज्ञानस्येति। पदार्थनिर्णयस्येत्यर्थः। परमप्रयोजनं मोक्ष इति। मोक्ष एव परमप्रयोजनमित्यर्थः। मोक्षफलकत्वमुपपादयति। तथाहीत्यादिना। इति श्रुत्येति। इत्याकारकश्रुतेरित्यर्थः। अत्र चाऽऽत्मा द्रष्टव्य इत्यात्म-साक्षात्काररूपमात्मदर्शनमुद्दिश्य तत्साधनतया श्रवणादेर्विधानम्। तथा चाऽग्निहोत्रं जुहोति यवागूं पचति" इति वदर्थक्रमस्य बलवत्वात् श्रवणमन-नादिभिरात्मसाक्षात्कारः कर्तव्य इत्यर्थः पर्यवसितः। श्रवणादीनामिति। श्रवणमनननिदिध्यासनानामित्यर्थः। तत्त्वसाक्षात्कारे। आत्मसाक्षात्कारे। श्रुत्येति। अशरीरं वावसन्तं प्रियाऽप्रिये न स्पृशत इति श्रुत्या "अचक्षुः अश्रोत्रं तदपाणिपादमिति" श्रुत्या चेत्यर्थः देहादिविलक्षणाऽऽत्मज्ञाने सत्यपि। देहेन्द्रियादिभिन्नत्वप्रकारकाऽऽत्मविशेष्यकशाब्दबोधे जातेऽपि। असंभावनानिवृत्तेरिति। अप्रामाण्यज्ञाननिवृत्तेरित्यर्थः। अप्रामाण्यज्ञाना-नास्कन्दितश्रवणस्यैवाऽऽत्मदर्शनोपयोगित्वादिति भावः। युक्त्यनुसन्धान-रूपेति। युक्तिभिरनुचिन्तनरूपेत्यर्थः। मननं च आत्मनः इतरभिन्नत्वेनाऽ-नुमानज्ञानम्। तच्च भेदप्रतियोगीतरज्ञानसाध्यम्। तदर्थं पदार्थनिरूपणम्। पक्षज्ञानार्थमात्मनिरूपणं चेति पदार्थज्ञानाऽभावे मननमेव न संभवती-त्याह। मननोपयोगीति। मननप्रयोजकेत्यर्थः। मोक्षोपयोगित्वम्—

मोक्षफलकत्वम् । तदनन्तरमिति । मननानन्तरमित्यर्थः । निदिध्यासने कृते । श्रावणसमानाकारकाऽनवरताऽऽत्मानुसन्धाने कृते । तदनन्तरं । निदिध्यासनान्तरम् । देहादिविलक्षणाऽऽत्मसाक्षात्कारे सति । देहेन्द्रियादिभिन्नत्वप्रकारकाऽऽत्मविशेष्यकसाक्षात्कारे सति । देहादौ अह-मभिमानरूपेति । देहादिविशेष्यकाऽभेदेनाऽऽत्मप्रकारकभ्रमरूपेत्यर्थः । दोषाऽभावादिति । दोषाश्च रागद्वेषमोहाः । जन्माऽभावे इति । कार्यमात्रं प्रति अदृष्टस्य हेतुत्वादिति । पूर्वधर्माऽधर्मयोरिति । प्रारब्धा-दृष्टस्येत्यर्थः । अनुभवेन । भोगेन । नाशे । नाशानन्तरमित्यर्थः । प्रारब्धस्य भोगैकनाश्यत्वादिति भावः । चरमदुःखध्वंसलक्षणो मोक्षो जायते इति । अत्रेदं बोध्यम् । मुक्तिस्तावत्पञ्चधा । सालोक्य-सारूप्य-सार्ष्टि-सामीप्य-सायुज्य-भेदात् । भगवता सहैकस्मिंल्लोके वैकुण्ठाख्येऽवस्थानं सालोक्यम् । सारूप्यं भगवता सह समानरूपता । सार्ष्टिः भगवदैश्वर्यसमा-नैश्वर्यम् । सामीप्यं भगवतोऽतिसमीपेऽवस्थानम् । सायुज्यं च निर्वाणम् । प्रकृते सायुज्यमेव निःश्रेयसपदार्थः, तस्य चरमदुःखध्वंसरूपत्वादिति ध्येयम् । चरमत्वं च दुःखे तत्वज्ञाननाश्यतावच्छेदकतया सिद्धः स्वसमानाधिकरण-दुःखप्रागभावाधिकरणक्षणावृत्तिदुःखमात्रनिष्ठो दुःखत्वव्याप्यो जातिविशेषः । तत्वज्ञानेनाऽऽहत्य चरमदुःखमुत्पाद्य तद्ध्वंसजननात् । तद्ध्वंसस्य चोत्कटे-च्छाविषयतया तत्साधनत्वेन तत्प्रतियोगिनो दुःखस्याप्युपादेयत्वात् । न च चरमत्वस्य दुःखमात्रवृत्तित्वे पृथक् दुःखपदं व्यर्थम्, चरमध्वंसो मोक्ष इत्य-स्यैव सम्यक्त्वादिति वाच्यम् । दुःखत्वव्याप्या सा जातिरिति बोधनाय तदुपादानादिति ।

दी०—ननु "तत्प्राप्तिहेतुर्विज्ञानं कर्मचोक्तं महामुने" इति कर्मणोपि मोक्षसाधनत्वश्रवणात् ज्ञानकर्मणोः समुच्चय इति चेत् न "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्

---

टि० १ विष्णुपुराणम् । पूर्वार्द्धस्तु तन्मात्रप्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैरिति ।

अभ्यासेन च पाचयेत् । अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः" । इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात्, ज्ञानद्वारैव मोक्षसाधनम्, न साक्षात्, तस्मात् पदार्थज्ञानस्य मोक्षः परमप्रयोजनम् इत्येव रमणीयमिति ।

इति श्रीमदन्नंभट्टोपाध्याय विरचिता तर्कसंग्रहदीपिका समाप्ता ।

गं० —ज्ञानकर्मसमुच्चयवादी शंकते नन्वित्यादिना । तत्प्राप्तिहेतुरिति । मोक्षप्राप्तिहेतुरित्यर्थः । मोक्षहेतुरिति यावत् । विज्ञानमिति । आत्मज्ञानमित्यर्थः । कर्म चेति । नित्यं नैमित्तिकं कर्म चेत्यर्थः । उक्तमिति । जनकादिभिरिति यावत् । इतीति । इत्याकारकव्यासवचनेनेत्यर्थः । कर्मण इति । कर्मणोऽपीत्यर्थः । समुच्चय इति । मुक्तिसाधनमिति शेषः । नित्यनैमित्तिकैरिति । भगवदाराधनादिकर्मणा तीर्थयात्रादिकर्मणा-चेत्यर्थः । दुरितक्षयम् । पापनाशद्वारा चित्तशुद्धिकरमित्यर्थः । ज्ञानद्वारेति । तथा च निष्कामनया भगवत्प्रीत्यर्थं कृतैः कर्मभिः तत्त्वज्ञानप्रतिबन्धकपापक्षये त्विषयेषु वैराग्यम् । ततः श्रवणादिक्रमेण मिथ्याज्ञाननाशात् मुक्तिनिष्पत्तिरिति ।

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥

इति तर्कसंग्रहः समाप्तः ।

न्या०—कणादस्येदं काणादं, काणादन्यायमते इति द्वन्द्वगर्भकर्मधारयः । कणादप्रोक्तगौतमप्रोक्तमतयोरितियावत् । काणादन्यायाऽभिन्नमतद्वयविषयकबालसमवेताऽभिन्नव्युत्पत्तिसिद्धिप्रयोजकाऽन्नंभट्टाभिन्नविद्वन्निष्ठभूतकालीनकृतिविषयाऽभिन्नस्तर्कसंग्रहाख्यग्रन्थ इत्यन्वयबोधः ।

इति श्रीगोवर्द्धनकृता न्यायबोधिनी समाप्ता ।

गं०—द्वन्द्वगर्भकर्मधारय इति । काणादं च न्यायं च काणादन्याये, ते च ते मते च तयोरिति यावत् ।

जनकः प्रभुदत्तः श्रीनाम्नी देवी च मत्प्रसूः
न्यायाचार्यो गुरुर्वामाचरणः शरणं मम १
यत्कृपाकणलाभेन श्रीमद्विश्वेश्वराश्रमे
समाप्तिमगमद् व्याख्या गंगा गङ्गेव निर्मला २

इति महामहोपाध्याय-याज्ञिकमूर्द्धन्य—पं० श्रीप्रभुदत्त शास्त्रिसुत-न्यायाचार्य श्रीशिवदत्तमिश्र गौडविरचिता गंगा नाम्नी व्याख्या समाप्ता ।

शुभं भूयात् ।

